भगवद्बादरायणप्रोक्तोत्तरमीमांसाख्य-

ब्रह्मसूत्रस्य

# शक्तिभाष्यम्

(समूलः प्रथमाध्यायः)

त्यक्त'महामहोपाध्याय' पद-पूत-

नानादर्शन-परमाचार्य-

सर्वतन्त्रस्वतन्त्र-

श्रीपञ्चाननतर्करत्नभट्टाचार्य्य-

विरचितम् ।

कालीघट्टपीठायतनाभिजन-श्रीकालिकाचरणसेवक-भूस्वामि-

श्रीमद्गुरुपद-हालदार-

सरस्वती-शास्त्रसागर-महोदय-प्रदत्तधन-व्ययेन

श्रीश्रीजीवन्यायतीर्थभट्टाचार्य्येण

कालीघाट-समिति-सम्मत्या प्रकाशितम् ।

इण्डियन प्रेस लिमिटेड, बनारस ( ब्रांच )

इत्याख्यमुद्रणालये मुद्राङ्कितम् ।

शकाब्दाः १८५८

प्रकाशकः—
श्रीश्रीजीव न्यायतीर्थ
भट्टाचार्य्यः एम० ए०

*To be had at*
47, HALDARPARA ROAD, KALIGHAT,
CALCUTTA.

मुद्रकः—
श्री अपूर्वकृष्ण वसुः
इण्डियन प्रेस लि०, बनारस ( ब्रांच )

श्रीरामः

# मुखप्रबन्धः

'श्रीविद्यापूजापद्धतिप्रकरणे शाक्तदर्शनपूजोपलभ्यते न पुनरिदानीं शाक्तदर्शनतया प्रसिद्धः कोऽपि ग्रन्थः' इत्येवं चिंताबीजवतः स्वप्नाविर्भूतश्रीमद्दक्षिणकालिका-चरणमात्रोपदिष्टतत्त्वरहस्यस्य मे क्रमेण यत् प्रत्यभात् तस्य प्रथमः प्रसवः सप्तशतीदेवीभाष्यम्, वङ्गाक्षरेण 'वङ्गवासी' यन्त्रालये ( कलिकातानगर्यां ) मुद्राङ्कितम्, द्वितीयः श्रीभगवद्गीतायाः शक्तिभाष्यम्, तृतीयस्त्वेतच्छक्तिभाष्यम्, अत्र शाक्तदर्शनं निरणायि भागद्वयात्मकं मीमांसादर्शनमिति, तस्योत्तरभागस्यायं प्रथमोऽध्यायः। अत्रैव प्रायेण शाक्तमतरहस्यमवतिष्ठते, तत्र च प्रथमपादे समयाचारस्यापि कियदुपदिष्टं विशेषप्रदर्शनाय।

तथाहि, चिदचित्पर्य्याप्त-सत्ताविशेषः शक्तिरिति ब्रह्मेति परमात्मेत्यादिनामभिश्च व्यपदिश्यते। स चैकः। तद्व्याप्याश्च नित्यानित्यभेदभिन्नाः शक्तयोऽनन्ताः। नित्ये पुनर्द्वे एव चिन्मात्राचिन्मात्रभेदात्।

ब्रह्मस्वरूपा शक्तिर्हि साकारा निराकारा च। तया खलु निर्म्माणकायतया साकारत्वं भक्तानुग्रहायाङ्गीक्रियते तदभौतिकमभौतिकगुणकं च। अपिच, श्रुतिस्मृत्यादिविहितं सर्वमेव कर्म्म प्रपञ्चवदेव वास्तवं सत्, कर्त्तृभेदात् फलभेदः।

यस्य कर्म्मणः किमपि क्षयि फलमुक्तं तत्तथाविधकामनावत्-कर्त्रपेक्षया, यस्तु विषयकामनानिरपेक्षः शक्तितत्त्वज्ञानापेक्षी वा तत्-कृपामात्रापेक्षी वा कर्त्ता, तस्य तदेव न क्षयिफलकमपितु मोक्ष-फलकं फलस्य व्यवधानाव्यवधाने अपि कर्त्तृभावसापेक्षे। यदिह मोक्षफलकमित्युक्तं मोक्षस्य फलत्वाभावमभ्युपगच्छद्भिरप्यस्माभिः, तदुपपत्तिर्भाष्यादेवावगन्तव्या। न हि मोक्षो वर्णं वाश्रमं वापेक्षते, तन्निरपेक्षा हि तत्त्वज्ञानसामग्री काचित्। सति सामग्री-समवधाने न खलु किमपि कार्य्यं प्रतिरुध्यते; काचित्तु तदपेक्षा।

तत्त्वज्ञाननिदानं तु महाशक्तेः करुणा, सा च तदुपासना-धीना, उपासनापि तत्करुणा-विशेषफलम्, करुणायाः स्वरूपभेदा-न्नान्योन्याश्रयः, अनवस्था तु बीजाङ्कुरन्यायेन परिहरणीया—इत्यनादिसृष्टिपक्षः। सादिसृष्टिवादः पुनरध्यायान्तरे निवेदयि-ष्यते। उपासनोपदेशमाश्रित्य केचन मन्त्राः सूत्रतः श्रुतिभ्य-श्चोपदर्शिताः तत्र चाक्षरविश्लेषपद्धतिः श्रुत्युपात्तदिशैवाहृता; तथाहि माण्डूक्योपनिषदि—'अवतेष्टिलोपश्च' ( १३६ ) इति पाणिनीयोणादिसूत्रेणाश्लिष्टरूपतया सिद्धस्यापि प्रणवस्य श्लिष्टवर्णत्रयघटितत्वमुक्तमेवमन्यत्रापीति तथाविधदिगनुसरणं नापूर्वकल्पनापदमारोहति। किञ्चैतद् भाष्यत्रयेणोपनिषदां शाक्तव्याख्यानप्रकारो बहुधैव दर्शितः स एवोपायः सर्वेषां शाक्तानामुपनिषदर्थावबोधे, पूर्णतया तद्भाष्यप्रणयनं तु जरतो मृतायुरवशेषेण न कल्पयितुमर्हमिति ततो विरतोऽस्मि मत्-सम्प्रदायस्थः कश्चिदेव देवीकृपाभाजनं पुरस्तात् करिष्यती-त्यप्याशास्यते। एतावदेवेदानीं भाष्यसम्पृक्तं वचनम्।

समर्थि-मतन्तु भाष्यादेवावगन्तव्यम् । अस्य गुणदोषविचाराय विद्वांस एव प्रभवन्ति । यदि मेऽनुचितचापलं तन्मात्रैव सर्वान्तर्य्यामिन्या मर्षणीयं मामकबालकस्येदमिति ।

अत्रावश्यवक्तव्यञ्चान्यत्, एतन्मुद्रणस्य तावानेव व्ययः प्राच्यप्रतीच्यविविधबोध-प्रस्थानपारदृश्वना कलिकाताश्रीकालीघट्टपीठायतनाभिजनेन भूस्वामिना श्रीकालिकामातृश्रीचरणसेवनपरायणेन वदान्यवरेण श्रीमता गुरुपदहालदारसरस्वती-शास्त्रसागर-महोदयेन प्रदत्त इति तस्य सदारापत्यस्य कल्याणपर्य्यायमाशीर्भिरावेदयन्तो वयम्, तत् साफल्यं श्रीश्रीमहाशक्तिमेव भूयोभूयः प्रणम्य प्रार्थयामहे ; इत्यलम् ।

गौडदेशान्तर्गत-भट्टपल्ल्यभिजनस्य
काशीस्थ-श्रीपञ्चाननदेवशर्म्मणः ।

**Introduction by M. M. Gopi Nath Kaviraj, M. A.
Late Principal, Govt. Sanskrit College,
Benares.**

## INTRODUCTORY NOTE,

A survey of the history of Indian Philosophy would show that there are numerous Schools of Vedanta, each representing a particular line of thinking. The extant Brahma Sūtras of Bādarāyaṇa contain references to earlier seers whose views on Ultimate Reality are often found to be divergent. Later on, however, when the older Brahmasūtrās and other works had been lost the Sūtras of Bādarāyaṇa were subjected to a similar treatment by subsequent Commentators. Various interpretations were put upon the Sūtras and each Commentary served as the basis of an independent line of speculation. Besides Śaṅkarāchārya, whose work is undoubtedly the oldest and enjoys the greatest reputation, the names of Bhāskarāchārya, Rāmānuja, Nimbārka, Madhva, Śri-Kaṇṭha, Śrī Kara & Vallabhāchārya are the best known. Baladeva's Govinda Bhāshya and Vijñāna Bhikshu's Vijñānamṛita Bhāshya also claim to have readers Among works which have recently found publicity—probably works of a modern and doubtful origin—the names of Ānanda Bhāshya and Jānākī Bhāshya are worthy of mention. I also once came across a commentary in Ms of the Rādhāvallabhi sect attributed to a writer of Rewa.

The appearance of the present work which undertakes to interpret the Brahma Sūtras from the standpoint

of Śākta Philosophy is a welcome addition to the above list. The author is one of the most distinguished Sanskrit writers of modern India whose services in the cause of Sanskrit Scholarship (philosophical, religious and secular) and of general Indian Culture, as in other spheres, have certainly found recognition in the country. His Commentary is peculiarly interesting and valuable—interesting, because it represents a unique effort to formulate Śakti philosophy on the basis of Vedic authority (specially the Brahmasūtras, the Upanishads & the Gītā), and valuable, because it is a learned and methodical exposition of the Sūtras in keeping with the fundamental metaphysics of Śākta Vedānta evolved by the author himself.

The Śākta system appears to have never yet been incorporated in compendia intended to deal with Indian Philosophy in general. Sanskrit works like Sarvadarśana Saṅgraha, Sarvasiddhānta Saṅgraha, etc have ignored it and modern treatises in English have often very little to say upon it Nevertheless, this school had its own literature and philosophical traditions, which though undoubtedly allied to the other lines of Tantrik thought, were unique in character. The Śakti Sūtrās attributed to Agastya, the Mālinī Vijaya, the Svachhanda Tantra, the Parātriṃśikā, the Tripurārahasya, the Yoginī hṛidaya (with Dipikā and Setubandha), the Mātrikāchakra Viveka, the Kāmakalāvilāsa, the Varivasyārahasya—besides Subhagodaya, Saundaryalaharī, Prapañchasāra, Tantrarāja, etc.—are standard works on Śākta Culture.

The system of thought propounded by the present author is all his own, though it bears upon it a clear

stamp of similarity with some existing schools. It is a form of Monism, but of a different type from the doctrines of Śaṅkara or of the Kashmiran Śaivas. The Supreme Reality for instance is conceived by him as Eternal Being, transcendent in nature and blissful in character and is variously called Mahā Śakti. Mūla Śakti, Para Brahma or Ātma. The Principles of Pure Consciousness or Spirit and of Unconsciousness or Matter—technically known as Śiva or Purusha and Śakti or Prakṛiti—are as it were two distinct (and contradictory) aspects of the same Fundamental Reality related together by an eternal bond.

Prakṛiti, whether pure (Śuddha Vidyā) or impure (Māyā) is subject to evolution, but Purusha is immutable. What is known as Jīva-conciousness is in reality a reflection on the medium of *buddhi*—the first evolute of Prakṛiti—of Śiva Consciousness or Purusha.

The above shows that Brahma or Self, in its original Unity, is neither exclusively spiritual nor exclusively material in character,—it is चिदचिदात्मक। This essence of the Self has to be realised directly in order that there may be freedom for ever from the clutches of Ignorance and the cycle of mundane life of joy and suffering emanating therefrom. It is clear that as the Self is Universal Being, a knowledge of it as a conscious Principle only or as an unconscious Principle only can at best be partial. And it is ignorance, which is knowledge of Self as limited (परिच्छिन्नत्वमात्रबोधश्च मोहः). When the same knowledge gets rid of its limitations and becomes infinite it is converted into Brahmajñāna. The origin of such knowledge leads to a destruction of ignorance and gradually to

a cessation of likes and dislikes, of conative effort and of every form of action. Absence of action is the cause of freedom from birth and from sorrow.

Though the Self is not merely *Chit*, the statement in the Śāstras that it is so is because of the fact that higher aspirants devoted to Formless Brahma through contemplation of Pure Consciousness do proceed to Moksha, for the realisation of Brahma caused by the above contemplation ends in the realization of the Self as infinite and this realisation destroys the sense of limitedness in a Jīva.

Within the limits of this short Note it is hardly possible to attempt a detailed analysis of the contents of this masterly work, far less to enter into its comparison with the āgamic literature. The author has spared no pains to rationalise his position under the auspices of Sacred Scriptures. A systematic study of his views and interpretations in the light of traditional culture will I hope be made in the Introduction when the entire work has come out of the press. In the mean time I can only trust that the reading public interested in Indian philosophical studies will accord a hearty welcome to this brilliant literary enterprise and acquaint itself properly with its creditable achievement. May the learned author be spared long among us to bring to a conclusion his self-imposed task.

*Benares.* GOPINATH KAVIRAJ.

# उत्तरमीमांसाख्य-

# ब्रह्मसूत्रशक्तिभाष्यस्य

## विषयानुक्रमणिका

इति प्रथमेऽध्याये स्वरूपपरीक्षणं नाम चतुर्थपादः ।

समाप्तो निरूपणाख्यप्रथमाध्यायश्च ।

---

॥ श्रीविश्वेश्वरो विजयतेतराम् ॥

# ब्रह्मसूत्र-शक्तिभाष्यम् ।

## तत्र मङ्गलाचरणम् ।

या नित्या श्रुतिशीर्षदर्शिततनुर्ब्रह्मा यदाद्यप्रजा
विश्वेषां जननस्थिती विदधती मातेति या गीयते ।
अङ्के सुप्तमिवात्मजं वहति या कल्पावसन्नं जगत्
तां दुर्गां चिदचिन्मयीं परतरानन्दाय वन्दामहे ॥१॥

नमामो गौतमव्यासौ गोत्रसूत्रप्रवर्त्तकौ ।
शङ्कराचार्यगङ्गेशोपाध्यायादींश्च सद्गुरून् ॥ २ ॥

यच्छारीरकसूत्रजातमनघैराचार्यमुख्यैश्चिराद्-
व्याख्यातं बहुधोपदेश्य-धिषणा-वैशद्य-संसिद्धये ।
श्रीपञ्चाननशर्मणाखिलजगन्मातुः कृपाकाङ्क्षिणा
तस्याधिश्रुति शक्तिभाष्यमधुना व्यक्तार्थमातन्यते ॥३॥

उपनिषदुपगूढं मन्त्रशास्त्रेषु रूढं
मुनिवचनसमूढं नित्यविभ्रष्टमूढम् ।
समयिमतविशिष्टं यत् सुधास्वादमिष्टं
तदिह जगदभीष्टं शक्तितत्त्वं प्रदिष्टम् ॥ ४ ॥

तदेतच्छास्त्रतत्त्वार्थविचारैः साधनाश्रयैः ।
अरुणाकरुणालाभादिच्छामि कृतकृत्यताम् ॥ ५ ॥

---

## उपोद्घातः ।

**चातुराश्रम्यमैकाश्रम्यं वा, द्वयोः प्राप्तेः, मोक्षश्चैवम् ।**

भवति खलु चातुराश्रम्यमैकाश्रम्यं वा तथैव गौतमादिभिः स्मरणात्। यावज्जीवमग्निहोत्रं जुहोतीति प्रत्यक्षविधानाद् गार्हस्थ्येनैवैकाश्रम्यमाख्यायते ।

नन्वेवं स्वाध्यायोऽध्येतव्य इत्यादि श्रुतिविरोधो ब्रह्मचर्य्यस्यैवासिद्धेरिति चेन्न, गार्हस्थ्यपूर्व्वाङ्गतया ब्रह्मचर्य्यस्याभ्युपगमाद् नत्वाश्रमान्तरत्वेन । न चैवमनिर्म्मोक्षः, प्रवृत्तितन्त्रे गार्हस्थ्ये निवृत्तितन्त्रस्य तत्त्वज्ञानस्योत्पत्त्यसम्भवात्; इति शङ्कनीयम्, सात्त्विककर्म्मणो ज्ञानहेतु-चित्तशुद्धिसाधकतया तत्र ज्ञानोत्पत्तौ बाधकाभावात् ।

काम्यानां कर्म्मणां न्यासं सन्न्यासं कवयो विदुः ।
सर्व्वकर्म्मफलत्यागं प्राहुस्त्यागं विचक्षणा ॥

इति गीतोक्तसन्न्यासस्यैकाश्रम्यपक्षेऽपि गार्हस्थ्यचरमदशायां सम्भवेन तत्र ज्ञानपरिपाकाच्च मुक्तिसिद्धेरप्रत्यूहत्वात्। न चैवं 'ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसंभवन्ति' इत्यादि (छान्दोग्य० ५।२०) श्रुत्या गृहीतरेषां क्रममुक्तिः, 'अथ य इमे इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसंभवन्ति' इति (छान्दोग्य० ५।२०) श्रुत्या ग्रामशब्दोपलक्षितगृहिणां पुनर्ज्जन्मप्रतिपादनमत्र प्रत्यक्षविरुद्धे इति

वाच्यम्, अत्रारण्यग्रामयोः प्राधान्याभावात् । ननु भवत्वेवं प्राधान्यं स्वपदेनोपादानादिति चेन्न, उपविश्यमानयोः क्रिययोः प्राधान्यात् । ते हि मिथो भिद्येते 'श्रद्धातप इत्युपासते' इति 'इष्टापूर्ते दत्तमित्युपासते' इति च । ततश्च फलभेदः, यदि ग्राम एव श्रद्धातप इत्युपासीरंस्तेषामपि क्रममुक्तेरभ्युपगन्तव्यत्वात्, न हि कारणसंवलने कार्य्यं व्याहन्यते, ये चारण्ये इष्टापूर्ते दत्तमित्युपासीरंस्तेषां भूयो जन्म केन प्रतिरुध्येत ।

ननु कारणसंवलनमात्राधीना न कार्य्यनिष्पत्तिः, किन्तु सामग्रीसंवलनमात्राधीना; सामग्रीकोटौ च प्रव्रज्याया अपि प्रवेशात् तदभावे कथं मुक्तिरिति चेन्न, तृतीयाध्याये चतुर्थपादे प्रथमसूत्रमुपक्रम्य गृहिणोऽपि मुक्तेः सूत्रत एव प्रतिपादयिष्यमाणत्वाद् गृहस्थोऽपि हि मुच्यत इति मनुस्मरणाच्च, एवंनाम गृहिणः प्रवृत्तिधर्म्माणो निवृत्तिधर्म्माणश्चेति द्विविधा भवन्ति ।

न चैवमप्यैकाश्रम्यपक्षे भिक्षाचर्य्यां चरन्तीति श्रुतिव्याकोपः, अस्मादौ स्वत्वाभिमानत्यागेन भिक्षातुल्यत्वप्रतीतेरेव भिक्षाचर्य्यां चरन्तीत्यनेन बोधनात्, अन्यथा भिक्षां चरन्तीत्येवोच्येत; पुत्रैश्वर्य्ये सुखं वसेदिति मनुस्मृत्या गृहिणः स्वत्वाभिमानत्यागप्रकारस्य सूचितत्वाच्च । चातुराश्रम्यपक्षे च प्रवृत्तिधर्म्माणो गृहिणः, विरक्तानां प्रव्रज्याविधानात् निवृत्तिधर्म्माणश्च भिक्षवः; तेषां हिताय भगवान् श्रीशङ्कराचार्यो ब्रह्मसूत्राणां नित्यैकविज्ञानमात्रपरतया शारीरकभाष्यमारचयाम्बभूव । यतः सौगता भिक्षुभावापन्नाः शून्यं वा क्षणिकविज्ञानमात्रं वा प्रतिपद्यमानास्तथैव स्वीयाद्वैतवादमुद्घोषयामासुः यथा तन्मतं सत्यमिति

मन्यमानाः केचन विद्वांसो ब्राह्मणा अपि तन्मतपक्षपातिनोऽभूवन् । तेषां भ्रान्तिः शारीरकभाष्येण निराकृता । तैरेव भगवद्भिराचार्य्यचरणैर्गृहिसाधारणमोक्षमार्गोपदेशश्च प्रपञ्चसारे योऽसौ सप्रसादं सप्रयोगं सरहस्यश्चोक्तः, आनन्दलहरीति गौडमण्डलप्रसिद्धायां सौन्दर्य्यलहर्य्यां यस्य चाभ्यर्हणं तमेव विभिन्नप्रस्थानं शक्तिवादमाश्रित्यास्माभिरेतद्व्याख्यानमुपक्रम्यते । अत्र समयिमतरहस्यनिवेदनाय प्रथमाध्यायप्रथमपादसूत्राणि तत्परतया च विशेषतः सङ्क्रमयिष्यन्ते ।

इदं पुनरिहावधेयम्—भगवद्भिराचार्य्यपादैः सन्न्यासिनामवबोधाय यद् ब्रह्मसूत्रव्याख्यानमारचितं, शक्तिभाष्येऽस्मिन् तद्विरुद्धवादमूयिष्ठेऽपि तेषां श्रीमदाचार्य्यचरणानां मतविरोधित्वं नास्ति । लोकोत्तरा हि गुरवो विनेयाधिकारमनुरुन्धानाः प्रवर्त्तन्ते देशनायै । न च तेषामेकतरमतपक्षपातः । तद् यथा भगवान् वेदव्यासो वैष्णवपुराणेषु श्रीविष्णोः सर्व्वाधिक्यमाह, तथा शैवेषु पुराणेषु श्रीशिवस्यापि, तस्य तस्य च ज्ञानमुपादानञ्चाधिकारभेदेन भवति । यदि कश्चिद् वैष्णवो विष्णुपुराणमवलम्ब्य श्रीविष्णोः सर्व्वाधिक्यं ब्रूयात् शैवो वा श्रीशिवस्य, न हि तयोर्व्वेदव्यासमतपरिपन्थित्वं भवति सत्यपि पुराणविशेषमतप्रत्यवस्थाने ।

दृश्यतेऽपि श्रीमदाचार्य्यपादानामुपनिषद्भाष्यशारीरकभाष्ययोरेवं विरोधः, तत्समाधानन्तु शिष्यबुद्धिभेदप्रयुक्तोपदेशभेदात् सम्भावनीयम् । दिङ्मात्रमुदाह्रियते—

ज्योतिश्चरणाभिधानादिति (१।१।२४) सूत्रभाष्ये 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्युपक्रम्य संशयपूर्व्वपक्षानन्तरं सिद्धान्तः

"ज्योतिरिह ब्रह्म ग्राह्यं कुतश्चरणाभिधानात्, पादाभिधानादित्यर्थः, पूर्व्वस्मिन् पक्षे चतुष्पाद् ब्रह्म निर्दिष्टम्, तावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य सर्व्वा भूतानि त्रिपादस्यामृतं दिवि (छा० ३।१२।६) इत्यनेन मन्त्रेण। तत्र यच्चतुष्पादो ब्रह्मणस्त्रिपादमृतं द्युसम्बन्धिरूपं निर्दिष्टं तदेवेह द्युसम्बन्धान्निर्दिष्टमिति प्रत्यभिज्ञायते" इति। छान्दोग्योपनिषद्भाष्ये तु 'त्रिपादमृतं पुरुषाख्यं समस्तस्य गायत्र्यात्मनो दिवि द्योतनवति स्वात्मन्यवस्थितम्' इति 'अतोऽमुष्माद् द्युलोकात् परः परमिति लिङ्गव्यत्ययेन ज्योतिर्दीप्यते' इति च। अत्र हि अमृते द्युसम्बन्धित्वं ज्योतिषि द्युसम्बन्धित्वञ्च नैकं, द्युशब्दस्य द्वयोर्भाष्ययोरर्थभेदेन ग्रहणात्; तत्कथं द्युसम्बन्धेन त्रिपादमृतस्य ज्योतिषश्च समार्थकत्वम्। नचात्र द्युशब्दसम्बन्धित्वमात्रं विवक्षितं, तथा सति उपदेशभेदान्नेति चेदिति सूत्रभाष्यं नोपपद्येत। तद्यथा—'दिवीति सप्तम्या द्यौरधिकरणत्वेन निर्दिष्टा पुनः अथ यदतः परो दिवो ज्योतिरिति पञ्चम्या मर्य्यादात्वेन।' यदि द्युशब्दस्यार्थभेदः स्यात्, प्रकृतिभूतस्य तस्य परित्यागेन विभक्तिभेदतदर्थभेदग्रहणं नोपयुज्येत। अपि च तत्रैवाधिकरणे 'भूतादिपादव्यपदेशोपपत्तेश्चैवम्' इति सूत्रभाष्यसन्दर्भः—"पूर्व्वस्मिन् वाक्ये प्रकृतं ब्रह्म ततो भूतादीन् पादान् व्यपदिशति। भूतपृथिवीशरीरहृदयानि हि निर्दिश्याह 'सैषा चतुष्पदा षड्विधा गायत्री' (छा० ३।१२) इति, नहि ब्रह्मानाश्रयणे केवलस्य छन्दसो भूतादयः पादा उपपद्यन्ते" इत्यन्तः। अत्र छान्दोग्यभाष्यसन्दर्भस्तु "सैषा चतुष्पदा षडक्षरपदा छन्दोरूपा सती भवति चतुष्पदा, षड्विधा वाग्भूतपृथिवीशरीरहृदयप्राणरूपा"

तत्र भूतादयो न चत्वारः पादाः, किन्तु गायत्र्याः षट्षडक्षराणि । भूतादिचतुष्टयं वाक्प्राणसहितं गायत्र्या विधाषट्कतया गणितम् । इति वैलक्षण्यम् । अन्यच्च तृतीयाध्यायचतुर्थपादे अनाविष्काराधिकरणे (बाल्याधिकरणे) 'बाल्येन तिष्ठासेद् (बृ० ३।५।१) इति बाल्यमनुष्ठेयतया श्रूयते, तत्र बालस्य भावः कर्म्म वा बाल्यम् इति भाष्यसन्दर्भः। उपनिषद्भाष्यसन्दर्भस्तु 'ज्ञानबलभावेन बाल्येन तिष्ठासेत् स्थातुमिच्छेत् । साधनफलाश्रयणं बलमितरेषामनात्मविदाम् । तद्बलं हित्वा विद्वान् असाधनफलस्वरूपात्मविज्ञानमेव बलं तद्भावमेव केवलमाश्रयेद्' इति । अत्र सर्व्वत्रैवोपनिषद्भाष्यानुसरणे सूत्राश्रितमधिकरणं नोपपद्यते। तस्माच्छिष्यजिज्ञासातदधिकारभेदानुबन्धी तावद्वयं व्याख्याभेदः स्वयमाचार्य्यपादकर्तृकोऽपि दृश्यते । एवमिह शक्तिभाष्ये प्रपञ्चसारादिविदितमाचार्य्याशयं क्वचिद् व्यक्तं क्वचिन्निगूढञ्च शारीरकभाष्यविषमार्थभूयिष्ठं विवरीतुमियमस्माकं प्रवृत्तिः ।

सूचितं हि प्रवृत्तिधर्म्माणो निवृत्तिधर्म्माणश्चेति द्विविधा भवन्त्याश्रमिण इति, तत्र प्रवृत्तिधर्म्मिणां पूर्व्वमीमांसा निवृत्तिधर्म्मिणाञ्चोत्तरमीमांसा श्रौतसिद्धान्तप्रदर्शनायेतिविभिन्नकर्तृकं भागद्वयं द्विदर्शनीत्वेन प्रसिद्धमपि विद्यागणनायां भगवता योगीश्वरेणान्यैरपि महर्षिभिरेकेनैव मीमांसात्वेनोदलेखि । तत्रैकं वचनम्—

पुराणन्यायमीमांसाधर्म्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्म्मस्य च चतुर्दश ॥

( इति याज्ञ० १।७ )

अपरञ्च—

> अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
> धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश ॥
>
> ( इति विष्णु० )

तत्र भागद्वयं शक्तिपरम् । यथाचेदं तथोपरिष्टादुपपादयिष्यते । तत्र पूर्वमीमांसाप्रदर्शितदिशा कायिकवाचिककर्म्मप्रधानोपासनया विषयान्तरव्यावृत्तिसंस्कृतमनसः शोधितायां प्रवृत्तौ निर्म्मला निवृत्तिरुज्जृम्भते यत्र विषयदोषदर्शनद्वेषकालुष्यं नावस्थातुमलं भवति ।

**शक्तिप्रसादजो निवृत्तानां मोक्षः, भोगश्चानिवृत्तानाम् ।**

नन्विदमयुक्तं द्वेषप्रभवत्वान्निवृत्तेरिति चेन्न, निवृत्तेर्द्वैविध्यात् । द्विविधा हि निवृत्तिर्द्वेषप्रभवा महाशक्तिकरुणाप्रभवा चेति । आद्या तावन्निवृत्तिः प्रवृत्तिपक्षे निविशते रागवद् द्वेषस्यापि दोषत्वात् ।

न च मोक्षरागवद् विषयद्वेषस्यापि न दोषत्वं प्रवृत्त्यहेतुत्वाद् इति वाच्यं, मुमुक्षोरपि श्रवणादौ प्रवृत्तिदर्शनाद्, गुरुगृहगमननिवृत्तिहेतुगुरुद्वेषस्यापि दोषत्वाभावप्रसङ्गाच्च । न चैवं विषयद्वेषस्येव मोक्षरागस्यापि दोषत्वं प्रसज्येत, प्रसज्यतां नाम महाशक्तिकरुणाविरहितानाम् । तत् करुणाभाजनस्य तु मोक्षरागो वा विषयद्वेषो वा न दोषत्वं भजते रागद्वेषान्तरवत्तयोः राजसवृत्तित्वाभावात् ।

एतेनैतदुक्तं भवति-द्विविधौ हि रागद्वेषौ महाशक्तिकरुणाविघटितसामग्रीजन्यौ तद्घटितसामग्रीजन्यौ च । तत्राद्यौ दोषात्मानौ बन्धाय प्रभवतः, द्वितीयौ च महाशक्तिविभूतिरूपौ मोक्षायापि कल्पेते । विशेषश्चायं यदाद्योत्पत्तिकाले दोषात्मानावपि रागद्वेषौ

याभ्यां प्रवृत्तिनिवृत्तिभ्यां परिच्छिन्नौ महाशक्तिकरुणालाभानुकूलौ भवतः, ते तु न हेये । तद्द्वारकत्वाभ्युदयः कर्म्मकाण्डवेदार्थः । तदनुगुणधर्मनिरूपणतत्साधनद्रव्यदेवतामन्त्रादिविचारपरा च पूर्व्वमीमांसा, यस्या धर्म्ममीमांसेति संज्ञान्तरम् । धर्म्मादयश्च महाशक्तिविभूतिरूपाः खण्डशक्तयः । ताश्चातिशयापूर्व्वसंस्कारादिनामभिरपि व्यपदिष्टाः । व्रीहीन् प्रोक्षति, व्रीहीनवहन्तीत्यादिश्रुतिविहितप्रोक्षणावघातादिना यज्ञियद्रव्येषु शक्तिविशेषः सम्पद्यते । कारणभावानुगमे ब्रह्मस्वरूपस्य यज्ञसाधनस्य च वह्नेः सप्त शक्तयः सप्तजिह्वात्वेन श्रुतावुक्ताः । "काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा स्फुलिङ्गिनी विश्वरुची च," इति ( मुण्ड० १।२।४ ) काली = संहरणशक्तिर्दाहिकाशक्तिरिति प्रथिता, कराली = भयजननशक्तिः, मनोजवा = वैद्युती शक्तिः, सुलोहिता = मृदादेर्लौहित्यहेतुशक्तिः, सुधूम्रवर्णा = धूमोद्गारिणी शक्तिः, स्फुलिङ्गिनी = स्फुलिङ्गनिर्व्वर्त्तिनी शक्तिः, विश्वरुची = निखिलप्रकाशशक्तिर्विश्वप्रीणनी शक्तिर्वेति वह्नेः शक्त्यन्तराणि आस्वेवान्तर्भूतानि । एवं खण्डशक्तीनां हि बह्वीभिर्विधाभिरुपदेशः कर्म्मकाण्डवेदभागे वर्त्तते । तासु च कियतीनां विचारो धर्म्ममीमांसायाम् । तासां सर्व्वासां नियन्त्री शक्तिस्तु महाशक्तिरिति विशेषावबोधाय यास्माभिर्व्यपदिष्टा सा तत्र न विचारिता । उत्तरमीमांसा हि तद्विचारतदुपासनवैचित्र्यप्रदर्शनी । एवं मीमांसायाः पूर्व्वोत्तरभागयोः समावेशः ।

अथैतयोर्योजकविचारः क्रियते । सा हि पूर्व्वमीमांसा जैमिनीया द्वादशाध्यायी भट्टकुमारिलादिकृतप्रपञ्चा विद्यते । तदन्तिमाधिकरणे ब्राह्मणस्यैवार्त्विज्यं व्यवास्थापि । तदुत्तरत्वाद्देयमुत्तरमी-

मांसा वैयासिकी चतुरध्यायी । चतुरध्यायीसङ्कर्षणकाण्डन्तु न जैमिनीयं न वा वैयासिकमिति नास्य मीमांसावान्तर्भावः, किन्तु न्यायविस्तरे । इत्थञ्च मुनिना पतञ्जलिना कृतं योगदर्शनमिव मुनिना सङ्कर्षणेनोपदिष्टं दर्शनान्तरम् । न चैवं दर्शनसप्तकापत्तिः, योगदर्शनसाधारणवेदमध्यमकाण्डाश्रितदर्शनत्वेन विभज्यतया संख्याधिक्यव्युदासात्, तदुक्तं शङ्करदिग्विजये श्रीमाधवाचार्य्यैः—

मम गूढाशयविदौ विष्णुशेषौ समीपगौ ।
मध्यमं काण्डमुद्धर्त्तुमनुज्ञातौ मयैव तौ ॥
अवतीर्य्यांशतो भूमौ सङ्कर्षणपतञ्जली ।
मुनी भूत्वा मुदोपास्तियोगकाण्डकृतौ स्थितौ ॥
अग्रिमं ज्ञानकाण्डन्तूद्धरिष्यामीति देवताः ।
सम्प्रति प्रतिजाने स्म जानात्येव भवानपि ॥
जैमिनीयनयाम्भोधेः शरत्पर्व्वशशो भव ।
विशिष्टकर्मकाण्डं त्वमुद्धर ब्रह्मणः कृते ॥
सुब्रह्मण्य इति ख्यातिं गमिष्यसि ततोऽधुना ।
इति कार्त्तिकेयं प्रति शिववचनम् ॥

( शं० दि० १।५०।१५ )

तस्माद् द्विमुनीदं मीमांसादर्शनं, तच्च मिलितं षोडशाध्यायं भवति । तयोरेकशास्त्रत्वं सङ्गतिश्च तयोरेव, तथाहि 'स्मृतेर्वा स्याद् ब्राह्मणानाम्' इति सूत्रस्थो ब्राह्मणशब्दो ब्राह्मण्यं जातिविशेषं ब्रह्म जानातीति समाख्यया चान्यं ब्रह्मपदार्थमुपस्थापयति । अयं ब्रह्मपदार्थो द्विविधो वेदः परमात्मा च । अन्तिमं हि महाशक्तिरिति ब्रूमहे । 'ब्राह्मणानाम्' इति षष्ठीप्रकृत्यर्थावच्छेदकं ब्राह्मणत्वं जातिः, वेदज्ञत्वं,

परमात्मज्ञानञ्चेति त्रयम् । ब्राह्मणानामिति बहुवचनप्रयोगस्तादृशब्राह्मणस्यर्थावच्छेदकत्रयलाभाय । बहुवचनस्य कपिञ्जलाधिकरणन्यायेन त्रित्वपरत्वात् । अन्यथा बहुवचननिर्देशो नोपपद्यते । नहि सम्भवति ब्राह्मणसामान्यस्यार्त्विज्यम्; पतितादिषु, अनृत्विक्षु, अपरविद्वत्सु च व्यभिचारात् । नापि ब्राह्मणव्यक्तित्रयस्यार्त्विज्यमत्र विवक्षितम्, सत्रे सप्तदशावराणामृत्विजां विधानात् । अत उक्तधर्म्मत्रयवत आर्त्विज्यमनुमतमृषिवर्य्यस्य, सूत्रे स्मृतेरित्युपादानात्, जात्या ब्राह्मणस्यार्त्विज्यसमर्थस्यार्त्विज्यं सामान्यतः स्मृत्यनुमोदितं, विशेषतश्च धर्म्मत्रयवतः श्रुतिस्मृतिभ्यामेकवाक्यतापन्नाभ्यामवगम्यते, यथा—

अध्यापनमध्ययनं यजनं याजनन्तथा ।
दानं प्रतिग्रहश्चैव षट् कर्म्माण्यग्रजन्मनः ॥ इति
योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥

इति च मनुः स्मरति ।

श्रूयते च यदेव विद्यया करोति श्रद्धयोपनिषदा च तदेव वीर्य्यवत्तरं भवतीति ( छान्दो० १।१।१० ) यो वा एतदक्षरं गार्ग्यविदित्वास्मिन् लोके जुहोति, यजते, तपस्तप्यते बहूनि वर्षसहस्राणि, अन्तवदेवास्य तद्भवतीति च ( बृ० ३।८ २० ) ।

स्मरति च श्रीभगवान् गीतायां, तद्यथा—

यावानर्थ उदपाने सर्व्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ इति

भवति च ब्राह्मणत्वजातिं वेदज्ञत्वञ्च बुध्यमानस्यान्तिमाधि-

करणं पठितवतः शिष्यस्य विभक्त्यर्थभिन्नान्वयानुपपत्त्या ब्रह्मपदा-र्थान्तरगोचरा जिज्ञासा, कोऽसावन्यो ब्रह्मपदार्थ इत्याकारा जुम्भते । तन्निवृत्तये चात्र ब्रह्मनिरूपणमिति पूर्व्वमीमांसान्तिमाधिकरणसू-त्रोत्थाप्यजिज्ञासानिवर्त्तिकोत्तरमीमांसेति द्वयोर्योजनम् । मतान्तरे तु अथातो धर्म्मजिज्ञासेत्यादिद्वादशाध्यायी तथा सङ्कर्षणकाण्ड-तया परैरुच्यमाना सङ्कर्षकाण्डलक्षणा चतुरध्यायीति षोडशा-ध्यायी पूर्व्वमीमांसा भवति, सा च जैमिनिनैव प्रणीतेत्येके, इतस्ततः श्रुतीः समाकृष्य रचितेति सङ्कर्षकाण्डमित्युच्यते । उत्तरमीमांसा त्वेषैव बादरायणीया, तथा च मीमांसाशास्त्रं विंशत्यध्यायात्मकमेकमेव । षोडशाध्यायान्तिमसूत्रस्य पदावृत्तिः पूर्व्वभागसमाप्तिं, ब्रह्ममीमांसाया अन्तिमसूत्रस्य कात्स्न्र्येनावृत्ति-स्तु शास्त्रसमाप्तिं सूचयति, शास्त्रभेदे तूभयत्रैव पदावृत्तिः सूत्रा-वृत्तिर्वा स्यात्, नतु प्रदर्शितप्रकारभेदेन । सत्येवं षोडशाध्यायस्या-न्तिमाद् 'याज्या सम्प्रैष' सूत्रादृत्विग्विशेषाध्वर्य्योरुपस्थितौ तत्स-म्बन्धितया ब्राह्मणानामार्त्विज्यसूत्रस्मरणात् प्रागुक्तयुक्त्या जाय-माना ब्रह्मजिज्ञासा उत्तरमीमांसया निवर्त्तते । ततश्चैकशास्त्रत्वं, सङ्ग-तिश्चानयोर्नान्यथाभावमापद्येते ।

ननु साक्षाद् द्वादशाध्याय्यन्तिमसूत्राच्च तदानीं ब्रह्मजिज्ञासा, परम्परया तत्सूत्रस्मरणाच्चेदानीं ब्रह्मजिज्ञासेति महदसमञ्जसमिति चेन्न, इच्छाघटितया बलवत्योपासनजिज्ञासासामग्र्या प्रतिबन्धात्त-दानीं तदनुदयेऽपि प्रतिबन्धकाभावेनेदानीं तदुदये बाधकाभावात् ।

अत्र श्रीचक्रविदः समयिनस्तु सङ्कर्षकाण्डस्योपासनापरत्वात्, तत्प्रसङ्गेन प्रधानोपासनोपदेशायोत्तरमीमांसोपदेश इति वदन्ति ।

प्राचस्तु श्रुतेः पूर्वभागः कर्म्मकाण्डं, ज्ञानकाण्डन्तूत्तरभागः, अत एव तस्य वेदान्त इति संज्ञा, तत्र तत्र श्रुतिपूर्व्वभागावलम्बना पूर्व्वमीमांसोत्तरभागावलम्बनोत्तरमीमांसेति ब्रुवन्ति, वेदनित्यत्ववादिनो वेदपूर्व्वोत्तरभागत्वमध्ययनक्रियानुरोधेनेत्याहुः ।

ननूत्तरभागस्याप्युपासनाप्रधानत्वादुपासनायाश्च कर्म्मविशेषरूपत्वात् कथं कर्म्मकाण्डाद् भेद इति चेन्न, ब्रह्मज्ञानसापेक्षत्वानपेक्षत्वाभ्यां तयोर्भेदाद् ब्रह्मज्ञानस्य मोक्षहेतुताप्रतिपादनेन उत्तरभागस्य तत्प्रतिपादकवेदभागतो भेदात्, ज्ञानकाण्डतया प्रसिद्धेश्च ।

इत्युपोद्घातः ।

---

## अथ प्रकृतम् ।

तदनयोर्भागयोः सङ्गतिप्रदर्शनमुखेनाधिकारिप्रयोजनाभिधेयसम्बन्धान् सूचयन् भगवान् बादरायणः प्रतिजानीते ।

( प्रतिज्ञाधिकरणं ब्रह्मजिज्ञासाधिकरणं वा )

### अथातो ब्रह्मजिज्ञासा । १।१।१

अत्र चत्वारि पदानि समासविरहितानि । तत्र प्रथमप्रयुक्तः अथेत्ययमव्ययशब्दोऽन्यार्थोपनीयमानोदकुम्भवन्माङ्गलिकः ।

ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ ॥

( इति स्मृतेः )

अर्थश्चास्यानन्तर्य्यम् । तच्च स्वशिष्यजैमिनिकृतपूर्व्वमीमांसा-

पेक्षम्। तदुत्तरत्वे सति तदन्तिमाधिकरणोपस्थापितानन्तर्य्यनिरू-
पकत्वरूपम्। अन्तिमाधिकरणमात्रं पठितवतो ब्राह्मणस्य कृति-
भूतब्रह्मपदोपस्थापितवेदसम्बन्धित्वेन स्मृतस्य तदर्थानुष्ठान-
साधनजिज्ञासानिवर्त्तकत्वेन वेदार्थविचारात्मकाधिकरणस्य पूर्व्वमीमां-
सान्तिमाधिकरणानन्तर्य्यवारणाय सम्बन्धदलम्। उदासीने घटप-
टादिनिरूपणे तदानन्तर्य्यवारणाय विशेष्यदलम्। कादम्बर्य्युत्तर-
भागे कादम्बरीपूर्व्वभागानन्तर्य्यमनयैव दिशा सम्पाद्यम्। तदुत्तर-
त्वञ्च तच्चरमवाक्यरचनाध्वंसाधिकरणक्षणवृत्तित्वम्। 'अतः'—
बुद्ध्या सन्निकृष्टात् स्मृतेर्वा स्याद् ब्राह्मणानामिति षष्ठीबहुवचनान्त-
ब्राह्मणशब्दात्, पञ्चम्यर्थः प्रयोज्यत्वं जिज्ञासापदार्थान्वितम्।
जिज्ञासाशब्दः कर्म्मण्यप्रत्ययात् सिद्धः, जिज्ञासाविषय इति तदर्थः।
कृदभिहितभावो द्रव्यवत् प्रकाशत इति न्यायाद् 'या सृष्टिः स्रष्टु-
राद्या'—इत्यत्र सृष्टिशब्दवद् भाववाचिनोऽपि वा जिज्ञासाशब्दस्य
तत्कर्म्मबोधकत्वम। अत्रापि कल्पे जिज्ञासाविषय एवार्थः। तस्य
ब्रह्मपदार्थेऽन्वयो निरूप्यत इति वाक्यशेषः। 'अथ ब्रह्मचारिधर्म्माः'
इत्यादि स्मृतिषु निरूपणक्रियावाचकपदाध्याहारस्य प्रसिद्धेः, ततश्च
'स्मृतेर्वा स्याद् ब्राह्मणानाम्' इतिसूत्रस्थबहुवचनान्तब्राह्मणशब्द-
प्रयोज्यजिज्ञासाविषयो ब्रह्म पूर्व्वमीमांसानन्तरं निरूप्यत इति
वाक्यार्थः पर्य्यवसितः। अत्र चोद्यमुत्तिष्ठते, तथाहि एकमेवाद्वितीय-
मिति वक्ष्यमाणब्रह्मस्वरूपमवगच्छतः कर्त्तृकरणक्रियादिभेदधीसापे-
क्षस्यार्त्विज्यस्यासम्भवात्तादृग् ब्रह्मज्ञो ब्राह्मणानामार्त्विज्याधिकरणे
ग्रहीतुं न शक्यते, किन्तु वेदज्ञ एव गृहीतो ब्रह्मशब्दस्य वेदार्थत्वा-
दिति चेत्, न, वेदान्तप्रतिपाद्यब्रह्मज्ञानवतामुषस्तिचाक्रायणादीना-

मार्त्विज्यप्रशस्तिश्रवणात्। ब्रह्मप्रवरस्य भगवतो याज्ञवल्क्यस्य राजर्षिजनकाद् गोपरिग्रहादिलक्षणभेदज्ञानसापेक्षकर्म्मकर्तृत्वश्रुतेर-विदिवब्राह्मणो हवनादेरन्तवत्फलकत्वस्य ब्रह्मविदुषो हवनादेरनन्त-फलकत्वस्य च प्रदर्शितश्रुत्योपपादितत्वाच्च।

न च भेदधीबाधकब्रह्मज्ञानं भेदज्ञानसापेक्षार्त्विज्यं विरुणद्धीत्येव युक्तमिति शङ्कनीयं, ब्रह्मज्ञानस्य परोक्षापरोक्षभेदेन द्वैविध्यादपरोक्षज्ञानस्यापि अविद्यासंस्कारानुवेधतदननुवेधाभ्यां द्वैविध्याच्च। ब्रह्मज्ञानं यावदपरोक्षं न भवति तावत्तेन भेदापरोक्षज्ञानस्यानिवृत्तेः, अविद्यासंस्कारानुवेधे च सुखावस्थायां दुःखस्य स्मृतेरिव स्वाप्नज्ञानस्येव वा भेदज्ञानस्य सम्भवाच्चार्त्वि-ज्योपपत्तेः। एतेन पूर्व्वोत्तरमीमांसयोरुपोद्घातः, प्रसङ्गो वा, सङ्गतिरुपदर्शिता।

एवञ्च यद्ब्रह्मज्ञानवतः श्रेष्ठमार्त्विज्यं वेदज्ञाप्रजन्मनो भवति तदेव ब्रह्म जिज्ञासितम्। तस्य च निरूपणमुत्तरमीमांसायामिति शास्त्रे नासङ्गतं प्रयुञ्जीतेति निषेधोल्लङ्घनशङ्का निराकृता।

यद्वा शिष्यावधानायोत्तरभागारम्भप्रतिज्ञासूत्रमिदमत्र त्रीण्येव पदानि। प्रथममथेत्यव्ययपदमारम्भार्थकम्। माङ्गलिकञ्च पूर्व्ववत्। 'अतः' इति द्वितीयपदमेतत् सूत्रादित्यर्थकम्। ब्रह्मजिज्ञासेति तृतीयं पदं ब्रह्मणो जिज्ञासेति षष्ठीतत्पुरुषसमासात्। तदर्थञ्च ब्रह्मजिज्ञा-सामधिकृत्य कृतं शास्त्रमित्युपचाराद् यथा यवक्रीतं, यथावा शारीरकं भाष्यमिति। शारीरकादिव्याख्यायामपि जिज्ञासापदस्य जिज्ञासितव्यमित्यर्थे लक्षणायाः कर्त्तव्येत्यध्याहारस्य वाभ्यु-पगन्तव्यत्वात्। एतत्सूत्राद् ब्रह्मजिज्ञासाधिकृतशास्त्रमारभ्यते इति

समुदितवाक्यार्थः । अत्र ब्रह्मजिज्ञासेत्यनेन पूर्वमीमांसया सङ्गतिः सूचिता । पूर्वमीमांसाधिकरणस्याथातोधर्मजिज्ञासेत्यस्य धर्मजिज्ञासाया अभिधानात् । तथा च जिज्ञासाविशेष इति फलितम् ।

ननु भवति जिज्ञासायाः सङ्गतिप्रयोजकत्वं यदि जिज्ञासापदस्य मीमांसापरत्वं स्यात्, नत्वेवं; तत् कथमस्य सूत्रस्य सङ्गतिसूचकत्वमिति चेत्, ज्ञातुमिच्छा जिज्ञासेत्यवगतिपर्य्यन्तज्ञानविषयेच्छाया एवात्र ग्रहणात्तदुपक्षेपासम्भवात् ।

न च शास्त्रं मीमांसायै प्रवर्त्तते न तु जिज्ञासायै इति वाच्यमत्र मीमांसाया जिज्ञासाप्रयोज्यतया जिज्ञासाविषयीभूतज्ञानस्य प्रमारूपतया च जिज्ञासाम् अधिकृत्यैव निर्णयमुपदिशतो मीमांसाशास्त्रस्य जिज्ञासाधिकृतत्वात्ततः ।

ननु ज्ञाते ब्रह्मणि न जिज्ञासा सम्भवति इच्छां प्रति विषयसिद्धेः प्रतिबन्धकत्वात्, नाप्यज्ञाते जिज्ञासाकारणस्य ब्रह्मज्ञानधर्म्मिकेष्टसाधनताज्ञानस्य विशेषणज्ञानविरहेणानुत्पत्तेरिति चेन्मैवं, ब्रह्मपदार्थत्वेन सामान्यतो ज्ञाते धर्म्मिणि विशेषजिज्ञासायाः सम्भवात् । अत एव श्रूयते तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्तीति ।

अत्रेदमवधेयम्, पूर्वमीमांसान्तिमाधिकरणसिद्धान्तसूत्रोत्थापिताकाङ्क्षानिवर्त्तकमपि शास्त्रमिदं न तन्मात्रप्रयोजकं किन्तु परमकारुणिको मुनिस्तन्निमित्तीकृत्य परमपुरुषार्थप्रयोजकत्वेनोपदिदेश । यथा श्रीभगवानर्ज्जुनं निमित्तीकृत्य जगन्निस्तारक गीताशास्त्रमुपदिदेश तद्वत् । तथा च यो वा एतदक्षरं गार्ग्यविदित्वास्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात् प्रैति स

कृपणोऽथ य एतदक्षरं गार्गि ! विदित्वा प्रैति स ब्राह्मणः। ( बृ० ३।८।१० ) इति श्रुतिर्विचारार्हवाक्यं—अनया श्रुत्या स्तुत्यर्थवादेन विपर्य्यये निन्दया चाक्षरवेदनं विधीयते उत सप्तद्वीपा वसुमतीतिवत् स्वरूपाख्यानमात्रमिति संशयः। किं तावत् प्राप्तं—न विधीयते ; किन्तु स्वरूपाख्यानमात्रमेतत्, वेदनस्य सामग्र्यधीनस्य कृतिसाध्यत्वाभावेन विधानाभावात्।

एवञ्च ब्रह्म निरूपणीयं न भवत्येव निष्फलत्वात्। न वा ब्रह्मनिर्णायकशास्त्रमारम्भणीयं तत एव। न च पूर्व्वमीमांसासूत्रोत्थापिताकाङ्क्षानिवृत्तिफलकत्वेन निरूपणीयत्वं शास्त्रस्यारम्भणीयत्वञ्चास्तीति वाच्यं, श्रुतिस्मृतिभ्यामेव तदाकाङ्क्षानिवृत्तिसम्भवेन सूत्रप्रणयनस्य निरर्थकत्वादिति पूर्व्वपक्षः। अत्रोच्यते-वेदनस्योपासनप्रधानतया कृतिसाध्यत्वेन विधिविषयताया युक्तत्वात्, अत एव "आत्मा वा अरे द्रष्टव्यः" इत्यादौ विधिप्रत्ययस्य न बाधितार्थकत्वम्। वादिवैमत्यदुर्ग्रहश्रुतिस्मृतितात्पर्य्यव्याख्यानफलस्वरूपहेतुप्रतिपादनविरुद्धवादपरिहारविचाररूपस्य निरूपणस्य शास्त्रस्य वा न श्रुत्यादिभिरन्यथासिद्धत्वम्।

न चाशक्यं तन्निरूपणं "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुतेरिति वाच्यं, "तन्त्वौपनिषदं पुरुषं पृच्छामि" इति श्रुतेरुपनिषद्गम्यत्वप्रतिपादनात्। कीदृशार्थे उपनिषद्वाक्यानां तात्पर्य्यं, कीदृशश्चौपनिषदो बोधः, कया सामग्र्या स जन्यते, किञ्च तत् फलम्—इत्येतत्सर्व्वावधारणाय स्वमतसंस्थापकं विरुद्धमतखण्डनञ्च यद्वाक्यं तस्यैवात्र निरूपणपदार्थत्वात् शास्त्रत्वाद्वा। तस्मान्निर्णयपरसूत्रमिदमथातो ब्रह्मजिज्ञासेति।

एतेनाधिकारिप्रयोजनाभिधेयसम्बन्धाः सूचिताः। ब्रह्मजिज्ञासुः सामान्यतोऽत्राधिकारीति ब्रह्मविचारार्थकेन जिज्ञासापदेन गम्यते। जिज्ञासाभेदादधिकारिभेदश्च तत एवोहनीयः। जिज्ञासाभेदः शमदमादिगुणसम्पत्तिप्रकर्षाप्रकर्षानुगतो भवति, तथा योग्यतान्तरभेदाद्दृष्टभेदाच्च। उपासनाविशेषनिर्देशाद् विशेषतो भेदस्तत्र तत्र बोद्धव्यः। अस्य साक्षात्प्रयोजनं ब्रह्मज्ञानं तच्च प्रकृष्टाधिकारिणो मोक्षफलकं सर्व्वेषामविशेषेण श्रेयःफलकञ्च। अभिधेयं ब्रह्म, तच्च निर्व्विशेषं सविशेषञ्च। निर्व्विशेषमपरिच्छिन्नं सविशेषं परिच्छिन्नम्। एवं द्वैविध्येऽप्येकमेव सत्तास्वरूपं निर्व्विशेषसविशेषसाधारणम्। सम्बन्धश्च ब्रह्मतन्निरूपणयोर्विषयविषयिभावः, ब्रह्मशास्त्रयोः प्रतिपाद्यप्रतिपादकभावः, प्रयोजननिरूपणयोः प्रयोज्यप्रयोजकभावश्चेत्यादिरूपः—एतत् सूत्रार्थत एव लभ्यत इति संक्षेपः।

षोडशाध्यायी पूर्व्वमीमांसेति मन्यमानानां श्रीचक्रविदां समयिनां केषाञ्चिन्मते तु श्रुतविविधोपासनस्य कस्यचित् शमदमादिमतोऽधिकारिण उपास्यत्वेन सत्यां ब्रह्मजिज्ञासायां गुरुणा बादरायणेन तदधिकारिकमिदं शास्त्रमारभ्यत इति सूत्रार्थः। एतन्मतव्याख्यानञ्च यथावसरं करिष्याम इति प्रतिज्ञासूत्रम् ॥ १ ॥

प्रतिज्ञातं निरूपणं, निरूपणं नाम प्रतिपत्त्यनुकूलो व्यापारः, प्रतिपत्तिश्च लक्षणतः, स्वरूपतः, प्रमाणतः, फलावच्छेदतश्चेति संक्षेपाच्चतुर्द्धा। अवान्तरजिज्ञासानिवर्तकविचारप्रपञ्चस्तु एतदन्यतमप्रतिपत्त्यनुकूलतया नैतन्निरूपणादतिरिच्यते। तत्र लक्षणतः प्रतिपत्तये द्वितीयं सूत्रमिति प्रथमवर्णकपक्षे सूत्रयोः सङ्गतिः,

द्वितीयवर्णकपक्षे च ब्रह्मजिज्ञासामधिकृत्य शास्त्रारम्भणं प्रतिज्ञातं, तत्र ब्रह्मपदस्य अर्थान्तरम् किम्? इति जिज्ञासामधिकृत्य निर्णयसूत्रमिदम्। तद् यथा—

( आद्य-जन्माधिकरणम्—२ )

**जन्माद्यस्य यतः ॥ २ ॥**

ननु ब्रह्मपदार्था हि बहवः श्रूयन्ते, तथाहि 'यस्य ब्रह्म च क्षत्र-ञ्चोभे भवत ओदनः' (कठ० १।२।२४) 'सैषा क्षत्रस्य योनिर्यद् ब्रह्म' ( बृह० १।४।११ ) इत्यादि श्रुतौ ब्राह्मणत्वेन प्रसिद्धो जातिविशेषः, 'ब्रह्मयोनिम्' इत्यादौ वेदः, 'ब्रह्मा देवानां प्रथमः सम्बभूव' इत्यादौ हिरण्यगर्भः, 'यतो वा इमानि भूतानि जायन्ते' इत्युपक्रम्य 'तद् ब्रह्म' इति ( तै० ३।१ ) श्रुतौ 'देवात्मशक्तिम्' इति मन्त्रवर्णे च ( श्वे० १।३ ) सर्व्वकारणं परमात्मा चेति। एतेषु पूर्व्व-मीमांसा द्वादशाध्यायान्तिमाधिकरणस्थ—ब्राह्मणशब्दप्रकृतिभूत-ब्रह्मपदार्थः कतम इति जिज्ञासायां केचिदाहुर्ब्रह्मैव ब्राह्मण इति प्रज्ञादित्वादण् प्रत्ययेन निष्पन्नो ब्राह्मणो हिरण्यगर्भस्यापत्य-मित्यण्प्रत्ययेन वा योगरूढोऽयं जातिविशेषपरः, स्मृतेस्तस्यैवा-न्विर्वेज्यावगमात्; तदुक्तं मनुना—

अध्यापनमध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहश्चैव षट् कर्म्माण्यग्रजन्मनः ॥ इति
( १०।७५ )

ब्रह्म वेदं जानातीति व्युत्पत्या वेदपरो वा भविष्यति, तज्ज्ञानं विनार्त्त्विज्यस्यासम्भवात्। न तु परमात्मापरात्स्यदेवात्मशक्तिपरः;

तथाविधप्रपञ्चो द्वितीयविरहितस्य ब्रह्मणो मिथ्याकल्पनीयत्वेनाज्ञान-निवृत्त्यानिर्वैज्ञ्यसम्भवात् । किञ्चालक्षणमितस्य लक्षणत्वे विरू-पत्वं न सम्भवति "अदृष्टमव्यवहार्यमग्राह्यमलक्षणम्" (माण्डुक्य० ७) इति श्रुतेः, इति चेन्नेति ब्रूमहे, यतो देवमनुष्यादिवदेव ब्रह्म-शब्दप्रकृतिभूतब्रह्मशब्दः । आनिर्वैज्ञ्यासम्भवदोषस्तु परिहृतपूर्वः, अज्ञानानामपि संवर्त्तपसिद्धव्यासादीनामानिर्वैज्ञ्यस्य श्रुतिस्मृतिपुरा-णेषूपलम्भाच्च । अलक्षणमिति तु चिन्मात्रतात्पर्यकम्, उपनिषदम-तिक्रम्य लक्षितुमशक्यमित्यर्थकं वा, अन्यथा 'धनुर्गृहीत्वौ-पनिषदं महास्त्रं शरं ह्युपासानिशितं सन्दधीत । आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि' ( मुण्ड० २।२।३ ) इत्यादिश्रुतिर्व्याहन्येत । न ह्यलक्षणं वस्तु लक्ष्यं भवति । ततश्चास्य लक्षणसूत्रस्यावयवभूतानि त्रीणि पदानि 'जन्म' 'आद्यस्य' 'यतः' इति समासरहितानि । आद्यो हि ब्रह्मा देवेष्वा-दावुत्पन्नत्वाद्, 'ब्रह्मा देवानां प्रथमः सम्बभूव' (मुण्डक०१।१।१) इत्यादि श्रुतेः; ब्रह्मा हिरण्यगर्भः, 'हिरण्यगर्भः समवर्त्तताग्रे' इत्य-स्यापि श्रवणात् । नन्वत्र सम्बभूवेत्युत्पत्त्यर्थकधातोः, सत्तार्थकधा-तोर्वा प्रयोगः? किमत्र युक्तम् ? सत्तार्थकधातोरेव ; न चैवं सम्बभूवे-त्यस्यातीतसत्ताबोधकत्वे वर्त्तमानसत्ताया व्याघात इति वाच्यं, त्रिका-लसम्बन्धिनो वस्तुनः कालभेदेन सत्ताभेदविवक्षायां व्याघातवि-रहात् । 'देवानां प्रथमः सम्बभूव' इत्यस्य देवानां प्रथम आसीदित्य-र्थेऽभ्युपगम्यमाने देवानामुत्पत्तिपूर्वकालसम्बन्धस्यातीतत्वेन प्रकृते सत्यभावाच्च । एवञ्च 'विश्वस्य कर्त्ता' इत्युपक्रमश्रीको नानुपपन्नः ?

न्यथात्वस्यापि जनिमत्त्वे विश्वान्तर्गततया स्वं प्रति स्वस्य कर्त्तृत्वासम्भवेनांशतो बाधः स्यात्। उपपद्यते चैवं प्रथम इति, जनिमत्त्वे तु जनयितुरेव प्राथम्यं स्यादिति चेत्, मैवम्, उत्पत्त्यर्थक-धातुप्रयोगो ह्ययं 'हिरण्यगर्भं पश्यति जायमानम्' इति (श्वे०४।१२) मन्त्रवर्णात्। विश्वकर्त्तृत्वञ्च जगत्-स्रष्टृत्वं न तु जनिमानपि ब्रह्मा जगदन्तर्गतत्वेन विवक्षितोऽतस्तस्य विश्वकर्त्तृत्वं नांशतो बाधितम्। नापि प्राथम्यमनुपपन्नं देवानामित्युक्तत्वात्। देवा हि जनिमन्तः, 'देवानसृजत' इति ( १।३।२ सूत्र-शाङ्करभाष्यधृतायाः ) श्रुतेः, ब्रह्मणस्तत्प्राथम्यमुत्पत्तिमत्त्वे सत्यपि न बाध्यते, एतेनाधिकरणमा-दर्शितम्; तस्माद्वाध्यो ब्रह्मा, सर्गादिजातत्वात्; तस्य यतो यस्याः शक्तेर्जन्म तद् ब्रह्मेति वाक्यशेषः, यो ब्रह्माणं विदधाति पूर्व्वम् इति श्वेताश्वतरमन्त्रवर्णात्, यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणमिति देवीसूक्तमन्त्रवर्णाद्, विष्णुः शरीरग्रहणमहमीशान एव च कारितास्त इति ब्रह्मस्तुतिरूपसप्तशतीस्मृतेश्च। अतएवोक्तं प्रपञ्चसारेऽष्टमपटले 'त्रिमूर्त्तिसर्गाच्च पुरा भवत्वाद्' इत्यादि। श्रीचक्रोपासकसमयिमते सा हि शक्तिः सादाख्यकला, त्रिपुरसुन्दरी-रूपेण यदुपासनं सर्व्वतः प्रथते। व्यक्तीभविष्यति चेदमुपरिष्टात्।

तथा च लक्षणमिदं न ब्राह्मणजातौ न वेदे न वा हिरण्यगर्भे घटते, तेभ्य आद्यस्यानुत्पत्तेः। घटते तु परमात्मस्वरूपशक्तौ। तज् ज्ञानवन्तो ब्राह्मणाः श्रेयांसो भवन्ति। 'बृहत्त्वाद् बृंहणत्वाच्च ब्रह्मेत्यात्मैव गीयते' इति समाख्या—शक्तिरूपे परब्रह्मण्येव युज्यते, तत्सम्बन्धादेव तत्र तत्र ब्रह्मशब्दप्रवृत्तिः; श्रूयते हि—'आत्मानं पश्यति

विचिकित्सो ब्राह्मणो भवति' इति। (बृ० ४।४।२३) ब्रह्म बुध्यमानो बोद्धुं योग्यो वा जातिविशेषो ब्राह्मणशब्दवाच्यो भवति। 'एतस्य महाभूतस्य निश्वसितं यदृग्वेदः' इत्यादि श्रुतेरानुपूर्व्यमिति-वद् वा सृष्टिहेतुतया तत्तुल्यतया वा वेदेऽपि ब्रह्मशब्दः प्रयुक्तः। वेदस्य सृष्टिहेतुत्वञ्चात्र देवताधिकरणे वक्ष्यते। ब्रह्मा हि ब्रह्मभावेनैव च बृहत्त्वं बृंहणत्वञ्च लभमानस्तथा व्यपदेशमभजत्, ब्रह्मविद् ब्रह्मैव भवतीति श्रुतेः, तस्माद् जिज्ञासितस्य परब्रह्मण एवेदं लक्षणमिति सिद्धम्। आद्यस्योत्पत्तिहेतुतयाद्यकर्तृकविश्वोत्पत्तिमूलत्वं तस्यैवेति लब्धम्। तथाच, 'यतो वा इमानि भूतानि जायन्ते' इत्यादिकब्रह्म-लक्षणमप्येतेन समग्राहि। ननु 'अस्य जगतो यतो जन्मादि' इत्येवं-रूपः 'यतो वा इमानि भूतानि जायन्ते' इत्यादि श्रुत्यनुगतः सूत्रार्थः कथम् उपेक्षित इति चेदुच्यते—न खल्वेतत् सूत्रं दर्शितश्रुतिमनु-गच्छति, तथाहि—'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति' इत्यादि-श्रुतिवाक्ये इमानीति भूतानीत्यस्य विशेषणपदं, भूतानीत्यस्य प्राणिन इत्यर्थो जीवन्तीत्युत्तरवाक्यात्; सूत्रे च अस्येति पदं जगत इत्यर्थकम्, जगच्च प्राण्यप्राणिरूढिकम्। सत्येवं सौत्रमस्येति पदं न श्रौतस्येमानीत्यस्यार्थमनुवर्त्तते, नापि तदीय-पदान्तरम्, अपि तु स्वतन्त्रम्। किञ्च सूत्रस्थं जन्मादिपदं यदि जन्मस्थिति-भङ्गमाचक्षीत, न श्रुत्यनुगमः, श्रुतौ जीवन्तीत्युक्तत्वात्; स्थितिर्हि प्राण्यप्राणिसाधारणी, जीवनन्तु प्राणनापरपर्य्यायं प्राणिमात्रधर्म्मः। अथ भूतानीति पदं जगत्परं, तदत्र जीवन्तीति प्रकृतेः स्थितिरेवार्थ इति, मैवं, विवरणविरोधात् 'आनन्दाद्ध्येव खल्विमानि

मानि भूतानि जायन्ते अन्नेन जातानि जीवन्ति' इति आद्यं विवरण-मतात् जननं जीवनञ्च प्राणिनामेवेति लोकप्रसिद्धम्। अपि च तस्यामेव तैत्तिरीयश्रुतावनन्तरं 'प्राणो ब्रह्मेति व्यजानात् प्राणा-द्ध्येव इमानि भूतानि जायन्ते तेन जातानि जीवन्ति' इत्युक्तम्, प्राणेन जीवनं प्राणिनामेवेति लोकसिद्धम्, इत्येवं विवृतमर्थमपहाय भूतानीत्यस्य जगत्परत्वकल्पनम् अयुक्तम्।

यदपि जन्मादीत्यादिपदं कुत्रार्थे प्रयुक्तं तदप्यशक्यावधार-णम्। यत इति सौत्रपदमपि न श्रुतिमनुगच्छति 'यतो' 'येन' 'यद्' इति पदत्रयस्य श्रौतत्वात्। न चात्र सार्व्वविभक्तिकस्तसिल्प्रत्यय इति शक्यम्, समस्तजन्मादिशब्दार्थे समुदयरूपे प्रत्येकं तदन्वया योगात्। श्रुतेस्तात्पर्य्यमादायेदं लक्षणमिति चेत्, समान आवयोः पक्षः, आद्यस्य यतो जन्म इत्यत्रापि व्याख्याने श्रुतितात्पर्य्यानुग-मस्य दर्शितत्वात्। नचापादानत्वं न दर्शितमिति वक्तव्यम्, 'यतो वा' इत्यादिश्रुतिस्थभूतशब्दाद् हिरण्यगर्भस्यापि प्राप्तेः, तदेक-वाक्यतया मातुः पुत्रो जायते, माता पुत्रं सृजतीत्यनयोरिव ब्रह्माणं विदधातीतिश्रुतेर्यत आद्यस्य जन्मेति सूत्रस्य समता-त्पर्य्यकत्वात्। अत्र ब्रह्मा कुतश्चिदुत्पद्यते न वेति विप्रतिपत्तिः, नोत्पद्यते विश्वकर्त्तृत्वेन प्रथमत्वेन श्रूयमाणत्वात्, यन्नैवं तन्नैवं यथा विश्वमिति पूर्व्वपक्षः, कुतश्चिदुत्पद्यते जनिमत्त्वेन श्रूयमाणत्वात् ब्राह्मणादिवद् इत्यादिस्तार्किकाभ्युपगतो न्यायोऽप्येतेन सूचितः। न्यायफलं परार्थानुमानं तत्श्चेतरबाधधीसहकृताद् ब्रह्मसिद्धिः, प्रत्यक्षाविरुद्धमागमानुमोदितमनुमानमिदं मननाख्यमपेक्ष्यत एव

ब्रह्मसाक्षात्कारे, 'श्रोतव्यो मन्तव्यः' इति श्रुतेः, प्रमाणसंप्लवश्च सिद्धिप्रद्धिमाननमादृणाति ।

यद्यपीदं व्याख्यानं सर्वशास्त्रसाधारणं तथापि उपासनायां विशेषज्ञापनाय श्रीचक्रोपासकानां इदं व्याख्यान्तरमुपपाद्यते; यथा आद्यस्य अदनीयस्य भोग्यस्य पिण्डाण्डस्य ब्रह्माण्डस्य च यतो जन्म तद्ब्रह्मेति शेषः । तत्र शिवशक्त्योः सम्मेलनं षड्विंशतत्त्वं तदेव श्रीचक्रमुच्यते । तस्मादेव जायापतिन्यायेन मिलिताद् भोग्या-परनामकप्रपञ्चसन्तानोत्पत्तिरिति भावः ॥ २ ॥

ननु यत आद्यस्य जन्म तत् किं वृश्चिकादिजननापादानगोम-यादिवदचेतनं मात्रादिवच्चेतनं वा ? किमत्र प्राप्तम् ? अचेतनमेव, जडायाः प्रकृतेः सर्वकारणतायाः सांख्यादिसम्मतत्वात्, सा यदि शक्तिः, अचेतनैवासौ; प्रपञ्चसारेऽपि प्रधानमिति शक्तिरिति च द्वे नामनी पर्य्यायत्वेन दर्शिते 'प्रधानमिति यामाहुर्याशक्तिरिति कथ्यते' इति श्लोकार्द्धेन । प्रधानं प्रकृतिः स्त्रियामित्यमरोक्तश्चास्ति । न खलु शक्तिरेषा परमात्मरूपा भवितुमर्हति, परमात्मनश्चिन्मात्रत्वात्, नापि चिन्मात्रं जननापादानम्, निर्व्विकारत्वात्, न च विवर्त्ताधिष्ठानस्या-पादानत्वम्, रज्जोः सर्प उत्पद्यते इति हि न प्रयोगः, रज्जौ सर्प इत्येव प्रयोगात् । श्रुतिश्च यत इत्यनेन पञ्चम्या अपादानत्वार्थकत्वं दर्शयति । हेतुत्वार्थकत्वे येन जातानीत्यत्र येनेत्यस्य पृथङ्-निर्द्देशो न स्यात् । न च तस्याः श्रुतेः सूत्रेणानेनासम्बन्धात्तत्र यथा तथास्तु, सूत्रे तु यत इत्यत्र हेतावेव पञ्चमीति शङ्क्यम्, वस्तुभेदा-पत्तेः, श्रुतौ यद्वस्तु सर्व्वभूतजननापादानतया दर्शितं, तदेव सूत्रेऽपि

जन्महेतुतया निरूप्यत इति परैरभ्युपगन्तव्यमपादानपञ्चमी-विभक्त्यन्तयच्छब्दार्थस्य श्रौतस्य विवर्त्ताधिष्ठानत्वाभावे सौत्रस्य च तथात्वाभ्युपगमे वस्तुभेदः स्यात् । एतेन सूत्रे यत इति पदं सप्तमीविभक्त्यन्तम्, 'रज्जौ सर्पः' इति वद् विवर्त्ताधिष्ठानत्वं यत्पदार्थस्य बोधयतीति परास्तम्, श्रुतौ 'यतः', 'येन' 'यत्' इति विभक्तिभेदोपन्यासस्य वैयर्थ्यात्, सप्तम्यन्तस्य यत इत्यस्य सर्व्वत्रैवान्वयसम्भवात्, यदि तु श्रुतौ पृथङ्निर्देशमहिम्ना यत इत्यस्य पञ्चमीविभक्त्यन्तत्वेन विवर्त्ताधिष्ठानपरत्वं नाभ्युपगम्येत, अत्र चाभ्युपगम्येत, वस्तुभेदतादवस्थ्यं दुष्परिहरमेव । तस्मादचेतनैव प्रकृतिराद्यस्य जनयित्रीति प्राप्ते उच्यते नाचेतनमाद्यस्य जन्मापादानमिति, कुतः—

( शास्त्रयोनित्वाधिकरणम्—३ )

शास्त्रयोनित्वात् ॥ ३ ॥

शास्त्रस्य ऋग्वेदादेर्योनिः कारणं निश्वसितवदनायासेन रचयित्री, तत्त्वात् । 'एतस्य महाभूतस्य निश्वसितं यदृग्वेदो यजुर्वेदः सामवेदः' इत्यादिश्रुतेः, 'तस्माद् यज्ञात् सर्व्वहुत ऋचः सामानि जज्ञिरे' इत्यादिमन्त्रवर्णात् 'अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः' इति देवीसूक्तमन्त्रवर्णाच्च । प्रथमे निश्वसितस्य चेतनधर्म्मत्वात्तद्रूपेणारोपेण, द्वितीये तस्मादित्यनेन चेतनस्य लाभात्, तृतीये च वक्त्र्याश्चेतनत्व-नियतधर्म्मकत्वाच्च शास्त्रयोनित्वं चेतने पर्य्यवसन्नम् । यद् वस्तु शास्त्रयोनिस्तदेवाद्यस्य

जननापादानं, 'यो ब्रह्माणं विदधाति पूर्व्वं यो वेदांश्च प्रहिणोति तस्मै' इति श्रुतेः। तस्माच्चेतनं ब्रह्मेति फलितम्। यद्वा, शास्त्रयोनित्वादिति समाहारद्वन्द्वो वा शास्त्रसहितं योनित्वमिति मध्यमपदलोपी कर्म्मधारयो वा तस्मात्। तथाच शास्त्राद् योनित्वाच्च चेतनत्वं ब्रह्मणः सिध्यति। योनित्वं कारणत्वं—तस्य च सापेक्षतया समभिव्याहृतशास्त्रपदार्थापेक्षित्वे पर्य्यवसानात् शास्त्रकारणत्वमित्यर्थः। शास्त्रञ्च 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणम्' इत्याद्युक्तमन्त्रवर्णः। अत्राहमित्युपक्रमवचनम्, ज्ञानसमानाधिकरणं 'कामये' 'कृणोमि' इति क्रियाद्वयं च चेतनलिङ्गम्। शास्त्रकारणत्वञ्च शास्त्रकर्त्तृत्वं, तत्र प्रमाणमुपदर्शितम्। "पुरुषं ब्रह्मयोनिम्" इति श्रुत्यन्तराच्च पुरुषे शास्त्रयोनित्वसिद्धिः। पुरुषस्तु प्रकृतिविलक्षणश्चित्स्वरूप इति हि सांख्यसिद्धान्तः। पुरुषत्वेऽपि तस्य चितिशक्तित्वेन दृक्शक्तित्वादिनाच बहुधा प्रयोगः सांख्ययोगानाम्। स्मृतिरपि भवति—या हि ब्रह्मणा शरीरजननीति स्तुता सैव "चितिरूपेण या कृत्स्नमेतद् व्याप्य स्थिता जगत्" इति सप्तशत्यामभिष्टुता देवैः। तस्माच्चेतनापादानकजन्मा ब्रह्मा, तदपादानभूतचेतनञ्च ब्रह्मेति समुदितार्थः। शास्त्रयोनित्वादित्यस्य शास्त्रप्रमाणकत्वादिति तु नार्थः, शास्त्रादित्यनेनैव सिद्धौ योनित्वांशप्रवेशस्य वैयर्थ्यात्।

न चैवं यद्वा कल्पे शास्त्रस्य तद्योनित्वस्य च हेतुत्वकथनमफलमेकेनैव हेतुना फलसिद्धेरिति वाच्यं, प्रमितिदाढर्यस्य तदर्थत्वात् शास्त्रवदनुमानस्यापि तत्र प्रमाणभावप्रदर्शनार्थत्वाच्च। श्रीचक्र-

पक्षे तु प्रमाणोपन्यासार्थं सूत्रमिदम्; शास्त्रञ्च योनित्वञ्चेति समाहारे द्वन्द्वस्तस्मात्। शास्त्रं यथा—

चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः।
शिवशक्त्यात्मकं ज्ञेयं श्रीचक्रं शिवयोर्वपुः॥
त्वगसृङ्मांसमेदोऽस्थिधातवः शक्तिमूलकाः।
मज्जाशुक्रप्राणजीवधातवः शिवमूलकाः॥
नवधातुरयं देहो नवयोनिसमुद्भवः।
दशमी योनिरेकैव परा शक्तिस्तदीश्वरी॥
एवं पिण्डाण्डमुत्पन्नं तद्वद् ब्रह्माण्डमाबभौ।

इति श्रीलक्ष्मीधरविद्यानाथाचार्य्यपादधृतकामिकाख्यागमवचनम्, (पिण्डाण्डं = स्थूलदेहः) तस्माच्छास्त्रात् श्रीचक्रस्य भोग्यजन्महेतुत्वं निर्णीयते। योनित्वं—जन्महेतोर्योनिशब्दव्यपदेश्यत्वम्, अस्ति च श्रीचक्रस्य तथाव्यपदेशो नवयोनिसमुद्भव इति—नवयोन्यात्मकत्वाच्छ्रीचक्रस्य तज्जन्यत्वाद्देहस्य तथारूपत्वेनाभिधानम्। तेन श्रीचक्रस्य जन्महेतुत्वमनुमानेनापि सिद्धम्; तथा च प्रयोगः—श्रीचक्रं भोग्यजन्महेतुः, आगमशास्त्रे योनिशब्देन भूयो व्यपदिष्टत्वात्, स्मरमन्दिरवदिति संक्षेपः॥ ३॥

ननु चेतनं ब्रह्मेत्युक्तं, तच्च चेतनं चिन्मात्रं वा चित्सम्बन्धवद् वा; नाद्यः, तस्याद्योत्पत्तावपादानत्वायोगस्य पूर्व्वमुक्तत्वात्, नान्त्यः, तस्य मनुष्यादिवदनित्यत्वप्रसङ्गात्। इष्टापत्तौ चाद्यजन्मापादानत्वासिद्धिः। अनित्यानां देवतामनुष्यादीनामाद्येन ब्रह्मणैव सृज्यमानत्वात्। एवं स्थिते समाधानसूत्रमाह—

( समन्वयाधिकरणम्-४ )

## तत्तु समन्वयात् ॥ ४ ॥

तुकारः शङ्काव्यवच्छेदार्थ । 'तत्' आद्यजन्मापादानत्वम् । एकसूत्रेण व्यवधानेऽपि 'तत्'—पदप्रयोगो नायुक्तः प्रक्रान्तत्वात् । 'समन्वयात्' सम्यक् नित्योऽन्वयः सम्बन्धो मेलनं चिदचितोः सम्बन्ध इति यावत्, तस्मान्नित्यसम्बद्धचिदचिदुभयात्मिका हि शक्तिराद्यस्य जनयित्रीति भावः। न चैवं मनुष्यादितुल्यत्वं भवति, तेषां नित्यसम्बद्धचिदचिद्रूपत्वाभावात्। व्यक्तीभविष्यति चेदमुपरिष्टात् ।

अथ यत्र शास्त्रयोनित्वं तत्रैवाद्यजन्मापादानत्वमितिप्रतिपादके पूर्व्वसूत्रस्य द्वितीयवर्णके पुरुषं ब्रह्मयोनिमिति श्रुतिप्रतीकः प्रमाणतयोपन्यस्तः, तदन्तो मन्त्रपूर्व्वभागस्तु "यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्" इति। एतेन पुरुषस्य ब्रह्मयोनित्वमुच्यते । न तु नित्यसम्बद्धचिदचिदात्मकशक्तेः, तत्कृतस्तत्राद्यजन्मापादानत्वमिति शङ्कातत्समाधानमयो विचारः प्रस्तूयते ।

ननु ब्रह्मयोनिमित्यन्तश्रुतिस्थब्रह्मयोनिशब्देन अचिन्मात्रं वा चिन्मात्रं वा, निःसम्बन्धचिदचिदुभयं वा, अनित्यसम्बद्धचिदचिदुभयं वा, नित्यसम्बद्धचिदचिदुभयं वा गृह्यत इति संशयः, किमत्र-प्राप्तम् ? अचिन्मात्रमिति ; रुक्मवर्णमिति पुरुषविशेषणात्, अचिन्मात्रं घटादिकमेव रूपादिमद् भवति ।

ननु चेतनो मनुष्यादिरपि गौरः श्याम इत्यादिरूपेण व्यवह्रियमाणो रूपभेदं भजते इति चेत्, सत्यमेतत्, किन्त्वसौ देहविशेष एव, तस्य चाचिन्मात्रत्वे विप्रतिपाद्यमानो नास्ति। पुरुषत्वञ्च स्त्रीत्ववद्देहत्वव्याप्यो धर्म्मः। नन्वचिन्मात्रस्य कथमीशत्वमिति चेत्, तालवृक्षस्य तरुराजत्ववदुपरिश्रेणीस्थमध्यदन्तद्वयस्य राजदन्तत्ववद् वा बृहत्त्वादिना केनाप्यतिशयेन तथा व्यपदेशात्। कर्तृत्वमपि रथो गच्छतीत्यादिवदौपचारिकम्। चिन्मात्रं वा गृह्यतां, रुक्मवर्णमित्यनेन तेजोवत् स्वप्रकाशत्वबोधनात्, यत्किञ्चिदतिशयविवक्षया केवलस्य ईशार्थकशब्दस्य प्रयोगादर्शनात्। न हि तालवृक्षस्य तरुराजत्वेऽपि केवलेन राजशब्देन तद्ग्रहणं क्वचिद् दृश्यते। ज्ञाज्ञौ द्वावजावीशानीशाविति श्वेताश्वतर ( २।६ ) मन्त्रेण अज्ञस्य नामाचितोऽनीशत्वस्य, ज्ञस्य नाम चिन्मात्रस्य चेशत्वस्योक्तत्वाच्च। योद्धृकृतशत्रुविजयस्य राजनीव तदपेक्षप्रवृत्तिकगुणनिष्ठस्य कर्तृत्वस्य तत्रोपचारात् कर्त्तारमित्यपि नानुपपन्नम्। निःसम्बन्धचिदचिदुभयं वा गृह्यताम्; कर्त्तारमिति हि क्रियावदर्थकं वृत्तिकृतिमदर्थकं वा अचितो लिङ्गम्, रुक्मवर्णमित्यपि तद्विशेषणम्; अव्यक्तात् पुरुषः पर इति श्रुतेः, अव्यक्ताद् जड़वर्गादचित इत्यर्थात् पुरुषस्य परत्वेन चेतनाचेतनयोर्भेदात् सिद्धस्तयोरसम्बन्धः, हिमवद्विन्ध्ययोरिव मिथो निःसम्बन्धयोरपि पर्व्वतत्वेनेव ब्रह्मयोनित्वेन तयोर्ग्रहणे तु न किञ्चिद् बाधकम्। रुक्मवर्णं कर्त्तारम्—अचितमित्यर्थः, पुरुषं चितमित्यर्थः—एतद् द्वयं, ब्रह्मयोनिमीशं पश्यति इति तदर्थः। एवञ्च निःसम्बन्धचिदचिदुभयस्य ब्रह्मयोनित्वमाद्य-

अनन्यपादानत्वञ्चोपपन्नम् । एतेन चिन्मात्रस्याविकारस्य निःसम्बन्धस्य कर्तृत्वासम्भवेऽपि निःसम्बन्धस्याचितः कर्तृतायां तदपेक्षकत्वकल्पनं, तस्याञ्च चिन्मात्रे सत्त्वमौपचारिकमित्येतत्कल्पनं निरुपपत्तिकमिति निरस्तम् । चिदचिदुभयत्वाश्रये कर्तृत्वस्येश्वरत्वस्य च स्वीकारादनुगमञ्च ब्रह्मयोनित्वेनेत्युक्तञ्च ।

अथ चित्सम्बन्धमन्तरेण केवलस्याचितो नैव कर्तृत्वं, कृते र्ज्ञानसामानाधिकरण्यस्यैकान्तमपह्नोतुमशक्यत्वात्, इति चेद्, गृह्यतामनित्यसम्बद्धचिदचिदुभयं ब्रह्मयोनित्वेनेति । सान्निध्यविशेषश्चायमनित्यसम्बन्धः, ततः खल्वयःपावकयोरिव चिदचितोर्मिथो धर्मव्यतिकरः । दाहकत्वमयसि, ऋजुवक्राद्यवयवसंस्थानञ्च यथा पावके समारोप्यते तथा कदाचित् सन्निहितयोः प्रकृतिपुरुषयोर्नाम चिदचितोर्ज्ञानकृतिव्यतिकरो येन कर्त्तारमिति पुरुषमिति च व्यपदेशः । तादृगुभयञ्चेशस्वरूपमिति प्राप्ते ब्रूमः, अनित्यसम्बद्धचिदचितोरीशस्वरूपत्वे तस्यानित्यत्वप्रसङ्गः, विशेषणस्यानित्यत्वे विशिष्टस्यानित्यत्वनियमात् ।

अथानित्यसम्बद्धत्वं न विशेषणं किन्तूपलक्षणम् । तेन कादाचित्ककाकाभावेऽपि काकवन्तो गृहा इतिवत् सम्बन्धाभावदशायामपि तादृशसम्बन्धवच्चिदचिदुभयमित्यपि व्यपदिश्यते । अतो नास्तीशानित्यत्वप्रसङ्ग इति चेन्न, विभ्वोस्तयोः सान्निध्यस्य सदातनत्वेऽपि तद्विशेषस्यानित्यत्वं ब्रुवता भवता तद्विशेषो व्याख्येयः, नहि तद्व्याख्यानं सुकरं, कथञ्चित् व्याख्याने वा तस्यानित्यत्वा-

भ्युपगमे तदुत्पत्तिध्वंसादिकल्पनागौरवस्य दुष्परिहरत्वात्। उत्पत्तिहेतोर्नित्यत्वेनानित्यत्वेन वा निर्वक्तुमशक्यत्वात्, नित्यत्वे तत्कार्य्यस्य कादाचित्कत्वानुपपत्तेः, अनित्यत्वे तस्यापि सहेतुकत्वावश्यम्भावेन तत्क्रमानित्यस्येऽनवस्थापातात्।

अथ माभूत् तथाविधचिदचिदुभयस्वरूपत्वमीशस्य, चिन्मात्रकत्वमेवास्तु; न च निःसम्बन्धस्य निर्विकारस्याद्यजन्मापादानत्वानुपपत्तिरिति वाच्यम्, ऐन्द्रजालिकस्य मायाशक्तिवत्तदीयमायाशक्त्या तदुपपत्तेरिति चेन्न, तदीयमायाशक्तेः सत्त्वासत्त्वविकल्पासहत्वेन अपदार्थत्वात्। तथा हि सतीयं मायाशक्तिश्चिन्मात्रादन्यानन्या वा? अन्यत्वे-तस्या एवोपादानत्वं, न चिन्मात्रस्वरूपत्वेन त्वदभिमतस्य ब्रह्मणः; अनन्यत्वे तस्या अपि चित्त्वापत्तिः, इष्टापत्तिश्चेदभ्युपगतं चितो विकारित्वेन। अथ यथा घटो मृदनन्योऽपि मृन्निष्ठभेदप्रतियोगीति भेदाभेदवान् भवति, तथा मायाशक्तिश्चिदनन्यापि चिन्निष्ठभेदप्रतियोगिनीति भेदाभेदवती; ततश्च नासौ चिद्रूपेति चेत्, तावतापि चितो भेदाभावस्य तत्र सत्त्वाच्चिद्रूपत्वानपायाद् घटस्य मृत्त्ववत्। अथासती? हेतुमत्यानया भवितव्यम्; प्रागभाववदथ स्यात्? उपादानकारणेनान्येन भाव्यम्;—तच्च चिन्मात्रञ्चेत्? सविकारत्वप्रसङ्गतादवस्थ्यम्, अविकारेऽपि रज्जुसर्पवदयमुपादानोपादेयभाव इति चेत्?, न, दृष्टान्तासिद्धेर्वैषम्याच्च; नहि रज्जुसर्पो नाम कश्चिदस्ति पदार्थः, यो दृष्टान्तीक्रियते; तुष्यत्विति न्यायाभ्युपगमेऽपि सत्यामेव रज्जावन्यत्र सतः सर्पस्योद्भवो नासत्याम्, अत्र त्वसत्यां मायायामिति वैषम्यम्। अथ न मायायां, किन्तु

चिन्मात्ररूपे सति ब्रह्मणि; तथाप्युक्तदोषो हिरण्यगर्भस्य सर्वकर्तृत्वस्य सत्त्वाभावाद् वैषम्यं दुष्परिहरम्।

नन्वस्तु सती मायाशक्तिः कर्त्री—तस्या एवोपपत्तेः, ब्रह्मणि तु कर्तृत्वं तदुपादानत्वञ्चौपचारिकं, तथा चेदं ब्रह्मणः स्वाभाव-सिद्धत्वमिव चन्द्रस्येति चेत्, न, सति मुख्यार्थत्वसम्भवे उपचारक-ल्पनाया अन्याय्यत्वात्। न च साक्षी चेताः केवलो निर्गुणश्चेति श्रुत्या निर्गुणत्वकेवलत्वयोरुपदेशात् कर्त्तारमित्यादेर्मुख्यार्थकत्वास-म्भवेनौपचारिकत्वाभ्युपगमोऽनन्यगतिकतयेति वाच्यम्, आत्मघट-योर्नात्मत्वमिति वचिदचितोर्न गुण इत्यपि प्रतीतेः, अचितो गुण-वत्त्वेऽपि चितो निर्गुणत्वेनोभयानुयोगिकाभावस्य तत्र सत्त्वात्। चिदचिदुभयात्मकशक्तित्वसामानाधिकरण्येन च कर्तृत्वमित्येवं-रूपेण, वक्ष्यमाणरूपेण चोभयार्थकश्रुतेरुपपत्तावेकतरौपचारिक-त्वाभ्युपगमस्यायुक्तत्वात्। केवलत्वञ्च तत्सत्त्वाव्यापकसत्ताकवस्तु-शून्यत्वं स्वसत्त्वाव्यापकसत्तासम्बन्धेन वस्त्वभाववत्त्वरूपं, तस्य चोभयात्मकशक्तावव्याहतत्वान्न काचिदनुपपत्तिः।

ननु चिदचिदुभयात्मकशक्तेर्ब्रह्मत्वमनङ्गीकृत्य विविधशक्तिवि-शिष्टचिन्मात्रस्यैव ब्रह्मत्वमभ्युपगन्तव्यम्, "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति मन्त्रे षष्ठीविभक्त्या भेद-निर्देशात्, शक्तेः शक्तिमद्वृत्तित्वेन प्रसिद्धत्वाच्च इति चेन्न, अस्येत्य-स्यापरस्यां शक्त्यावन्वयेन स्वाभाविकीत्यादौ तस्य निराकाङ्क्षत्वात्, तत्र चास्त्येव भेदो जन्यजनकसम्बन्ध-प्रयुक्तः, स्वाभाविकीत्यस्य स्वीयसत्ताभयत्वज्ञापकतया भेदाभाव एव पर्य्यवसानात्, तस्य

ज्ञानबलक्रियात्मिका या एका शक्तिः सा स्वाभाविकी ब्रह्मस्वरूपा इत्येतदर्थकत्वात्। पुरुषस्य चैतन्यमित्यादिवद् वा तन्निर्देशात्, अन्यथा जननापादानत्वस्य सगुणत्वव्याप्यतया निर्गुणत्वश्रुतिः, सङ्गव्याप्यतया निःसङ्गत्वश्रुतिश्च व्याकुप्येयाताम्, ब्रह्मणि जननापादानतायाः श्रुतिसिद्धत्वात्। नापि विवर्त्ताधिष्ठानस्य जननापादानत्वं, रज्जोः सर्पं उत्पद्यते इति प्रयोगप्रसङ्गस्योक्तपूर्व्वत्वात्। न च चिदचिदुभयस्य निर्गुणत्वव्यवस्थापनेन सगुणत्वव्याप्यजननापादानत्वस्य तत्राप्यसम्भव इति वाच्यं, वृक्षादौ कपिसंयोगतदभावादिवदवच्छेदकभेदेन सगुणत्वनिर्गुणत्वयोस्तत्र सत्त्वेन जननापादानतायां सगुणत्वव्याप्यत्वस्यासम्भवे बाधविरहाद् ब्रह्मणि चिदचिदुभयत्वावच्छेदेन चित्त्वावच्छेदेन वा निर्गुणत्वसत्त्वेऽप्यचित्त्वावच्छेदेन तत्र सगुणत्वस्य सत्वात्। एतेन सङ्गनिःसङ्गत्वे च व्याख्याते।

न चैवम् अद्वैतश्रुतिव्याकोपः, उभयत्वस्य द्वैतव्याप्यत्वादिति वाच्यम्, अद्वितीयत्वकेवलत्वयोरेकार्थतया स्वसत्त्वाव्यापकसत्तासम्बन्धेन वस्त्वभाववत्त्वलक्षणस्य प्रागुक्तकेवलत्वस्य नित्यसम्बद्धचिदचिदुभयात्मकब्रह्मण्यनपायेनाद्वैतश्रुतेः समन्वयात्।

तथाहि न खलु घटादिकं प्रत्येकमद्वितीयं भवति, घटान्तरलक्षणस्य पटादिलक्षणस्य वस्तुनः सत्त्वस्याव्यापिकया हि निजसत्तया तद्व्यवतिष्ठते, नातो निरुक्तसम्बन्धावच्छिन्नप्रतियोगिताकवस्त्वभाववत्त्वं तत्र वर्त्तते इति नाद्वितीयत्वं, ब्रह्मणि च तेन सम्बन्धेन किमपि वस्तु नास्ति। ब्रह्मसत्तायाः सकलवस्तुसत्त्वव्यापकत्वात्।

न चैवम् "एकमेवाद्वितीयम्" इति श्रुतौ एकमेवेति वा अद्वितीयमेवेति वा पुनरुक्तं स्यादिति वाच्यम्, एकमेवेत्यस्याद्वितीयमित्यनेन विवरणात्, यद्येकमेवेत्येतावन्मात्रं स्यात् एकैकपदार्थसाधारण्यं तस्य प्रसज्येत, एकत्वसंख्यायास्तत्र वृत्तेः, अपेक्षाबुद्ध्यभावेन संख्यान्तरस्य चावृत्तेः, एकत्वसंख्यायाः केवलान्वयितया तेनैवकारस्यानन्वितार्थकत्वापत्तेश्च, तस्माद् "एकमेव" इति न संख्याविशेषावधारणप्रतिपादकम्, किन्तु प्रागुक्ताद्वितीयत्वप्रतिपादकमिति तात्पर्य्यम् । अथवा सत्ताविशेषवद्वृत्तिभेदाप्रतियोगीति एकमित्यस्यार्थः, एवकारेण केवलभेदाप्रतियोगित्वादेर्व्यवच्छेदः, नित्यसम्बद्धचिदचिदुभयत्वपर्य्याप्त्यधिकरणञ्च सत्ताविशेषवत्, तत्र ब्रह्म नेति भेदासत्त्वात् पुरुषस्य प्रकृतेश्च प्रत्येकं घटपटादेश्च भेदसत्त्वात् तदप्रतियोगित्वं ब्रह्मण्येव, तथाच एकमेवेति श्रुतिसमन्वयः, अद्वितीयत्वञ्च केवलत्वमित्युक्तम् ।

अथ कोऽयं सत्ताविशेषः ? इति चेच्छ्रूयताम्,—सत्तापदार्थो द्विविधोऽनित्यसत्ता नित्यसत्ता च । तत्र घटपटादिसाधारणी अनित्यसत्ता प्रसिद्धा, असंख्या चाश्रयानन्त्यात् । नित्यसत्ता च त्रिविधा—अपरिणामिनी, समपरिणामिनी, एककार्य्यानुकूलत्वे सति विषमपरिणामोपलक्षिता च ; विषमपरिणामविशिष्टपर्य्यवसिता विषमपरिणामिनी सत्ता च न नित्या, प्रलयदशायां तस्या अभावात् तृतीयाया नित्यसत्तायाः प्रकृतिपुरुषोभयवृत्तित्वार्थम् एककार्य्यानुकूलत्वे सतीति विशेषणम् । प्रथमा चिन्मात्रवृत्तिः, द्वितीया अचिन्मात्रवृत्तिस्तृतीया चोभयवृत्तिः, सत्ता हि कालसम्बन्धो विशेषणभेद-

प्रयुक्तम् एवेदं, कार्य्यस्यापि विकृतनाम्न्या विशुद्धात्मिकायाः प्रकृते-रंशत्वात्। उभयात्मके ब्रह्मणि पुरुषे च कालसम्बन्धविशेषरूपा सत्ता त्रिविधैव, केवलायां प्रकृतौ नित्यसत्ता चानित्यसत्ता च— विषमपरिणामविशिष्टत्वजाया अनित्यत्वस्योक्तत्वात्। महदादि-स्थूलान्तेषु कार्य्येषु न नित्यसत्ता किन्त्वनित्यसत्तैव। तेषु कार-णावस्थानुपगतेषु तु कारणसत्तयैव सत्ताव्यवहारः। सम्बन्धत्वेन सम्बन्धित्वेन च मिथो भेदव्यपदेशोऽपि, सम्बन्धश्च फलतः सम्ब-न्धिनो नातिरिच्यते। नैयायिकमते घटभेदाभावघटत्वादिवत् स्वरू-पसम्बन्धवच्च। एवं हि प्रथमा नित्यसत्ता चिन्मात्ररूपा, द्वितीया अचिन्मात्ररूपा, तृतीया चोभयरूपा स्वरूपेण सर्व्वसत्ताव्यापिका, इति स्थितम्।

अथैवं सत्तात्रैविध्ये चिन्मात्रवृत्तिसत्ताया घटादिसत्त्वाव्याप-कतया चिति, चिन्मात्रस्वरूपस्य ब्रह्मस्वरूपस्य वा वस्तुनो यथोक्तसम्बन्धेन चाचिति "सत्त्वाचिदचिदुभयस्यैव स्वस-त्त्वाव्यापकसत्तासम्बन्धेन वस्तुमत्तया तत्सम्बन्धावच्छिन्नप्रतियो-गिताकवस्तुशून्यत्वाभावेन चिदचिदुभयात्मकब्रह्मणः केवलत्वम-द्वितीयत्वञ्चानुपपन्नम्। न च प्रत्येकं तादृशरूपेण चितोऽचितश्च वस्तुमत्त्वेऽप्युभयत्वावच्छेदेन चिदचितोर्वस्तुशून्यत्वे बाधकाभावो निर्गुणत्ववदिति वाच्यम्, दृष्टान्तवैषम्याद् गुणस्याचिदंशे वृत्ति-त्वेऽपि चिदंशे वृत्तित्वविरहाद् युज्यत एव द्वित्वावच्छेदेन तदभावः, आत्मनि वृत्तेरात्मत्वस्य घटावृत्तित्वेनात्मघटयोर्नात्मत्वमिति प्रतीत्या द्वित्वावच्छेदेनात्मत्वाभाववत्। इह तु विभिन्नसत्तामादाय चिदंशोऽ-

च्यते, श्रूयते हि 'असद्वा इदमग्र आसीदिति'। अत एव नासदीय-मन्त्रवर्णो न केवलमसदासीन्न वा केवलं सदित्यादार्थं प्राहयति।

तथा च नासदीये सूक्ते सदिति अपरिणामिसतो बोधकम्, तदन्यच्च असदिति। "सदेव सोम्येदमग्र आसीत्" इत्यादिश्रुतौ तु परिणामित्वापरिणामित्वकृतविशेषमविगणय्य सत्तामात्रं विवक्षितमित्येवकारो नासङ्गतः। "असद्वा इदमग्र आसीत्" इति श्रुतौ वै-कारस्य एवकारसमानार्थकतया असदेवेति पर्य्यवसितार्थायाम् असत् पदम् अनित्यसत्ताभाववदेवेत्यर्थकम्। ततो वै सदजायतेत्यत्र सत्पदमनित्यसत्तावदर्थकम्। अतएव असद्वा इदमग्र आसीदित्यनेन श्रुतिवाक्येन असतोऽपि सत्वसम्बन्धः प्रतिपादितः। अनित्यसत्त्वाभाववतस्तस्य कारणा-नुगमेन नित्यसत्त्वाश्रयत्वात्। अन्यथा आसीदिति न स्यात्। "तद्ध्येक आहुः, असदेवेदमग्र आसीत्" इति परमतानुवादाकारा श्रुतिस्तु एकान्तेनासतो गगनकुसुमादेर्निरुपाख्यस्वरूपादभावाद् वा सतो जन्म निर्दिशति, 'कथमसतः सज्जायेत' इति श्रुतिश्च तदु-पादानत्वनिषेधपरा नतु सदसत्स्वरूपाद् ब्रह्मणो जन्म प्रतिषेधति। 'नासदासीनो सदासीत्' ( ऋ० वे० ८ अष्ट० ७ अ० १७ व० ) इति मन्त्रवर्णेन सदसत्स्वरूपब्रह्मणः प्रतिपादनात्। द्वेधा च ब्रह्मणो रूपं 'मूर्तश्चामूर्तश्च मर्त्यश्चामृतश्च' इत्यादिना ( बृह० २।३ ब्रा०) तस्यैव सूचनात्, "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावी-शते देव एकः।" (१।१०) इतिश्वेताश्वतरमन्त्रवर्णात्, 'संयुक्तमेतत्-क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः।' (१।८श्वे०) इति संयुक्त-

चराचरस्वरूप ईश्वर अव्यक्तं त्रिगुणं दृष्टाचिन्त्यशक्तिमनन्तवर्णान्त-राय । तस्मात् त्रिगुणपरनाम्नोऽशिवत्वचित्तोर्भिरत्वात्मकतया सूत्र सम-न्वयः । एकस्य समन्वितस्यैकस्य तस्य ब्रह्मणः अस्याभावादानत्वं शास्त्रयोनित्वञ्च सिद्धम्, तच्च ब्रह्म, शक्तिरेव । सिद्धान्तोऽयं भगवद्भिराचार्य्यचरणैः प्रपञ्चसारे प्रदर्शितः । तथाहि—

अथाभवन् ब्रह्महरीश्वराद्याः पुरा प्रधानात् प्रलयावसाने ।
गुणप्रभिन्ना जगतोऽस्य सृष्टिस्थिति-क्षय-स्पष्टनिविष्टचेष्टाः ॥

अस्य च प्रधानस्याक्षरमिति संज्ञान्तरं यथा तत्रैव, स्वजन्मादिप्रष्टॄन् ब्रह्मादीन् प्रति श्रीकृष्णवचनम्—

'यूयमक्षरसम्भूताः सृष्टिस्थित्यन्तहेतवः' ।
अक्षरं नाम किं नाथ कुतो जातं किमात्मकम् ॥
इति पृष्टो हरिस्तेन सरोजोदरयोनिना ।
मूलार्णवर्णविकृतीर्विकृतेर्विकृतीरपि ॥
तत् प्रभिन्नानि मन्त्राणि प्रयोगांश्च पृथग्विधान् ।
वैदिकांस्तान्त्रिकांश्चैव सर्व्वानित्थमुवाच ह ॥
प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम ।
अणोरणीयसी स्थूलात् स्थूला व्याप्तचराचरा ॥
आदित्येन्द्वादितेजोमद् यद् यत् तत्तन्मयी विभुः ।
न श्वेतरक्तपीतादिवर्णैर्निर्द्धार्य्य सोच्यते ॥
न गुणेषु न भूतेषु विशेषेण व्यवस्थिता ।
अन्तरान्तर्बहिश्चैव देहिनां देहपूरणी ॥
स्वसंवेद्यस्वरूपा सा दृश्या देशिकदर्शितैः ।

पश्चात्कालास्ततो यान्ति लब्ध्वा या नोपलभ्यते ॥
पुनःपुनःकर्मोत्कर्षेऽस्मिन्नाशु निरीक्ष्यते ।
प्रधानमिति यामाहुर्या शक्तिरिति कथ्यते ॥
या युष्मानपि मां नित्यमवष्टभ्यातिवर्त्तते ।
साहं नूनं तवैवाम्ब यद् वेद्यं तत्तु सा स्मृता ॥
प्रलये व्याप्यते तस्यां चराचरमिदं जगत् ।
सैव सर्वं वेत्ति परमा तस्या नान्योऽस्ति वेदिता ।
सा तु कालात्मना सम्यक् मयैव ज्ञायते सदा ॥

इति मन्त्रसारे प्रथमपटले ।

कालात्मना मयेति स्वस्य ब्रह्मभावेन, 'ब्रह्मवेद ब्रह्मैव भवति' इति श्रुतेः । अतः, 'नान्योऽस्ति वेदिता' इति पूर्वेण न विरोधः । व्यक्तः पद्यान्तरार्थः । समुदिततात्पर्य्यन्तु—

मूलमन्त्रतद्विकृत्यादिमन्त्राः सर्व्वे एवाक्षरात्मानः, अक्षरञ्च नित्यसम्बद्धप्रकृतिपुरुषाभिन्नं, सम्बन्धश्च कालघटितः, कालः पुनः प्रकृते रजोंऽशविशेषः । तच्छक्तिश्च बलाख्या । दम्पतिस्वरूपयोः प्रकृतिपुरुषयोर्बाहुवदङ्गभूतः कालस्तदुभयं मिथः सम्बध्नातीति तस्य पृथग् ग्रहणम् । तस्मादेवाक्षराद् ब्रह्मादयः सम्भूताः । तदेकदेशोपाधिकत्वाच्च श्रीकृष्णस्य तदवष्टब्धत्वं तदतिवर्त्तनीयत्वञ्च; नचेदमक्षरं सांख्योक्ता जडा प्रकृतिः; प्रधानपदेन ग्रहणादिति शङ्कनीयम्, 'सैव सर्वं वेत्ति परमा तस्या नान्योऽस्ति वेदिता'—इत्यनेन तस्या निरतिशयसार्व्वज्ञ्यप्रतिपादनात् । आदित्यादिसकलज्योतिःस्वरूपत्वकथनेन स्वप्रकाशत्वसूचनाच्च । परब्रह्मत्वाच्चाक्षर-

मिति निरुक्तेन । तत्र प्रकृतिपुरुषात्मकं तदनुगता ब्रह्म । शक्तित्वेन चैकं "या शक्तिरिति कथ्यते" इत्युक्तेः । शक्तिरेव ब्रह्मेति परमात्मेति चाद्यमित्यादिषु च श्रुतिस्मृतिषु व्यपदिश्यते, तथानुपदं व्युत्पादयिष्यति । ननु तेषामपि कालसम्बन्धस्यापि क्षीरनीरसंयोगतुल्यत्वेनोक्तत्वात् कालपरत्वापत्तिः प्रकृतिपुरुषयोरिति चेत्, विभुत्वादेव तदभ्युपगमात्, यथा वैदिकान्तरमते दिक्कालादयो विभवः, नित्यसंयोगवादि-न्यायवार्त्तिककृन्मते परस्परं सम्बध्यन्ते नच सावयवा भवन्ति तद्वत् ।

अयञ्च सम्बन्धः सत्ताविशेषरूप इत्युक्तमेव । न चैवं न्यायमते सर्व्वकालसम्बन्धरूपसत्तया दिगाकाशादिष्वविशेषात् तेषामैक्यापत्तिरिति वाच्यं, तन्मते तत्सम्बन्धस्य सम्बन्धिभेदेन भेदाभ्युपगमात् । प्रत्येकं कार्य्यभेदादेव सत्ताभेदसिद्धेश्च । प्रकृतिपुरुषपरमात्मनोः सदसतोश्चिदचित्स्वरूपयोः साहित्याभावे प्रत्येकं कार्य्यविरहस्य दर्शितत्वात् । सदसत्सम्बन्धस्तावदयम्, सर्व्वोत्कृष्टावपि प्रत्यक्षमुपलभ्यते—तथाहि, असत्या त्वचा युक्तात् सतस्तण्डुलादेरङ्कुरोत्पत्तिः, न तु केवलाया असत्यास्त्वचः, केवलात् सतस्तण्डुलाद्वा । अत्र चिदचिच्छक्तिरप्युन्नेया । ततः समन्वयात् नित्यसम्बद्धचिदचित्स्वरूपा शक्तिराद्यजन्मापादानतया वेदवक्तृतया च ब्रह्मेति सिद्धम् । यद्यपि एतेन सामान्यतः सर्व्वशाक्तमतमेव परिष्कृतं भवति, तथापि गृहियतिसाधारणस्य श्रीचक्रोपासनस्य भगवच्छङ्कराचार्य्यपरिगृहीतस्य तदीयशिष्यपरम्परासु प्रचरतो विशेषविवरणमत्र प्रस्तूयते,—तत्रादौ श्रीचक्रं गौडेषु आनन्दलह-

रीति प्रसिद्धायां सौन्दर्य्यलहर्य्यां भगवत्पादार्य्यदर्शितदिशा निरूपयामः—तद् यथा—

चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि
प्रभिन्नाभिः शम्भोर्नवभिरपि मूलप्रकृतिभिः ।
त्रयश्चत्वारिंशद् वसुदलकलाश्रत्रिवलय-
त्रिरेखाभिः सार्द्धं तव भवनकोणाः परिणताः ॥

अस्यार्थः—चत्वारः श्रीकण्ठाः, चतस्रः शिवरेखाः, पञ्च शिवयुवतयः, पञ्च शक्तिरेखाः, ताभिः प्रभिन्नाभिः ऊर्द्ध्वाधोमुखभावस्थित्या प्रकर्षेण मिथो भिन्नत्वेन ज्ञाताभिः—शम्भोर्बिन्दुरूपस्य शिवशक्तिसम्मेलनरूपस्य मूलप्रकृतिभिः आधाररूपत्वेन गृहीताभिः त्रयश्चत्वारिंशत् संख्यकास्तवभवनकोणाः अष्टदलषोडशदलत्रिमेखलभूपुरत्रयेण सार्द्धं अर्द्धैः सह अर्द्धैः चतुर्भिर्द्वारात्मकस्थानैः सह यथा स्यात् तथा—परिणताः सम्पन्नाः । उक्तञ्च प्रपञ्चसारे— "बिन्दुत्रिकोणवसुकोणदशारयुग्म-मन्वस्रनागदलसंयुतषोडशारम् । वृत्तत्रिभूपुरयुतं परितश्चतुर्द्वाः श्रीचक्रमेतदुदितं परदेवतायाः ।" इति । एतेनैतदुक्तं भवति—यद्धि शिवशक्त्यात्मकं ब्रह्म तदेव मूलं बिन्दुभूतं सूक्ष्मं कारणभावोपगतकार्य्यकं श्रीचक्रम्, यद्यपि पञ्चभूतपञ्चतन्मात्रेन्द्रियदशकमनांसीत्येकविंशतितत्त्वानि, माया-शुद्धविद्या-महेश्वर-सदाशिवाख्यानि चत्वारि चेति पञ्चविंशतेस्तत्त्वानामाद्यान्येकविंशतितत्त्वानि मायिकानि, शुद्धविद्यामहेश्वरौ तु मिलितौ षड्विंशतत्त्वमिति कोलकुलावतंसलक्ष्मीधरदेशिकपादादीनां समयिनां मतम्, एवञ्च षड्विंशतत्त्वस्य

माधिकमपञ्चकाद्योतकमुपस्थाय तस्य सूक्ष्मश्रीचक्रस्वरूपनाम-सङ्गतमित्युच्यते, तथापि मायायाः शुद्धविद्याप्रभवत्वात्, शुद्धविद्यायाश्च शिवसम्बन्धतया चाप्रत्यवायो चोद्यपरिहारात् । न च कार्य्यस्य कारणवैजात्यापत्तिरिति वाच्यम्, त्रिगुणायाः शक्तेर्मायाविःस्फुरणादेव शुद्धविद्यात्मकताभ्युपगमात् । यद्वा ब्रह्मस्वरूपं सर्व्वान्तरं श्रीचक्रं तदेवोपास्यतया शरीरस्थं निर्णीयते— तस्य हि नादापरनाम्नो बिन्दुपरनामकात् षट्चक्रगाहनादभेदोऽनुसन्धेयः । तथाहि—आधारचक्रं चतुर्द्दलं, तत्कर्णिका त्रिकोणात्मिका, स्वाधिष्ठानं षड्दलं, तत्कर्णिकाष्टकोणात्मिका ; मणिपूरं दशदलं पद्मं, तत्कर्णिका दशकोणात्मिका ; अनाहतं द्वादशदलं, तत्कर्णिका द्वितीयदशकोणात्मिका ; विशुद्धचक्रं षोडशदलं, तत्कर्णिका चतुर्द्दशकोणात्मिका, एतावत्पर्य्यन्तं शक्तिचक्रैक्यम् । अत्र कर्णिकासु श्रीचक्रस्य शक्तिरेखापञ्चकमुपदर्शितम् । आज्ञाचक्रं द्विदलमष्टकोणमेकत्र, षोडशकोणमपरत्रेति द्विधा विभिन्ना तस्य कर्णिका । शिवरेखाणां चतसृणां द्वयोर्द्विदलकर्णिकात्वेन ग्रहणम् । अन्ययोर्द्वयोर्वृत्तत्रयेण ससोपानचतुर्द्वारयुक्तभूपुरत्रयेण च ग्रहणम् ।—तत्र स्वाधिष्ठानान्ते एकं वृत्तं रुद्रग्रन्थ्यात्मकम्, अनाहतान्ते द्वितीयं विष्णुग्रन्थ्यात्मकम्, आज्ञाचक्रान्ते तृतीयं ब्रह्मग्रन्थ्यात्मकम्, तत उपरि चतुर्द्वारोपेतं भूपुरत्रयोपेतं द्वारेषु चतुर्षु सोपानयुक्तं तत्र सहस्रदलकमलकर्णिका । बैन्दवस्थानं चतुर्द्वारोपेतं कर्णिकामध्ये । मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञाख्यानि षट्चक्राणि यथाक्रमं चतुर्द्दल-षड्दल-

पञ्चाशद्वर्णात्मकत्वं, पञ्चाशतो वर्णानाञ्च सूर्य्यचन्द्राग्निकलात्मकत्वं, सूर्य्यचन्द्राग्निरूपेण त्रिखण्डत्वञ्च मन्त्रचक्रगुरूणामित्यैक्यचतुष्टयमनुसन्धातव्यम् इत्याचार्य्यमतम्। ताश्च षोडश नित्याः श्रीचक्रेऽप्यङ्गतयान्तर्भूताः, तथाहि, ताः,—अ—क—च—ट—त—प—य—शात्मकाष्टवर्गस्वरूपतया श्रीचक्रान्तर्गताष्टदलपद्मेऽष्टासु पत्रेषु प्रत्येकं युग्मयुग्मरूपेण स्थितास्तथाष्टकोणचक्रे अष्टसु कोणेष्वन्तर्भूता युग्मयुग्मरूपेणैव। अष्टदलपद्मं शैवम्, अष्टकोणचक्रञ्च शाक्तमिति स्मर्त्तव्यम्, एवं परत्रापि भेदः स्मर्त्तव्यः। एता एव नित्याः षोडशस्वरात्मकतया षोडशदले स्थिताः, क्रमिकन्यासयोर्दशारयोः सपादैकैककोणे एकैकनित्याया अन्तर्भावः। बिन्दुरूपेण प्रथमा नित्या, त्रिकोणरूपेण द्वितीया नित्या, शिष्टाश्चतुर्दश नित्याश्चतुर्दशारस्य चतुर्दशकोणेषु स्थिताः। मेखलात्रयं भूपुरत्रयञ्च बिन्दुत्रिकोणयोरन्तर्भूतं, तेन प्रथमद्वितीयनित्ययोरेव तत्राधिष्ठानमिति मेरुप्रस्तारप्रकारः। मातृकातादात्म्यं श्रीचक्रस्य कैलासप्रस्तार इत्युच्यते। वशिनीप्रभृतयोऽष्टौ शक्तयो विद्यायोगिनीप्रभृतयो द्वादशयोगिन्यः, एता विंशतिः कलाः दशारयुग्मे चिन्तनीयाः, इत्यादिरूपो भूप्रस्तारो वशिन्यादितादात्म्यम्। अन्यत् सर्व्वं सुभगोदयादावनुसन्धेयम्। अस्मिन् समयिमते नादेन बिन्दोरैक्यं, बिन्दुना कलाया ऐक्यम्, कलायाश्च नादेनैक्यम्, कलया बिन्दोरैक्यम्, कलया नादस्यैक्यम्, श्रीविद्यया पञ्चकस्यैक्यमिति षड्विधमैक्यमनुसन्धेयम्, इति देशिकपारमतम्। सोऽपि समन्वयशास्त्रार्थः। तेन रूपेण दशभुजा भगवती श्रीविद्या मणिपूरे निदिध्यासनेनोपासिता प्रसन्ना तत्रैव

दृश्यमाना सार्ष्टिमुक्तिं ददाति, सार्ष्टिर्नाम, देव्या ब्रह्माण्डशिरःस्थ-पुरसमीपे पुरान्तरे देवीसेवानन्देनावस्थानम् । अनाहतचक्रे संवित्कमले तदुपासनसिद्धानां तत्कृपया सालोक्यमुक्तिः, सालोक्यं देव्याः पत्तने निवासः, विशुद्धचक्रोपासनसिद्धानां सामीप्यमुक्तिः, सामीप्यं नाम अङ्गसेवकत्वम् । आज्ञाचक्रोपासनसिद्धानां सारूप्यमुक्तिः, समानरूपत्वेऽपि न तद्भावप्राप्तिरिति सायुज्याद् भेदः, एतास्चतस्रो मुक्तयो विषयदुःखनिवृत्तिसहितानन्दलाभसाम्येन गौण्यः, पुनरावृत्तिसत्त्वात् । पुनरावृत्तिरहितनिरतिशयानन्दावाप्तिरूपा सायुज्यमुक्तिः सहस्रारकमलोपासनसिद्धानामेव । जीवन्मुक्तिदशायां कुलालचक्रभ्रमिवत् प्रारब्धवशाद् धृतदेहस्तिष्ठति ।

समयिनाम् उत्तमाधिकारिणां द्विजानां बाह्यपूजा नास्ति; तदुक्तं सनत्कुमारसंहितायाम्—

बाह्यपूजा न कर्त्तव्या कर्त्तव्या बाह्यजातिभिः ।
सा क्षुद्रफलदा नृणामैहिकार्थैकसाधनात् ॥ इति

इति बिन्दुनादादीनामैक्यानुसन्धानेन श्रीचक्ररूपतया ज्ञानमेव तेषां परमसाधनम् । तेन वशीकृतस्य चित्तस्य मणिपूरादौ देवीदर्शने षट्चक्रभेदेनोपयोगादिति संक्षिप्तं समयिमतम् । विशेषविवरणन्तु सुभगोदयादिग्रन्थाज् ज्ञेयम् । समयिमते एतत्सूत्रोत्थितबीजन्तु-कुतः पुनः श्रीचक्रे योनित्वम् ? शिवशक्तिसमन्वयात्; श्रीचक्रस्य नवयोन्यात्मकत्वं शिवरेखाचतुष्टय-शक्तिरेखापञ्चकयोर्मेलनात्—यथाहि अकारादि लिपिः शब्दात्मकवर्णानामभिव्यञ्जिका तथा रेखाकारचक्रमिदं शिवशक्तिसम्मेलनं प्रतिपादयत् प्रतिपाद्यद्वारा पिण्डाण्डस्य-

स्थूलदेहाख्यस्य तथा ब्रह्माण्डस्य योनिर्भवतीति भावः। अथवा सम-यिमतेऽपि शास्त्रयोनित्वादित्यस्य वेदकारणत्वादित्येवार्थः। अन्यस्य प्रपञ्चस्य वेदपूर्वकतायाः सूत्रकृता वक्ष्यमाणत्वात्। स्वहेतुकवेद-द्वारा प्रपञ्चहेतुत्वं श्रीचक्रस्य सिद्धम्।

ननु श्रीचक्रस्य शास्त्रयोनित्वं कुत इत्याह—तत्तु समन्व-यात्—तत् शास्त्रयोनित्वन्तु समन्वयात् श्रीचक्रस्य मातृका-तादात्म्यतया सम्मेलनात्। पञ्चाशद्वर्णात्मिकया मातृकया वेदादिसकलशास्त्रमन्त्रादिप्रवृत्तेः, मातृकात्मकश्रीचक्रस्य शास्त्र-योनित्वं सिद्धम्। तस्य मातृकात्मकत्वञ्च यादृशेन समन्वयेन—सम्यगनुगमेन भवति तन्मतविवरणावसरे उपदर्शितम्। वस्तुत आद्यस्य प्रपञ्चस्य जन्महेतुत्वं शास्त्रयोनित्वञ्चेति द्वयं तत्पदेन परामृश्यते; कुतः श्रीचक्रस्य तद्द्वयमित्यत आह तत्तु इति सूत्रम्। 'तत्' तथाविधद्वयं 'समन्वयात्'=भोग्यजन्महेतुत्वं शिवशक्त्योर्मेलनात्—

परोऽपि शक्तिरहितः शक्तः कर्त्तुं न किञ्चन।
शक्तः स्यात् परमेशानि शक्त्या युक्तो भवेद् यदि॥

इति सुभगोदयोक्तेः। शास्त्रयोनित्वञ्चोक्तप्रकारात् मातृकाता-दात्म्येन मेलनादित्यास्तां विस्तरः॥ ४॥

मनूभयश्रुतिः सत्येत्यभीतं चित्त एव सद्रूपेण अवयवात् सत्यं ज्ञानमनन्तं ब्रह्मेति (तै० २) नान्योऽतोऽस्ति विज्ञातैव एष त आत्मान्तर्याम्यमृतोऽन्यदार्त्तम् (बृ० ३।७।२३) इत्यादौ अमृतरहेन

स्वरूपतया: कार्यत्वेन कारणरूपतया: भवेत्, नापि शब्दबोधकत्वं श्रौतमित्याशङ्कायामाह—

( ईक्षत्यधिकरणम्—५ )

ईक्षतेर्नाशब्दम् १।१।५

ईक्षतिरयं धात्वर्थवचनः, ईक्षतेरित्यत्र ईक्षणार्थकधातुघटितश्रु-तेरित्यर्थः, सा च श्रुतिः "तदैक्षत बहु स्यां प्रजायेय" इति (छान्दोग्य० ६।२।३) ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्नि-गूढाम्, (श्वेता० १।३) इत्यादिरूपा । ततश्च तदुभयमेव 'न अशब्दम्' न शब्दप्रमाणेन श्रुत्या विरहितम्, इत्यक्षरार्थः ।

व्याख्यानन्तु—'सदेव सोम्येदमग्र आसीत्' इति श्रुतौ सच्च चिदचिदुभयवृत्तिर्न वेति संशयः, नोभयवृत्तिः, किन्तु चिन्मात्र-वृत्तिः, सत्यं ज्ञानमित्याद्युपदर्शितश्रुतेः । इति प्राप्तं, तन्न, तस्य भावकर्तृभेदध्रौव्येण विकल्पासहत्वात् । तथाहि चिन्मात्रवृत्तिरिति चित्पदं भाववचनं कर्तृवचनं वा ? नाद्यः, 'यः सर्वज्ञः सर्ववित्' इत्यादिश्रुतिविरोधात्, न द्वितीयः, 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञा-नमानन्दं ब्रह्म' इत्यादिश्रुतिविरोधात् । न च यदेव भावात्मकं तदेव कर्तृरूपमिति वाच्यम्, भावकर्त्रोर्भेदस्य नैयत्यात् ।

ननु भावो भवति सत्ता अस्तीत्यादौ व्यभिचार इति चेत्, मैवं, भावकर्तृविशेषयोर्भेदस्य नैयत्ये तात्पर्य्याद्, विशेषस्तु सकर्म्मकत्व-प्रयुक्तः सविषयकत्वप्रयुक्तो वा बोध्यः । भावो भवतीत्यादौ भूधातोः सकर्म्मकत्वाभावेन सकर्म्मकधात्वर्थतदीयकर्त्रोर्भेदनैयत्ये दोषाभा-

वात्। न च तत्रापि रुजर्थानां भाववचनानामव्यरेदिति पाणिनीय-दर्शनात् सकर्म्मकधात्वर्थस्यापि कर्त्तृत्वेन व्यभिचार इति वाच्यम्, तत्रापि वास्तवभेदसत्त्वेन व्यभिचारविरहात्। चौरस्य रोगस्य रुजेत्यादौ हि रोगस्य व्याधिरूपस्य कर्त्तृत्वं भावश्च दुःखमात्रं, न तु व्याधिरपीति भेदसत्त्वात्। सविषयकत्वप्रयुक्तभेदनैयत्ये तत्स्थलस्योपदर्शयितुमशक्यत्वाच्च, रुजार्थधातोः सविषयकार्थकत्वाभावात्; यत्र धात्वर्थः सविषयकस्तत्र धात्वर्थस्य तदीयकर्त्तुश्च भेदो नियत एवेति हि तदर्थः। नहि-ज्ञानं, जानाति, इच्छा, इच्छतीत्यादिप्रयोगो विनोपचारमुपपद्यते, उपचारश्च गत्यन्तराभाव एवाभ्युपगम्यते। अपि च "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुत्याश्रितसत्यपदस्य अमृतमर्त्यव्यपदेशबोधितचिदचित्परत्वं श्रुतेरेवेति पुरस्तादुपदर्शयिष्यमाणतया सत्यात्मकब्रह्म प्रकृत्य 'अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः' ( तै० २।६ ) इत्युत्तरवाक्येन चिदचिदुभयसाधारणसत्तायाः प्रतिपादनात्, सत्तायाश्चिन्मात्रवृत्तित्ववादो न युक्तिसहः। न च सत्तया उभयवृत्तित्वे अमृतपदेन चितो मर्त्यपदेनाचितश्च ग्रहणमयुक्तमिति वाच्यम्, अमृतपदेनापरिणामिसत्तावतो ग्रहणात्तादृशसत्ताभाववतश्च मर्त्यपदेनेति त्वदाक्षेपस्य परीहारात्, तस्माच्चिदचिदुभयस्वरूपं ब्रह्म, यस्य परमात्मेत्यादिकं संज्ञान्तरम्। एवं हि सगुणत्वनिर्गुणत्ववन्मिथो विरुद्धयोरपि ज्ञानत्वज्ञातृत्वयोरवच्छेदकभेदेनोपपादनीयत्वात्। तेनैव प्रकारेण ब्रह्मणि आनन्दस्य भेदाभेदौ बोद्धव्यौ। तथा च सत्ताया उभयवृत्तित्वे ईक्षति-श्रुतिर्म्मानम्—या हि 'सदेव सोम्येदमग्र आसीत्'

( छा० ६।२ ) इत्यतोऽनन्तरा भवति—'तदैक्षत बहुस्यां प्रजायेय' इत्येवंरूपा । तच्छब्दः प्रक्रान्तवाची, प्रक्रान्तञ्च सदिति, सच्चेदिति यस्यार्थः ; अत्र चिल्लक्षणेनचाचिल्लक्षणेच्छयोरेकत्र प्रयोग सत्-च्छब्दयोरेकवचनान्ततया च घटपटोभयमितिवत् सदिति वा तदिति वा उभयवृत्त्येकधर्म्मप्रकारकबोधमादधाति, तस्मात्सशब्दं सत्ताया उभयवृत्तित्वम् । ब्रह्म न शक्तिस्वरूपमित्याक्षेपोऽप्यनेन सूत्रेण परिहृतः, तथाहि 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुत्युपदर्शितं ब्रह्म, शक्तिस्वरूपं न वेति संशये, अन्नादिरू-पेणारभ्य 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यन्तानुवाकेषु शक्तेरश्रवणान्न शक्ति-स्वरूपम् ; अशब्दं हि तत्, इति प्राप्ते, ब्रह्म शक्तिस्वरूपमेवेति ब्रूमः, "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् । यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः" इतीक्षणार्थकधातुघटित-श्वेताश्वतरमन्त्रवर्णाद् ब्रह्मणः शक्ति-रूपत्वसिद्धेः । न चात्र ब्रह्मणो निर्देशविरहेण मतमिदमयु-क्तमिति शङ्कनीयम्, 'किं कारणं ब्रह्म कुतः स्म जाताः जीवाम केन क्व च संप्रतिष्ठाः । अधिष्ठिताः केन सुखेतरेषु वर्त्तामहे ब्रह्मविदो व्यवस्थाम् ।' इति पूर्व्वतनमन्त्रे ( श्वे० १।१ ) ब्रह्मण एव जिज्ञास्यत्वेनोपक्रमेण तदुत्तरवचने तस्यैव लाभात् । 'कुतः स्म जाताः' इत्यादि जिज्ञासैव देवात्मशक्तिम्' इत्यनेन निवर्त्यमाना 'यतो वा इमानि भूतानि जायन्ते' इति ब्रह्मलक्षणं देवात्मशक्तौ श्राहयति । तस्या एव ध्यानयोगानुगतैर्ऋषिभिर्दृष्ट-त्वात् । न च नेदं ब्रह्मलक्षणत्वेन गृहीतं भवतेति वाच्यम्,

'यतः आद्यस्य जन्म' इत्यनेनास्यापि लक्षणस्य संग्रहाद् यथा तरङ्गजन्मापादानस्य जलस्य तरङ्गजनितबुद्बुदमालाया उपादानत्वं तद्वत्, आद्यजन्मापादनस्य ब्रह्मण आद्यजनितसर्व्वभूतजन्मन्युपादानत्वे बाधाभावात्। यथा वा सांख्यमते मूलप्रकृतेर्महदादिसृष्टाहङ्कारादेरप्युपादानत्वं तद्वद्, यथा वा कपालादिकार्य्यघटादौ मृदादेरुपादानत्वं तद्वत्। इमं हि सिद्धान्तं प्रदर्शितश्रुतिमन्त्रस्योत्तरार्द्धं 'यः कारणानि निखिलानि तानि' इति प्रतीकः प्रमाणयति। य इति पुंलिङ्गनिर्देशस्तु शक्त्यभिन्नार्थकदेवात्मशब्दस्य विशेष्यवाचकत्वाभिप्रायेण। उपसर्जनीयस्यापि यत्तद्भ्यां परामर्शो व्युत्पत्तिसिद्धेः, 'दृश्यते राजमातङ्गास्तस्यैवामी तुरङ्गमाः' इति 'दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ' इत्यादिषु च दर्शनात्। देवात्मा च क्रीडासहित आत्मा, देवशब्दस्य क्रीडार्थकदिवधातुसिद्धत्वात्। क्रीडा हि अचिच्छक्तिः, आत्मा च चिच्छक्तिस्तदुभयरूपा या शक्तिस्तद्ब्रह्मेति स्थितम्। 'ब्रह्म पुच्छं प्रतिष्ठा' इति श्रुतौ ब्रह्मपदं तथाविधशक्तिपरम्। अन्यथा 'आनन्द आत्मा' इत्यनेनाभेदः स्यात्। न चायं विषयानन्दः, 'आनन्दो ब्रह्मेति व्यजानात्' इत्युपक्रम्य तदनन्तरं तदनपवादस्यैव विषयानन्दपरत्वे बाधकत्वात्। 'आनन्दो ब्रह्मेति व्यजानात्' इत्यत्र तु आनन्दस्वरूपे ब्रह्मत्वाश्रयत्वं बोधितम्, घटो घटपटवृत्तिद्वित्ववानितिवत्। एतच्चानन्दमयाधिकरणे विशेषेण प्रतिपादयिष्यामः। न च 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति मन्त्रे शक्तिपदं न ब्रह्मपरं 'स्वगुणैर्निगूढाम्' इत्युक्तेः, न हि स्वप्रकाशस्य ब्रह्मणो गुणगूढत्व-

सम्भव इति वाच्यं सर्व्वशक्तिभुवः स्वगुणेन गूढ़त्वस्यैव युक्तत्वात् 'साक्षी चेताः केवलो निर्गुणश्च' इति श्रुतिस्तूपपादितपूर्व्वा । स्वगुणगूढ़त्वानभ्युपगमे सर्व्वेषामेव सदा ब्रह्मसाक्षात्कारसम्भवेन मोक्षः प्रसज्येत, न हि अज्ञानात्मकस्य दुर्व्वलस्य कस्यचित्, बलीयसो ब्रह्मणस्तिरोधायकत्वं सम्भवति । नन्वेवमपि देवात्मशक्तिपदस्य देवात्मनः शक्तिरिति समासाश्रितत्वमभ्युपगम्यते, देवात्मा च परमात्मा—न तु देवात्मैव शक्तिरिति समासाश्रितत्वमिति चेन्न, समाससन्देहे निषादस्थपतिन्यायेन कर्म्मधारयस्यैव ग्रहीतुं युक्तत्वात् । भवन्मते ब्रह्मण आत्मनश्चाभेदेन 'कालात्मयुक्तान्यधितिष्ठत्येकः' इत्यनेनोक्तस्य आत्माधिष्ठातृत्वस्य, ब्रह्मवृत्तित्वानुपपत्तेश्च, अधिष्ठेयाधिष्ठातृभावस्य भेदापेक्षत्वात्, अस्मन्मते चोभयात्मकस्य ब्रह्मणः प्रत्येकमुभयपर्य्याप्तधर्म्मावच्छिन्नभेदविवक्षया अधिष्ठातृत्वसिद्धेरप्रत्यूहत्वात्। तस्मादीक्षणश्रुत्यैव शक्तेर्ब्रह्मत्वं सिद्धम्। ईक्षते रित्युपलक्षणम्, ईक्षतिशब्दो दर्शनपरो वा, दर्शनशब्दश्च श्रुतिसामान्यमपि बोधयति, 'तथाहि दर्शनम्' 'तद्दर्शनात्' (२।३।३०) इत्यादिसूत्रे तदर्थे प्रयोगात् । तेन 'ब्रह्मणो नाम सत्यमिति तानि ह वा एतानि त्रीण्यक्षराणि सतीयमिति यत् 'सत्' तदमृतं यत् 'ति' तन्मर्त्त्यम् अथ यद् यं तेनोभे यच्छति' ( छान्दोग्य० ८।३ ) इति श्रुतिरपि गृहीता भवति । सत्यमिति—हृदयमित्यस्य हृदयमिति वत् ( ८।३ ) सतीयमिति वाक्यस्य संक्षेपः । सतीयमिति वाक्ये हि त्रीणि स्वराख्यानि अक्षराणि सम्भवन्ति—प्रथमस्वरः अकारव्यक्ति, द्वितीयस्वर इत्ववान् वा तालव्यलक्षणो वा, तृतीयः स्वरः अकार-

व्यक्त्यन्तरम् इति । सतीयमित्यत्र पदच्छेदे तु 'सती इयम्' इति रूपम्, इयं सतीति वाक्यार्थः। तत्प्रतीकवर्णार्थं विवृण्वती स्वयं श्रुतिरेवात्र ब्रह्मणो नित्यसम्बद्धचिदचिद्रूपत्वमाह, "यत् 'सत्' तद् अमृतम्, यत् 'ति' तन्मर्त्त्यम्" इति। अत्र षोडशव्यञ्जनात्मकतकारपूर्व्वार्द्धावसानः सस्वरः सकारोऽमृतपदवाच्यस्यापरिणामिसतो ज्ञापकः, अपरिणामिसच्च चिदेवेति प्रागुक्तम्, तस्यैव तकारस्य परार्द्धमित्त्ववता तालव्यस्वरेण वा युक्तं 'यत् ति' इत्यनेन निर्दिष्टं मर्त्त्यपदार्थस्य परिणामिसतो द्योतकम्; परिणामि सच्चाचित्; अर्द्धमात्रात्मकस्यैकस्य षोड़शव्यञ्जनस्य एकैकपादेन विभागप्रदर्शनन्तु यथार्द्धमात्रायां पादयोः सम्बन्धस्य नित्यता तथा चिदचितोः सम्बन्धस्य ब्रह्मणीति ज्ञापनाय। ननु सति सम्बन्धे तस्य नित्यत्वं सूचयितुमर्हम्, चिदचितोः सम्बन्धश्च श्रुत्या न प्रतिपादित इत्याशङ्कां श्रुतिरेव निराकरोति। 'अथ यद् यं तेनोभे यच्छति यदनेनोभे यच्छति तद् यम्' इति। 'यम्' इत्येव सम्बन्धप्रतिपादकमित्यर्थात्। स च सम्बन्धः प्रकृतिपुरुषलक्षणयोश्चिदचितोरेककार्य्यानुकूला परिणामित्वोपलक्षिता सर्व्वकालसम्बन्धरूपा सत्ता, उभयोरनुगमकत्वादुभयत्वान्नातिरिच्यते, तदेव बलम्, कार्य्योपधानसामर्थ्यात्; नित्यं श्लिष्टतया नित्यसंयोगवच्चेति। परिणामित्वोपलक्षितेति परिचायकमात्रम् अपरिणामिसत्ताया वैलक्षण्यस्य द्योतनाय। प्रकृतौ प्रतिक्षणं यः समपरिणामो लयदशायाम्, यश्च विषमपरिणामः सृष्टिदशायाम्, तद् द्वयमेव पुरुषस्य प्रकृतेश्च कार्य्यम्, प्रकृतिस्तत्रोपादानं पुरुषश्च

निमित्तं, तदुभयस्वरूपं ब्रह्म प्रकृतिश्च निमित्तञ्चेति कथ्यते ॥ विलक्षणसत्तया द्वावेककार्य्यं प्रति कारणमिति भावः। न च व्या-सज्यवृत्तिधर्म्मस्य कारणतावच्छेदकत्वमप्रामाणिकमिति वाच्यम्—'तदैक्षत बहुस्यां प्रजायेय' इत्यादि श्रुतौ उभयसाधारणसत्तावतस्तत्-पदार्थस्य 'तत्तेजोऽसृजत' इत्युत्तरवाक्येन सृष्टिकारणताबोधनात् श्रुतिप्रमाणकत्वसिद्धेः। तार्किकपरिकल्पितयुक्तेरस्माभिरनभ्युप-गमाच्च। न च कारणताया द्वैविध्येन पृथगेव कार्य्यकारणभावस्य कल्पनीयतया व्यासज्यवृत्तेर्विलक्षणसत्तायाः कारणतावच्छेदक-त्वकल्पनं व्यर्थमिति वाच्यं, यतोऽस्मन्मते विलक्षणसत्तारूपमेकमेव कारणतावच्छेदकम्, उपादानत्वनिमित्तत्वव्यवहारस्तु अंशभेदभा-दायोपपादनीयः। यस्यांशस्य कार्य्ये भेदो नास्ति, कार्य्यस्य च तत्र भेदो वर्त्तते तत्रोपादानत्वव्यवहारः, यस्यांशस्य कार्य्ये भेदो वर्त्तते तत्र निमित्तत्वव्यवहारो यदि तावंशौ विलक्षणसत्तावन्तौ स्याताम्, नत्वन्यथेति नियमस्याभ्युपगन्तव्यतया कारणतावच्छेदकभेदस्या-कल्पनीयत्वात्। न च कार्य्यतावच्छेदकाभिन्नत्वभेदादेव कारणताद्वैविध्यमिति वाच्यं, पर्य्याप्तिसम्बन्धावच्छिन्नावच्छेदकताक-निरूपकत्वाख्यस्वरूपसम्बन्धविशेषस्य कार्य्यतावच्छेदकतया पर्य्याप्तिसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताककारणताभावस्य तत्-सम्बन्धावच्छिन्नतया चाभ्युपगमेन कारणताद्वैविध्याभावात्। कार-णतावच्छेदकसत्ताया अव्यासज्यवृत्तित्वे घटत्वपटत्वप्रकारकयोः सद्-सतोरेकेन रूपेण ग्रहणं न स्यात्। व्यासज्यवृत्तित्वे तु घटपटोभय-मित्याद्युभयत्वेनेव, एकेन सत्त्वेन तद्ग्रहणमुपपद्यते; अन्यथा घटो

द्वित्ववान् पटो द्वित्ववानित्यादेरिव भेदेनैव प्रतीतिः स्यात्। यत्तु, सतीयमिति न वाक्यं किन्तु उच्चारणार्थस्वरसंवलितवर्णसमुदायः, वाक्यरूपत्वे "यत् 'सत्' तदमृतं यत् 'ति' तन्मर्त्यम्" इत्याद्यक्षरार्थप्रदर्शनमनर्थकं स्याद् वाक्यादेवार्थप्रतीतेरिति तन्मन्दम्, तथा सति सतीयमिति वर्णसङ्घातविन्यासे प्रथमस्वरमुपेक्ष्य तकारे चतुर्थस्वरसम्बन्धनमयुक्तं स्यात् " 'यत्' ति तन्मर्त्यम्" इत्यत्र च प्रक्रान्तचतुर्थस्वरमुपेक्ष्य तकारे तृतीयस्वरसम्बन्धनमपि तथैव स्यात्, सस्वर-सकारस्य तकारान्तत्वाभावेऽप्युच्चारणयोग्यतया तत्र तकारयोजनस्यानर्थक्यं च प्रसज्येत। न च सतीयमिति वाक्ये तकारे चतुर्थस्वरयोगो विवरणे च 'ति' इति तृतीयस्वरयोग इति वैषम्यं वाक्यपक्षव्याघातकं साधकञ्चोच्चारणार्थत्वपक्षस्येति वाच्यं, तादृशवैषम्यस्यैव वाक्यपक्षसाधकत्वात्;—तथाहि पदद्वयघटितं खलु तद्वाक्यम्,—विच्छिन्ने च ते पदे 'सती इयम्' इति; तत्र प्रथमे चतुर्थः स्वरो द्वितीये च तृतीयः स्वरः; संहितयोस्त्वेक एव चतुर्थः स्वरो येन व्याकरणेन साधितः, तदेव व्याकरणं ह्रस्वस्वरनिर्देशस्य ह्रस्वदीर्घोभयग्राहकत्वमनुशास्ति, तदनुगुणश्चात्र तृतीयस्वरात्मकह्रस्वनिर्देशश्चतुर्थस्वरात्मकदीर्घस्यापि संग्राहकः। विवरणे ह्रस्वनिर्देशस्तु संहितपरपदस्वरूपस्मरणार्थः। यद्वा तृतीयस्वरनिर्देशोऽयं वर्णत्वव्याप्यजातिविशेषेण तालव्यस्वरमात्रबोधनाय, तदर्थं चतुर्थस्वरनिर्देशे तु प्रथमोपस्थिततृतीयस्वरपरित्यागः स्यात्, स चायुक्तः, यतः 'ति' इत्यनुपादाय 'ती' इति चतुर्थस्वरसंवलिततकारोपादाने पदद्वयघटितमिदं वाक्यं वा पदद्वयाघटितवर्णसमु-

शयो वेति संशयो न व्युदस्येत । उद्देशे चतुर्थस्वरं निर्दिश्य विवरणे तृतीयस्वरनिर्देशे तु तद्द्वारैव ह्रस्वदीर्घोभयबोधनाद् वाक्यत्वं विना तदुभयबोधनस्यानुपपत्त्या वाक्यत्वनिर्णयात् । अपिच, सतीयमित्यस्य वाक्यत्वमनभ्युपगम्य उच्चारणार्थस्वरादिघटित-'स-त-यम्'-इति-वर्णसंघातरूपत्वं स्वीकर्तुमीदृशयक्षराणीति दुरुपपादनीयं, तथाहि यदि स्वरा अक्षराणि, तदा सत्यमित्यत्राक्षरद्वयम्; यदि व्यञ्जनानि मकारान्तानि, चत्वारि; उभयरूपाणि चेत्, षड् भवन्ति; नतु कथमपि त्रीणि; संहितवाक्यपक्षे स्वरत्रयमुपपद्यत एवेति श्रुतिरेव स्वयं वाक्यपक्षं समर्थयते । न च 'द्वे वाव ब्रह्मणो रूपे' इत्यादि श्रुतौ सत्यामृतपदयोर्यद् व्याख्यानं स्वयमेव श्रुत्या दर्शितं तद्विरुद्धमेतदिति वाच्यं, तत्र कार्य्यब्रह्मणो विवरणात् अत्र तु परस्येति विशेषात्, कार्य्यब्रह्मणो द्वैरूप्यश्रुतिस्तु परब्रह्मणोऽपि तथात्वसूचनाय, मानन्तु तत्र दर्शिताः श्वेताश्वतरमन्त्राः । अतएव भगवान् भाष्यकारोऽपि 'यत् सत् तदमृतम्' इतिश्रुतिभाष्ये अमृतशब्दस्येदृशमर्थमेवोपदिदेश । एवञ्च सत्ताया उभयवृत्तित्वं शक्तेर्ब्रह्मत्वञ्च नाशब्दमिति सुस्थितम् ।

समयाचारपक्षे तु—ननु श्रीचक्रपरं समयिमतमागमसिद्धमपि वेदविरुद्धत्वेनाप्रमाणमित्याशङ्कामपनुदतीति पञ्चम सूत्रोत्थितिबीजम् । अथ पञ्चमसूत्रं तदनुगुणतया व्याख्यायते; ईक्षतिशब्दो दर्शनार्थकधातुघटितश्रुतिपरः पूर्ववत्; तस्याः श्रुतेः इत्यर्थः, श्रीचक्रपरं समयिमतं न अशब्दं शब्दप्रमाणेन वैदिकश्रुत्या बाधितम् । तेनैतदुक्तं भवति, श्रीचक्रं त्रिपुरसुन्दरीयन्त्रं त्रिपुरसुन्दरी

च कामराजविद्यास्वरूपा। तच्च चक्रं नवयोन्यात्मकमित्युक्तं— तदेव ब्रह्म तदुपासनाच्च मुक्तिरिति समर्थितं दर्शनार्थकधातु-घटितश्रुतिप्रमाणकम्; सा हि श्रुतिः, 'यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति; अत्र 'ब्रह्मयोनिम्' इत्यनेन योनेर्ब्रह्मत्वमुक्तम्, योनिश्च योन्यात्मकं चक्रम्। "ईशम्" इत्यनेन कामराजमनुरुक्तः। ईः कामस्तस्य ईशः राजा तदुपासित इत्यर्थः। 'कर्त्तारं पुरुषम्' इत्यनेन शिवशक्तिसम्मेलनमुक्तम्। 'शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्। न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि' इति सौन्दर्य्यलहर्य्यां भगवत्पादकृतस्तोत्रव-चनमूलात्—

परोऽपि शक्तिरहितः शक्तः कर्त्तुं न किञ्चन।
शक्तः स्यात् परमेशानि शक्त्या युक्तो भवेद् यदि ॥

इति सुभगोदयवचनात्, केवलपुरुषस्य कामनाविरहेण कर्त्तृ-त्वानुपपत्तेः श्रौतत्वाच्च। तथा च श्रूयते—

आत्मानञ्चेद् विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ इति

(बृह० ४।४ ब्रा० १२)

शिवशक्तिसम्मेलनात्मकं षड्विंशतत्त्वं कामराजविद्यात्मकश्री-त्रिपुरसुन्दरी, तद्दर्शनेन आयुज्यमुक्तिमुपैतीति समर्थितं 'यदा पश्यः' इत्यादौ दर्शनार्थकदृशधातुघटितश्रुत्या प्रतिपादितं भवतीति नाराध्यं तद्विति तात्पर्य्यम्। अथवा ईक्षतेर्दर्शनात् दर्शनशब्दो

वैदिकश्रुतिसामान्यपर इति पूर्वमुपपादितम् । अशब्दं = शब्दप्रमा-णाप्रतिपाद्यं = न = न भवति । वैदिकश्रुतिप्रमाणविरोधे तु आगमेन तत्प्रतिपत्तिर्न स्यात् । श्रुतिस्तु 'अष्टाचक्रा नव द्वारा' इत्यादि तैत्तिरीयब्राह्मणीया तथा त्रिपुरातापन्युपनिषत् । तत्र श्रीचक्रविन्यासस्य 'दुर्गेऽहं शरणं गतः' इति मन्त्रादेश्च सत्त्वात् । अतएव अग्रे दूरिति वर्णपङ्क्तिता प्रदर्शयिष्यमाणा श्रुतिरपि श्रीचक्रोपासनायोपयोग्येति ध्येयम् । श्रीचक्रस्य गायत्रीमन्त्रप्रतिपा-द्यत्वमपि तदुपनिषदुक्तं गायत्र्यधिकरणे स्मर्त्तव्यम् ॥ ५ ॥

ननु चिदचिदुभयवृत्तिसत्तावतो नास्यां श्रुतौ तच्छब्देन ग्रहणं तस्याप्रक्रान्तत्वात् किन्त्वचिन्मात्रस्यैव, सा चाचित् सांख्योक्ता प्रकृतिः, ईक्षणं तु तस्या गौणम्, नापि शक्तेर्ब्रह्मत्वम्, ईक्षणार्थकश्रौ-तमन्त्रे 'देवात्मशक्तिम्' इत्यत्र शक्तेर्गौणत्वाद् अप्रधानत्वाद् आश्रि-तत्वादिति यावत्, न हि सर्वाश्रयो ब्रह्म आश्रितरूपा शक्तिर्भव तीति शङ्काद्वयगर्भं तत्समाधानसूत्रं लाघवादेकोक्त्यैवाह ।

## गौणश्चेन्नात्मशब्दात् १।१।६

'तदैक्षत बहु स्यां प्रजायेय' इति श्रुतौ ईक्षत्यर्थो गौणः, न प्रत्यक्षलक्षणचित्स्वरूपबोधकः, किन्तु प्रकाशाद्युपाधिबहुत्वस्य लक्षकः । 'प्रकृतेर्महान् महतोऽहङ्कारः' इति सांख्याः, तच्छब्द-वाच्यायाः प्रकृतेर्यदीक्षणकर्तृत्वं तन्महत्तत्त्वस्फुरणमात्रम् । 'बहु स्यां प्रजायेय' इति चाहङ्कारस्फुरणम्, — अतोऽचेतनमूलकसृष्टि-क्रममेवेयं श्रुतिराह, न तु चितं वा चिदचिदुभयं वा ब्रह्मस्वरूपम् ;

इति पूर्व्वपक्षः ; तं निराकरोति नेत्यादिना । 'न' न युक्तोऽयं पक्षः, कुतः 'आत्मशब्दात्'='अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इत्युत्तरत्र आत्मशब्दस्थितेः । सांख्या हि प्रकृतिमचितं मन्यन्ते पुरुषञ्च चितम्, स एवात्मा । श्रुतौ यदि तच्छब्देन प्रकृतिमात्रं प्रक्रान्तं स्यात्, 'अनेन जीवेनात्मनानुप्रविश्य' इत्यत्रान्वयबोधो नोपपद्येत । जीवात्मनः पुरुषस्य प्रकृतेश्चात्यन्तं भेदात् । ननु आत्मनेत्यस्य स्वेनेत्यर्थः, न तु पुरुषस्वरूपेणेति चेन्न, जीवेनेत्यस्यानन्वयापत्तेः, नहि जीवस्य प्रकृतिस्वरूपता सांख्यैरभ्युपगम्यते, वैयर्थ्याच्च 'अनुप्रविश्य' इत्यनेनैव विवक्षितार्थसिद्धेः । न च चिदचिदुभयरूपसतः प्रक्रमेऽपि तद्दोषतादवस्थ्यमिति वाच्यं केवलाचिदंशेन नामरूपव्याकरणं न भवति, किन्तु चिदंशसाहित्येनेति ज्ञापनार्थतया तदंशस्य वैयर्थ्याभावात् । न च तथाप्यनेनेति पदं व्यर्थम्, ईक्षणवाक्येन यस्याश्रितो बोधस्तद्रूपेणैव जीवेनात्मना न तु अन्यादृशेनेत्यर्थस्य अनेनेति पदेन बोधनात् । ततश्च ईक्षतिश्रुतौ तच्छब्दः प्रक्रान्तं चिदचिदुभयवृत्तिसत्त्वावत् नित्यसम्बद्धचिदचिदुभयात्मकं ब्रह्मैवाह इति प्रथमशङ्कासमाधानकल्पः ।

अथ द्वितीयशङ्कापक्षः । ईक्षणार्थकदृशधातुघटितमन्त्रोक्तशक्तिमदर्थो गौणः, आश्रितार्थः, शक्तिमदाश्रितः । तस्मान्न ब्रह्म तस्य सर्व्वाश्रयत्वात् इति शङ्कार्थः । शङ्कां परिहरति, नेति ; तत्र हेतुः आत्मशब्दादिति । देवात्मशक्तिमित्यत्रात्मशब्दश्रवणात् 'बृहत्त्वाद् बृंहणत्वाच्च ब्रह्मेत्यात्मैव गीयते' इति वचनाद् ब्रह्मस्वरूपत्वप्रतीतेः ।

अस्य मूलभूताः श्रुतयश्च 'एष आत्मेति होवाच एतदमृतमभयमेतद् ब्रह्म' इति 'अयमात्मा ब्रह्म' इत्याद्याः । देवात्मनः शक्तिरिति तत्पुरुषसमासस्तु प्रतिक्षिप्तपूर्व्वः । शक्तेरात्मिवत्वनियमस्तु नास्त्येव । योगसूत्रादौ दृक्शक्त्यादिपदेनात्मनोऽभिधानात् । एतच्च शक्तिविपर्य्ययादिति (२अ० २।३८) सूत्रव्याख्यानावसरे विशेषेण वक्ष्यामः । इति सर्व्वशाक्तिसाधारणं व्याख्यानम् ।

समयिसम्मतश्रीचक्रपक्षे तु व्याख्यानं यथा—ननु ब्रह्मयोनिमित्यनेन योनेर्ब्रह्मत्वं नोक्तम्, अपि तु ब्रह्मणो मन्त्रस्य योनिरिति तत्पुरुषसमासाश्रयेण पूर्व्वपक्षलक्षणया मन्त्रसम्बन्धिकारणमित्युक्तम् इति पूर्व्वपक्षगर्भं 'गौणः' इत्यादिकं समाधानसूत्रम्, तदर्थश्च ब्रह्मयोनिमित्यत्र ब्रह्मशब्दस्य मन्त्रसम्बन्धिरूपोऽर्थो गौणः लाक्षणिक एवात्र स्वीकरणीयः, तेन योनेर्ब्रह्मत्वस्याश्रौतत्वेन नवयोन्यात्मकं श्रीचक्रं ब्रह्मेति मतं न श्रौतम् इति पूर्व्वपक्षे, नेत्युत्तरम् । कुतः आत्मशब्दात् स्वशब्दादित्यर्थः । ब्रह्मशब्दस्य योनिशब्दस्य च यो मुख्योऽर्थः, स एव स्वकीयः—तद्वाचकशब्दसत्त्वेन लाक्षणिकार्थस्वीकारस्यान्याय्यत्वात् । इति त्रैपुरो विशेषः । १।१।६ ॥

ननु बुद्धिरपि आत्मशब्दार्थः, 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इति नामलिङ्गानुशासनात् । श्रुतिश्चात्र भवति 'तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्' इति, एवम् 'आत्मात्मनि गृह्यते' इति च, स्मर्य्यते च 'पश्यन्त्यात्मानमात्मनि' इति । बुद्धिरन्तःकरणविशेषस्तस्यैव महत्तत्त्वसंज्ञा । तस्माज्जीवोपाधिभूतेनानेन ईक्षतिधातुसूचितेन आत्मना बुद्ध्या

अनुप्रवेशाभ्युपगमे पूर्व्वपक्षः पुनरुद्दूपदो भवति । द्वितीयशङ्काकल्पे तु आत्मशब्दस्य बुद्धिपरत्वे देवात्मशक्तिमित्येतदपि क्रीडन्तीं बुद्धिशक्तिम् इत्यर्थमवगमयति चेत्, अचिन्मात्रस्वरूपा शक्तिः पर्य्यवस्यति नोभयात्मिकेति प्राप्ते, तदुभयपरिहारार्थमाह—

## तन्निष्ठस्य मोक्षोपदेशात् । १।१।७

'सदेव' इत्यादि श्रुतौ सच्छब्दस्तच्छब्दो वा नाचिन्मात्रपरः । 'तन्निष्ठस्य' = उपदेशलम्भिततदात्मभावस्य, मोक्षयितव्यस्य ; 'मोक्षोपदेशात्' मोक्षानुशासनात् । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति ( छा० ६।१४ ) श्रुतेः । तथाहि, उद्दालकः पुत्रं श्वेतकेतुं मोक्षयिष्यन् छान्दोग्ये षष्ठप्रपाठके 'सदेव' इत्यादिकमुपक्रम्य 'तत्त्वमसि' इत्युपदिदेश, यदि तत्र सच्छब्दोऽचिन्मात्रपरः स्यात् तच्छब्दस्यापि तत्परत्वमभ्युपगन्तव्यं, तस्य चात्मत्वं नास्ति, नन्वस्ति, दर्शितमेवाचितो महत्तत्त्वस्यात्मपदार्थत्वमिति चेत्, तज्ज्ञानं न मोक्षहेतुः, अपि तु संसारहेतुः, मोक्षहेतुज्ञानविषयात्मत्वस्याचिन्मात्रावृत्तितया अचिन्मात्रे आत्मत्वज्ञानस्य मोहरूपत्वात् । मोक्षहेतुज्ञानविषयस्यात्मनः स्वरूपमाह— 'स य एषोऽणिमा ऐतदात्म्यमिदं सर्व्वम्' इत्यन्तेन । एतेनैतदुक्तं भवति, आत्मशब्दो यद्यपि नानार्थः, तथापि लाघवाद् चिन्मात्रभिन्ने शक्तः, भेदस्याधिकरणस्वरूपत्वेन च लाघवम्, चिन्मात्रं चिदचिदुभयत्वावच्छिन्नञ्चात्मपदार्थौ मुख्यः । तत्र,—सदिति तदिति च शब्देन चिदचिदात्मकमुपपादितं

तत्स्वरूपं शक्तिमद्वा शक्तिर्वा आत्मपदार्थ इति ? तत्राह, 'स य एषोऽणिमा' इति । 'अणिमा' इति शक्तेः श्रौतं नामान्तरम् । या शक्तिः 'ज्ञानबलक्रिया च' इति श्वेताश्वतरमन्त्रेणो-पदिष्टा । उपनिषत्सु यत्राणिमशब्दस्तत्रैव प्रायेण सारभूतशक्ति-रूपार्थो वेदितव्यः । प्रसिद्धं ह्येतत् शक्तिमत्त्वेन यद् व्यवह्रियते, तदपेक्षया तच्छक्तेः सूक्ष्मत्वं नाम दुर्ग्रहत्वं नैपुण्येनेयत्वञ्चेति । प्रत्यक्षमुपलभ्यन्ते तावदुच्चावचा वनस्पतयः, कस्तावदवगच्छति तेषां निरवशेषाः शक्तीः । अन्यापेक्षया विशेषज्ञो भिषगपि काश्चिदेव जानीते, न निरवशेषाः । यदि स्थूलेष्वीदृशी गतिः सूक्ष्मेषु शक्तिसौक्ष्म्यं कीदृगिति विमृशन्तु धीमन्तः । स्थूलेषु सूक्ष्माः,सूक्ष्मेषु सूक्ष्मतराः सूक्ष्मतमाश्चेति । एवं स्थिते सर्व्वमूलभूतस्य चिदचिदा-त्मकब्रह्मणोऽपि काचित् शक्तिः स्वीकार्य्या, या ततोऽपि सूक्ष्मेति शङ्का 'स य एषोऽणिमा' इत्यनेन परिहृता । यच्चिदचिदात्मकं ब्रह्म सैवाद्या शक्तिः, सैव साक्षान्मोक्षहेतुज्ञानविषयात्मस्वरूपा । सर्व्वेऽपि शक्ति-मन्तस्तत्तच्छक्तयश्च तत एवोद्भूता इत्याह 'ऐतदात्म्यमिदं सर्व्वम्'। उत्पत्तिनिरोधभाजां वस्तूनां शक्तयो महाशक्तौ सूक्ष्मरूपेण विलीनाः स्वस्वाश्रयसृष्टौ सहायभूताः—उपादानत्वसम्बन्धेन तामधितिष्ठती-ति ।अपरशक्तितत्त्वम्, ता एव शक्तयः आश्रिता भवन्तीति बोध्यम्।

अक्षरार्थस्तु 'स य एषोऽणिमा' इति 'सः' इति प्रक्रान्तस-त्पदार्थतत्पदार्थवाची । तेन चिदचिदुभयवृत्तिसत्ताश्रय इत्यर्थः य एषः अणिमा—धर्म्मिभूतापि धर्म्मवद्व्यवह्रियमाणा सर्व्वतः सूक्ष्मा आद्या शक्तिरिति परमार्थः, न तु अणुत्वमत्र

परिमाणविशेषः, तादृशपरिमाणवत एकस्य वस्तुनः परिच्छिन्नत्वेन सर्व्वात्मतासम्भवात् । यः खलु चिन्मात्रपुरुषस्यात्मत्वेनोपदेशः, 'अनन्तश्चात्मा विश्वरूपो ह्यकर्त्ता' ( श्वेता० १।६ ) इत्यादौ, अचिद्भिन्नत्वेन वा, 'अव्यक्तात् पुरुषः परः'(कठ१।३।११) इत्यादौ, सोऽपि अचित् सत्ताव्यतिरिक्तचित्सत्ताया ज्ञापनाय, तदज्ञाने तदुभयात्मकब्रह्मज्ञानस्यासिद्धेः, अतएव शशश्रृङ्गघटोभयज्ञानमप्रामाणिकम् । सत्यपि घटसत्ताज्ञाने, शशश्रृङ्गसत्ताया घटसत्तातिरिक्ताया अज्ञानात् । उभयात्मकवस्तुज्ञाने उभयोः परस्परविलक्षणसत्ताज्ञानस्यापेक्षणीयतया घटवद्घटोभयमिति प्रतीतिरप्यप्रामाणिकी । अथ तादृशब्रह्मज्ञानस्य जीवाभेदज्ञानस्य वा कथं मोक्षहेतुत्वं ? कथं वा गौरोऽहम्, अहं सुखीत्यादिधीनिवर्त्तकत्वम् ? इति चेत्, परिच्छिन्नत्वावधारणात्मकभ्रमनिवर्त्तकत्वादिति भ्रमः । यदि च चिदचित्स्वरूपे जीवे अचिदवच्छेदेन गौरत्वादिधीर्न भ्रमरूपा, प्रमा च न निवर्त्तिता भवतीत्युच्यते, तथापि स्वात्मनि—चिदचिदात्मकापरिच्छिन्नब्रह्माभेदं पश्यतः कथं नाम परिच्छिन्नदेवदत्तादिपिण्डमात्रधर्म्मिकाहन्तादिबुद्धिरव्याहता तिष्ठेत्? न हि प्रदेशाधिपस्य भूमण्डलाधिकारे प्रदेशमात्रे ममत्वबुद्धिः प्रमा भवति, तदानीं सावधारणायाः प्रदेशमात्रे ममत्वबुद्धेर्भ्रमत्वात् । एवं परिच्छिन्नेऽहंबुद्धिविलयात् कथं परस्परभेदज्ञानमूलौ रागद्वेषौ प्रभवेतां ? कथं तदभाववतो वा प्रवृत्तिः स्यात्? अप्रवृत्तस्य वा कथं जन्म ?—इति व्यवस्थितं मोक्षहेतुत्वम् । जन्मवर्ज्जितस्यात्यन्तिकदुःखनिवृत्तिदशायां यथा निरतिशयानन्दाभिव्यक्तिस्तदन्यत्र

प्रपञ्चितम्। अत्र च 'स: अणिमा' इत्यनभिधाय, 'स एषः' इतिपदद्वयग्रहणं—प्रक्रान्तसदादिपदार्थस्याणिम्नः स्वापरोक्षत्व-द्योतनाय। 'सर्व्वमिदम्' 'ऐतदात्म्यम्'=एतद्भिन्नम्, एतेन अचि-न्मात्राभेदभ्रमो निरस्तः, चिदचिदुभयात्मकब्रह्मणः सत्यत्वमा-त्मत्वं चाह 'स आत्मा' सः=चिदचिद्रूपस्वरूपः, आत्मा=चित्; अचित्सत्ताव्यतिरिक्तचित्सत्ताज्ञापनार्थमिदं वचनम्। तत् प्रयोजनं चोक्तम्। ननु 'सदेव सोम्येदमग्र आसीत्' इत्या-दिनैव चिदचिदुभयवृत्तिसत्तायाः प्रतिपादितत्वाभ्युपगन्तृणां पुन-श्चित्सत्ताकथनं कथं नाम युज्यत इति चेत् 'ऐक्षत' इति श्रुतौ अतीतकालनिर्देशात् ईक्षणरूपायाश्चितोऽनित्यत्वभ्रमो माभूदित्येतदर्थं नित्यत्वप्रदर्शनाय विवरणरूपत्वेन युक्तमे-वेदृशकथनम्। नित्यस्य च त्रिकालसम्बन्धादतीताख्यातप्रयोग-स्योपपत्तेरिति भ्रमः। चिदचिदुभयात्मकस्य तस्य सत्यत्वा-दाह तत् सत्यमिति जीवस्य तत्स्वरूपत्वञ्च दर्शयति तत्त्वमसी-त्यन्तेन। 'तत् सत्यं' तत्पदार्थश्चिदचिद्रूपस्तस्य सत्यत्वमपि तदुभयरूपतया श्रौतनामनिर्वचनव्याख्यानेन प्रदर्शितपूर्व्वम्। हे श्वेतकेतो! त्वं तदसि चिदचिदुभयात्मकं ब्रह्मासीति जीवस्यापि यत् चिदचिदुभयात्मकत्वं तत्र चित्—प्रतिबिम्बम्, बिम्बाद-न्यत्; अचित्, कार्य्यं त्रैगुण्यं—महत्तत्त्वादिस्वरूपम्, कारणात् प्रकृतेरन्यत्। वस्तुतः एवमपरिच्छिन्नस्यापि जीवस्य परिच्छि-न्नत्वमात्रबोधो मोहः। नन्वेवं जीवस्य चिन्मात्राभेदोपदेश एवोचितः, तेनैव परिच्छिन्नमात्राहंतादिमोहस्य नाशात्,

इतिचेत्, युष्मदस्मत्प्रत्ययस्य 'किं गोत्रो नु सोम्यासीति' 'किं गोत्रोऽहमस्मीति' ( छा० ४।४।४ ) श्रुतेर्यज्ञादिश्रुतेश्च जीवविषयकत्वप्रसिद्ध्या जीवस्य चिन्मात्ररूपत्वाभावात्। न चेदं सत्यानृतमिथुनीकारफलम्, श्रुतेरनृतावलम्बनत्वाङ्गीकारेऽनाश्वासप्रसङ्गात्, किमनृतं किं सत्यमिति स्वप्रमाणे वेदे प्रकारान्तरेणान्यतरकोटेः प्रमातुमशक्यत्वात्। नन्वेवं किं चिन्मात्रस्यात्मत्वोपदेशेनेति चेन्न निराकारब्रह्मपराणामधिकारिविशेषाणां चिन्मात्रे समाधिसम्पादनद्वारा तत्रोपदेशस्य मोक्षार्थत्वात्, यतस्तेन समाधिना यो ब्रह्मसाक्षात्कारः स हि स्वविषयाभिन्नजीवापरिच्छिन्नत्वगोचरः परिच्छिन्नत्वमोहं जीवस्य नाशयतीति। नन्वेवमपि महत्तत्त्वसम्बद्धजीवस्य कथं गोत्रविशेषभागित्वमिति चेद् कार्य्यस्य देहादेः सूक्ष्मरूपेण कारणेऽवस्थानादिति भ्रमः। ननु चिन्मात्रसमाधिना चिन्मात्रसाक्षात्कारादेव फलसिद्धौ किमुभयात्मकब्रह्मसाक्षात्कारेणेति चेन्न, चिन्मात्रसाक्षात्कारेऽपि प्रकृत्यसाक्षात्कारान्न जीवस्य परिच्छिन्नत्वभ्रमनिवृत्तिः, न हि प्रतिबिम्बसूर्य्योपाधेर्दर्पणस्य स्वरूपमजानतां केवलं बिम्बसूर्य्यसाक्षात्कारः प्रतिबिम्बे बिम्बाभेदं ग्राहयितुमलं भवति। अतश्चिदचिदुभयात्मकब्रह्मसाक्षात्काराज्जीवघटकव्यष्टिमहत्तत्त्वादेरपि तदभेदसाक्षात्कारेण परिच्छिन्नत्वमोहनिवृत्तिरिति ध्येयम्। ननु परिच्छिन्नत्वधीः कथं मोहः, सर्व्वस्वरूपत्वाद् ब्रह्मणः इति चेत्, अपरिच्छिन्नत्वव्यावृत्तिदर्शनतया मोहरूपत्वात्, किं गोत्रोऽसीत्यादिकया परिच्छिन्नत्वबोधिकयापि श्रुत्या परिच्छिन्नत्वमात्र-

बोधो न जन्यते ; परिच्छिन्नत्वमात्रबोधश्च मोहः ; स च तमोवृत्तिः, असावनादिर्वा सादिर्वेति उपरिष्टादुपपादयिष्यते । एतेन "ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्मसमाधिना ॥" इति गीतावचनमपि न भावनामात्रपरतया पर्य्यवसेयम् । ज्ञानात्येव भक्तो ब्रह्मैवेदं पुष्पादिकं ब्रह्मरूपायै देवतायै समर्पयामीति स्वयमनुभवन् कां प्रीतिमासादयतीति । एतेनैतदुक्तं भवति, कार्य्यानुगमे जीवस्य परिच्छिन्नत्वं, कारणानुगमे चापरिच्छिन्नत्वमेतद्द्वयमेव श्रौतम् । परिच्छिन्नत्वमात्रन्तु न श्रौतम् । गोत्रादिव्यवहारस्तु दृष्टस्थूलकार्य्यानुगमेन ।

यस्तु मोहजनितो रागो द्वेषो वा तत्सर्व्वं स्वीयापरिच्छिन्नत्वज्ञानाभावप्रयुक्तम् । स्वस्य ब्रह्मस्वरूपत्वज्ञानं हि अपरिच्छिन्नत्वज्ञानम्, सति तस्मिन् परिच्छिन्नत्वमात्रज्ञानरूपमोहनाशः, ततश्च रागद्वेषनिवृत्तौ तत्कार्य्ययत्नाद्यनुत्पत्त्या कर्म्माभावेन जन्मनिवृत्तिः, ततश्चात्यन्तिकदुःखनिवृत्तिः । तदानीमेव ब्रह्मसाक्षात्कारस्य चरमस्योत्पत्त्या पूर्णानन्दरूपता, इत्युक्तप्रायम् । अचिन्मात्रमुपासीनस्य तु न खलु स्वस्मिन्नपरिच्छिन्नत्वज्ञानं,प्रतिबिम्बचितः परिच्छिन्नत्वात्, प्रत्येकाबोधे उभयबोधासम्भवेन उभयत्वावच्छेदेनापरिच्छिन्नत्वबोधस्याप्यसम्भवात् । भवति तु मातृभावादिना यथोक्तशक्तिरूपब्रह्मोपासनया चिन्मात्रसमाधिना वा । तस्मात् 'तदैक्षत' इति श्रुतिर्न बुद्धिस्फुरणरूपेक्षणपरा, किं तर्हि ईक्षधातुना नित्यचितं बोधयन्ती बहु स्यामित्यादिवाक्यसमभिव्याहृता चिदचिदुभयात्मकशक्तिब्रह्मपरेति तात्पर्य्यम् ।

पूर्व्वसूत्रे या द्वितीया शङ्का शक्तेर्ब्रह्मत्वं नास्तीति साप्येतेन परिहृता वेदितव्या। तथाहि 'तन्निष्ठस्य' तत्परायणस्य—तत्पदेन प्रक्रान्तं नित्यसम्बद्धचिदचिदात्मकशक्त्याख्यं ब्रह्म परामृश्यते। 'मोक्षोपदेशात्' श्रुत्या मोक्षप्रतिपादनात्। तन्निष्ठस्येति षष्ठ्या वृत्ति·शब्दैकदेशे मोक्षेऽन्वयः। यदि षष्ठी कर्त्तरि, यदि वा शेषे, उभयत्रापि तादृशान्वयस्य व्युत्पन्नत्वात्। तदुपदेशश्च श्वेताश्वतरोपनिषदि षष्ठाध्याये 'येनावृतं नित्यमिदं हि सर्व्वं ज्ञः कालकालो गुणी सर्व्वविद् यः' इत्युपक्रम्य 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति 'साक्षी चेताः केवलो निर्गुणश्च' इत्यादिना स्वरूपमवगमय्य 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते अयनाय' इत्येवंरूपः। तदर्थस्तु गुणित्वं निर्गुणत्वं च यत्र वर्त्तते, यो ज्ञाता, ज्ञानञ्च क्रिया च द्वे एव यस्य स्वभावसम्बद्धा शक्तिः, तं विदित्वैव मृत्युमत्येति मोक्षी भवति, नान्यः पन्था मोक्षस्येति, तच्छक्तेः स्वभावसम्बद्धत्वकथनादेकवचननिर्द्देशाच्च ब्रह्मणश्चिदचिदात्मकशक्तितादात्म्यं दर्शितम्। न च अस्येति षष्ठीनिर्द्देशाद् भेदप्रतीतिः, स्यादेवं, यदि तस्य स्वाभाविकशक्त्यावाकाङ्क्षा, नत्वेवम्; पूर्व्वेणैवाकाङ्क्षानिवृत्तेः। अभेदेऽपि षष्ठीप्रयोगस्य दर्शितपूर्व्वत्वाच्च। तथा च मोक्षहेतुज्ञानफलकोपासनाविषयस्य शक्तिस्वरूपनिरूपणात्वं सिद्धमिति सर्व्वं सुस्थितम्।

श्रीबकपक्षे एतत्सूत्रोत्थितिबीजन्तु—ननु 'यदा पश्यः' इत्यादि श्रुतौ यथा ब्रह्मशब्दो योनिशब्दश्चास्ति तथा पुरुषशब्दोऽपि, पुरुषशब्दश्च स्थूलशरीरपरोऽपि भवति 'यथा सतः पुरुषात् केशलो-

मानि' इति ( मुण्डक० १।१।७ ) 'अन्नात् पुरुषः' इति (तै० २।१) चैवमादिषु श्रुतिषु प्रयोगाल्लोकप्रसिद्धेश्च। तद्रूपत्वञ्च कथितश्रीचक्रे न युज्यते, युज्यते तु स्थूलशरीरे मन्त्रयोनित्वं, कण्ठादियोगेन तन्निष्पत्तेः। तस्मान्नायं मन्त्रः श्रीचक्रस्य श्रौतत्वं साधयतीत्यस्योत्तरं तन्निष्ठस्येति सूत्रेणाह—अत्र पुरुषशब्दो न स्थूलशरीरपरः, तन्निष्ठस्य मोक्षाभावात्। अत्र तु श्रीचक्रात्मकब्रह्मसाक्षात्कारपर्य्यवसानां तन्निष्ठां नाम तदुपासनां कुर्व्वतो मोक्षोपदेशः "परमं साम्यमुपैति" इत्यन्तोत्तरार्द्धेन। तस्माच्छ्रीचक्रमेव मन्त्रेणानेन प्रतिपाद्यत इति ध्येयम्। १।१।७॥

ननु सांख्या हि प्रकृतिपुरुषयोर्व्विवेकसाक्षात्कारमेव मोक्षहेतुं मन्यन्ते, स च साक्षात्कारः प्रकृतिसाक्षात्कारापेक्षः, 'सदेव सोम्येदम् अग्र आसीत्' इत्यत्र च सच्छब्दः प्रकृतिपरः, मृन्मयमृदादिदृष्टान्तेनैकविज्ञानेन सर्व्वविज्ञानमुपवर्ण्य तदुपक्रमात्, मृन्मयस्य मृदिव, प्रकृतिः सर्व्वोपादानम्; इति दृष्टान्तस्य सुसङ्गतत्वात्। तथाच मोक्षयितव्यं पुत्रं प्रति महर्षेरुद्दालकस्य प्रकृतिसाक्षात्कारायोपदेशः। तेन च पुत्रस्य तत्साक्षात्कारः प्रकृतिपुरुषभेदसाक्षात्कारजननेन मोक्षहेतुरतः प्रकृतिनिष्ठस्य मोक्षोपदेशो युज्यते इति शङ्कायामुत्तरसूत्रं पठति—

हेयत्वावचनाच्च १।१।८॥

'हेयत्वस्य' अचितः परित्याज्यत्वस्य—यदिहाचिति चित्तभ्रमः स एव संसारहेतुरतोऽचिद् हेया—इत्यस्य, 'अवचनात्'

अकथनात्, अस्मिन् छान्दोग्यषष्ठाध्याये तत्त्वमसिखण्डे अप्रतिपादनात्, प्रत्युत हेयत्वविरुद्धवचनात् सच्छब्दस्य न प्रकृतिपरत्वम्; अस्ति हि हेयत्वविरुद्धवचनम् 'तत् सत्यं स आत्मा' इति, नहि कश्चिदात्मानं हातुमिच्छति प्रेक्षावान्, मा न भूवं, भूयासमित्यात्माशिषः सर्व्वानुभवसिद्धत्वात्।

तस्मात्, प्रागुपदर्शितच्छान्दोग्यश्रुतौ 'सत् तत्' पदे नाचिन्मात्रपरे इति सिद्धम्। इदमत्रावधेयम्, हेतुसमुदायोपन्यासे चकारनिर्देशश्चरमहेतुप्रयोगस्थले क्रियते इत्याचार्य्यपरम्पराप्रसिद्धिपरिहारो गत्यां सत्यामनुचितः। अतोऽत्रैव ईक्षत्यधिकरणसमाप्तिरस्माभिरभ्युपगम्यते, तदनन्तरं स्वाप्ययाधिकरणं वेदितव्यम्।

श्रीचक्रपक्षे एतत्सूत्रोत्थितिबीजन्तु—श्रीचक्रं हि यामलादितन्त्रशास्त्रेणोपदिष्टमतो न श्रौतं करालभैरवयामलादितन्त्रस्य श्रुतिस्मृतिविरुद्धतायाः स्मृत्या प्रतिपादनात्; तथाहि कूर्म्मपुराणे हिमालयं प्रति देवीवाक्यं—

यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि च।
श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी॥
करालभैरवञ्चापि यामलं वाममार्हतम्।
एवंविधानि चान्यानि मोहनार्थानि तानि तु॥

अत्र वाममार्हतमित्यत्र वाममाश्रितमिति स्मार्त्तधृतपाठः। इत्याशङ्कां—समाधातुं हेयत्वेति सूत्रं पठति। तदर्थश्च,—समयिनां श्रीचक्रोपदेशकं शास्त्रं शुभागमपञ्चकम्, तस्य 'हेयत्वावचनात्' हेयत्वस्य अकथनात्, समयाचारप्रतिपादकस्य शुभागमपञ्चकस्य

श्रुतिस्मृतिविरुद्धत्वाभावेन 'एवं विधानि चान्यानि' इत्यनेनापि ग्रहीतुमनर्हत्वात् । अतएवोक्तं सौन्दर्य्यलहर्य्यामाचार्य्यचरणैः —

चतुःषष्ट्या तन्त्रैः सकलमति(भि)सन्धाय भुवनम्
स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रैः पशुपतिः ॥
पुनस्त्वन्निर्ब्बन्धादखिलपुरुषार्थैकघटना-
स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् ॥ इति ।

शुभागमपञ्चकञ्च वशिष्ठसनकशुकसनन्दनसनत्कुमारमुनिभिर्विरचितम्, तत्र क्रियाकलापो वैदिकमार्गेणैवोपदिष्टः । करालभैरवादितन्त्रस्य हेयत्वमिव शुभागमपञ्चकस्य हेयत्वं न काप्युक्तमिति भावः । तस्मान्नेदमश्रौतम् । पूर्व्वोक्तहेतोरेवेत्यधिकरणसमाप्तिरत्रैव ज्ञेया । अतः परं समयाधिकरणार्थकं स्वाप्ययाधिकरणम् ॥ १।१।८ ॥

ननु स्यादेवं, किन्तु निरुक्ता ब्रह्मरूपा शक्तिः साकारा निराकारा वा? साकारा चेत्, न ब्रह्म भवितुमर्हति, 'योह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरम्' इति ( प्रश्न० ४।१० ) श्रुतेः 'अपाणिपादः' इति ( श्वेता० ३।१९ ) मन्त्रवर्णाच्च ; निराकारा चेत्, वेदवक्त्रीति विप्रतिषिद्धम्, वचनस्य कण्ठताल्वाद्यभिघातसाध्यत्वादित्याशङ्कायामाह— ·

( स्वाप्ययाधिकरणम्–६ )

## स्वाप्ययात् १।१।९

'अथ यदस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इत्यादि

श्रुतिर्विचारार्हवाक्यम् । पुरस्वामि ब्रह्म—साकारं निराकारं वेति संशयः, कोटिद्वयस्यैव प्राप्तेः, 'ब्रह्मपुरे' 'वेश्म' इति पदाभ्यां साकारत्वकोटिप्राप्तेः, नहि निराकारस्य पुरं वेश्म वा भवति ; ब्रह्मणः साकारत्वे सिद्धे, शक्तेः साकारत्वं सिध्यति, शक्तेरेव ब्रह्मत्वात् । 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इत्युत्तरनिगदे आकाशपदेन तस्याभिधानाद्विभुत्वप्रतीतेः, साकारस्य च विभुत्वासम्भवेन निराकारत्वकोटिप्राप्तेः । इति चेत्, निराकारं ब्रह्मेति प्राप्तम् ; उत्तरनिगदस्य उपसंहाररूपतया स्वरूपनिर्देशकतया च बलीयस्त्वात् । पुरमिति वेश्मेति चोपासनास्थाननिर्देशाय गौणः प्रयोगः । अत्रोच्यते, साकारं निराकारञ्च द्विरूपमेव ब्रह्म, कुतः 'स्वाप्ययात्'=संप्रसादश्रुतेः । सा श्रुतिर्दर्शयिष्यते। यः स्वमपीतः स स्वाप्ययः स एव सम्प्रसादः, "सुषुप्तिकाले स्वेनात्मना सता सम्पन्नः सन् सम्यक् प्रसीदतीति जाग्रत्स्वप्नयोर्विषयकालुष्यं जहातीति संप्रसादः सुषुप्तः" इत्याचार्य्यैरुक्तम्, वाच्यान्तरविवक्षया तु यत्र विषयकालुष्यं जहाति स सम्प्रसादः स्वाप्ययः सुषुप्तिश्चैकोऽर्थः । सा च श्रुतिः "अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यम्" इति ( छा० ८।३।४ ) अत्र अथेति निगदोपक्रमात् पूर्व्वनिगदस्थेन 'एवं वित्' पदेन सह संप्रसादपदार्थस्य नास्ति सम्बन्धः किन्तूत्तरनिगदेन विवरणरूपेण 'एवंवित् स्वर्गलोकमेति' इत्यन्तेन ; तथाच,

'सत्यम्' इत्येतत्पदस्य 'सतीयम्' इतिवाक्यसंक्षेपरूपत्वमुत्तरश्रुत्या सूचितमतः सत्यमिति समाचक्षाणा परंज्योतिरूपसम्पत्तिप्रतिपादिका संप्रसादश्रुतिरियं ब्रह्मणः साकारत्वमपि गमयति । तथाहि, यथा, 'सत्यम्' इति शब्दोऽक्षरार्थेन नित्यसम्बद्धचिदचिदात्मकं निराकारं ब्रह्म, तथा सतीयमिति वाक्यार्थेन उमारूपं साकारं ब्रह्मापि प्रतिपादयति । "सन् साधौ धीरशस्तयोः । मान्ये सत्ये विद्यमाने त्रिषु साध्व्युमयोः स्त्रियाम्" इति कोषात् 'सैव हि सत्यादयः' इति (३।३।३८) वक्ष्यमाणसूत्राच्चोमासत्योर्ब्रह्मणश्चानन्यत्वप्राप्तेः ननु दहराकाशो यादृशस्तत् स्वरूपं तत्रैवोक्तं "दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद् वाव विजिज्ञासितव्यमिति स ब्रूयात् यावान् वायमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते" इत्यादिना ; (छा०८।१।२) तत्रोमायाः सम्बन्धो नास्तीति चेत्, उच्यते, 'यच्चास्येहास्ति यच्च नास्ति सर्व्वं तदस्मिन् समाहितम्' इति उमासाधारणतया सामान्यतो निर्द्दिश्य सत्यमित्यस्य विवरणभूतेन सतीयमिति वाक्येन उमाया विशेषतोऽभिधानात्। परं ज्योतिरूपसम्पद्येत्यनेन उमारूपस्य प्रतिपादनाच्च । ननु 'परं ज्योतिः' इतिब्रह्मस्वरूपं, 'ज्योतिषां ज्योतिः' इति श्रुतेः, कथं नाम एतेन उमारूपप्रतिपादनमिति चेत्, 'परं ज्योतिरूपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रवणात् परंज्योतिर्ब्रह्मस्वरूपयोरिह भेदावगतेः, अन्यथा आनन्तर्य्याभिधानं नोपपद्येत । ब्रह्मस्वरूपं हि निराकारं, परंज्योतिश्च उमारूपाधिष्ठितस्य तस्य प्रकाश इति भेदाद् युक्तमानन्तर्य्याभिधानम्, नचैवं

सति निराकारसाकारतया ब्रह्मद्वैविध्यापत्तिरिति वाच्यम्, उपाधिभेदमात्रेण उपधेयस्य भेदाभावात्, उपाधेरपि अचिदंशाभेदात्, कार्य्ये कारणानन्यत्वात्, अचिदंशे प्रकृतौ पृथिव्यां घटभेदस्येव तत्कार्य्यरूपभेदस्य तु सत्त्वात्, स्थूलात् सूक्ष्मप्रवेशे आनन्तर्य्यस्यौचित्यात्। अथैवमपि 'परं ज्योतिः' इत्यनेन कथमुमारूपप्रतिपादनमिति चेच्छ्रूयताम्, 'अथ या हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति, शुक्लस्य नीलस्य पीतस्य लोहितस्य' इति (छा० ८।६) पुरस्त्यया श्रुत्या लोहितज्योतिषः अन्ते कीर्त्तनात् 'परं ज्योतिः' इत्यस्य उत्तरं ज्योतिरित्यर्थकतया लोहितज्योतिषि पर्य्यवसानात्, 'तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्म्मफलेषु जुष्टाम्। दुर्गां देवीं शरणमहम् प्रपद्ये' इत्यादावृक्परिशेषमन्त्रे दुर्गापरनाम्न्या उमाया अग्निवर्णात्वस्याभिधानेन अग्निस्वरूपतेजसः स्वाभाविकलौहित्येन च तद्रूपतायाः प्रतिपादनात् "यदग्ने रोहितं रूपं तत्तेजसः" इति श्रुतौ 'पिङ्गभ्रूश्मश्रुकेशाक्षः पीनाङ्गजठरोऽरुणः। छागस्थः साक्षसूत्रोऽग्निः' इति स्मृतौ चाग्नेः स्वाभाविकरूपस्य लोहितत्वेन प्राप्तेः। न चेमानि रूपाणि नाडीनामेव सूक्ष्मरसभेदजनितानीति वाच्यम्,—असौ वा आदित्यः पिङ्गल इत्यादिश्रुत्या निराकृतत्वात्। न च चिदात्मनि रूपस्यासम्भव इति लपनीयम्, चिदात्मनित्यसम्बद्धाचिति सूक्ष्मावस्थ-कार्य्यभूत-रूपेण सम्बन्धस्येष्टतया कर्त्तारमीशमित्यादिश्रुत्युपदर्शितकर्तृत्वादिवत्तदुपपत्तेः। एवञ्च साकारब्रह्मोपासकानां नाडीषु यत् पिङ्गलादिरूपदर्शनं तत् साकारब्रह्मज्योतिर्दर्शनम्, तत्रोमाया दुर्गात्मिकायास्त्रिपुरसु-

न्दुर्ज्योतिरात्मिकायाश्च रूपं लोहितम् । ननु लोहितवर्णश्चेदग्निस्तस्यैव लोहितं रूपं भवेत् कथमुमारूपमुच्यते इति चेत्, उमायाः केनोपनिषदाख्यायिकया अग्न्याद्यपेक्षया प्राधान्यस्य प्रदर्शितत्वेन 'प्रधानेन व्यपदेशा भवन्ति' इति न्यायादुमारूपस्यैव तत्र निर्देशार्हत्वात्, 'पिङ्गलस्याणिम्नः' इत्यनन्तरं शुक्लस्य नीलस्य पीतस्येत्यादिश्रवणात्, अग्नेः तादृशसर्व्वविधरूपवत्त्वे मानाभावाच्च; ब्रह्मभावानुगमाभ्युपगमेन तथेति चेत्, इह सत्यमिति यस्योपसंहारस्तस्योमारूपब्रह्मण एवेदं रूपमित्यस्यैव लाघवेन वक्तव्यत्वात्, अग्न्यादौ लोहितादिज्योतिष उमाधीनतायाः प्रतिपादयिष्यमाणत्वाच्च। नन्वेवमपि 'पिङ्गलस्य' इत्यादिश्रुत्या वर्णविशेषप्रतिपत्तिर्भवतु, कथं तद्रूपं ज्योतिरुच्यते इति चेत्, "असौ वा आदित्य: पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः" इति पुरस्त्यश्रुत्या आदित्यरश्मित्वेन नाडीनामुपपादनेन ज्योतिष्ट्वावधारणात्। न चैवमादित्यरश्मीनामेव ते वर्णाः इति शङ्कनीयम्, अणिम्न इति श्रुत्या विसंवादात्; न हि रश्मयोऽणवो भवन्ति स्थूलत्वात्, नापि दुरुन्नेयतया, प्रत्यक्षत्वात्, अतोऽणिमाभिधेयशक्तिरूपस्य ब्रह्मण एव तेजस आदित्यद्वारकत्वाभ्युपगमस्यौचित्यात् "येन सूर्य्यस्तपति तेजसेद्धः" (तै० ब्रा० ३।१२।६।७) इति मन्त्रवर्णात्, 'यदादित्यगतं तेजो जगद् भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इति स्मृतेश्च। अथैवमपि कथमादित्यस्य नानावर्णत्वमुक्तम् इतिचेत् साधकविशेषं प्रत्यनुकम्पया विभिन्नरूपैः सरूपाभिर्विभिन्नमूर्त्तिभिरपि ब्रह्मण आदित्यमण्डलेऽधिष्ठानात्।

तथाहि, "असौ य आदित्यो देवमधु तस्य" इत्युपक्रम्य 'मरीचयः पुत्रास्तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्य ऋच एव मधुकृत ऋग्वेद एव पुष्पं या अमृता आपस्ता वा एता ऋच एतमृग्वेदमभ्यतपंस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्यं रसोऽजायत तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद् वा एतद्यदेतदादित्यस्य लोहितं रूपम्' इति (छा० ३।१।१–) श्रुतिः। अस्या उपव्याख्यानम्,—असौ इति परोक्षनिर्देशार्थम्। योऽयं दृश्यते तेजोमण्डलरूप आदित्यस्तद्व्यावर्त्तनायेदम्। तदालम्बनेनोपास्यः परमात्मैवासावादित्य इत्यस्यार्थः। स परमात्मा देवमधु=देवानां पुरस्तादुपदर्शितानां वस्वादीनां मध्विव तृप्तिहेतुत्वाद्देवमधु, तस्य ये "मरीचयः" किरणाधिष्ठिताः शक्तिविशेषाः "परास्य शक्तिर्विविधैव श्रूयते" (श्वेता० ६।८) इति मन्त्रवर्णात्, ता हि शक्तयः प्राणिनां प्रजननभ्रूणवर्द्धनादिहेतवः, म्रियन्ते जननादिप्रतिबन्धकक्रमयो यत्रेति व्युत्पत्त्या मृङ् धातोः ईचि-प्रत्ययेन मरीचिपदसिद्धेः, अतएव ते "पुत्राः" पुत्रा इव मधुकृतां बीजकृतः। ताः खलु शक्तयस्तेजोमण्डलादित्यप्रसृततदीयमरीचिनामककिरणान्तश्चारिण्यः सन्ति, आदित्यरूपपरमात्मनः प्राञ्च उपासनालम्बनमण्डलपूर्व्वदिग्भागस्था रश्मयः—रज्जुवदाकर्षणविकर्षणाभ्यां धारणहेतवः शक्तिविशेषास्तदीयकिरणान्तस्थिताः 'ता एव' 'अस्य' आदित्यस्य 'मधुनाड्यः' मधुसञ्चयरन्ध्रसदृश्यः, एतेन देवानां स्थिरतृप्तिहेतुरादित्य इति सूचितम्। 'ऋच एव मधुकृतः' ऋचः=ऋगाख्यमन्त्रवन्तः,

कुन्ताः प्रविशन्तीतिवत् सप्रयोजनेयं तद्वति लक्षणा, मन्त्राः इत्यर्थः, मधुकृतः = तृप्तिहेतुवस्तुसम्पादकत्वान्मधुकरतुल्याः सरघासदृशाः ; 'ऋग्वेद एव' ऋगाख्यवेदभागविशेष एव, 'पुष्पं' = पुष्पवत् मध्वाहरणस्थानत्वात्, 'ता वा अमृता आपः' आपः = अप् साध्यानि वस्तुभूतानि कर्म्माणि यज्ञविशेषा इत्यर्थः, अमृताः = पुष्पस्थमकरन्दसदृशाः, 'ता ऋचः' प्रागुक्ता मन्त्रवन्तः 'ऋग्वेदम्' = ऋगाख्यमन्त्र-ब्राह्मणवेदभागविशेषम् 'अभ्यतपन्' = यज्ञियानलेन योजयामासुः, एतेन मन्त्रैरितिकर्त्तव्यताज्ञापक-वाक्यानुगतकर्म्मद्वारा च यज्ञसम्पादनमुक्तम्, 'अभितप्तस्य' = अग्निसम्बन्धप्राप्तस्य, 'तस्य' = ऋग्वेदस्य 'यशः' = प्रशंसा, ईश्वर-वाक्यत्वादिना श्रैष्ठ्यख्यातिः, 'तेजः' आग्नेयसूक्तादिना अग्नितेजः-सम्पादकत्वम्, 'इन्द्रियं' = वाङ्मनसादीन्द्रियेण सम्बन्धः 'वीर्य्यं' = फलविशेषसम्पादनसामर्थ्यं 'अन्नाद्यम्' = अन्नं = , पुरोडाशादिस्वरूपम्, आद्यं = आज्यादि, एतत् सर्व्वं 'रसः' = परमात्मा 'रसो वै सः' इति श्रुतेः 'अजायत' = परमात्मनि गतं — परमात्मस्वरूपं जातम्, रथ्याजलप्रवाहो गङ्गायां पतितो गङ्गा अजायत इति वत्। उत्तरत्र रसा इति बहुवचननिर्देशश्च रसस्वरूपपरमात्मनः साधकाभीष्टपूर्त्तये स्वकृपागृहीतमूर्त्तिभे-दाभिप्रायेण। रसभावप्राप्तिप्रकारमाह,–'तद्व्यक्षरत्' तद् यश आदिकं सर्व्वं व्यक्षरत्—विशेषेण अक्षरत् अगमत् परमा-त्मसम्बन्धमभजत्—ऋग्वेदस्य यत् प्रशंसादिकं—तदुच्चारणम्, शक्तिविशेषो यज्ञियद्रव्यञ्च सर्व्वं परमात्मन एवेति यजमानानां

भावो जात इति निगूढम्, आदित्यमभितोऽश्रयत्=अभितः सर्व्वप्रकारेणादित्यमण्डलस्थं परमात्मानमभजत्। यजमानकर्म्मफलं परमात्मनि अविच्छेदेन कृपाविशेषजनकमभूत्। 'तदेतत्' = 'तत्' प्रागुक्तं, 'एतत्'—अनन्तरोक्तप्रकारेण परमात्मसम्बद्धं, 'रोहितं रूपं' = रक्तं ज्योतिः; 'जातवेदसे सुनवाम सोमम्' इति मन्त्रात्मिकया दुर्गासावित्र्या, देवीसूक्तेन, सपरिशेषरात्रिसूक्तेन, उमया सह वर्त्तमान उमाधिष्ठित इति योगनिवेदितमहिमसोममन्त्रभूयिष्ठतया च ऋग्वेदसम्पादितकर्म्मफलभूतोमारूपरक्तज्योतिः परमात्मन एवेति रहस्यम्। अस्य निष्कर्षस्तु, मन्त्रज्ञा ब्राह्मणा आदित्यमण्डलस्थं ध्यायन्तः परमात्मानं यज्ञेनाराध्य यज्ञियद्रव्यार्पणजन्यशुभादृष्टेन जनितया तत्कृपयाविर्भूतं तदीयशरीरं पश्यन्तस्तृप्यन्ति। तत्राद्यं रक्तज्योतिर्म्मयमुमारूपम्। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इत्यादिश्रुतिरप्यत्र सम्बन्धनीया। अनन्तरं शुक्लादिश्रुतिरपि प्रदर्शितप्रकारेण व्याख्येया। शाक्तमात्रवेद्योऽयं गूढः पन्था व्याख्यात्रन्तरैरपरिशीलितोऽपि जगन्मातुः कृपाभिलाषिभिः प्रकटितोऽस्माभिः। अत्रेदं तत्त्वम्, जीवानां शरीरं स्वस्वादृष्टेन, परमात्मनः शरीरपरिग्रहस्तूपासकादृष्टेनेति विशेषः, देवत्वकामनया ये स्वाभीष्टरूपालम्बनेन वा नीरूपं वा मातृभावादिना ब्रह्मोपासते तेषामेव रूपदर्शनेन तृप्त्यतिशयः सुचिरस्थेमा च भवति, किन्तु न मोक्षः। ये तु यजमानाः कर्म्मफलं तत्र समर्पयन्ति स्वयमकामाः, तत्प्रीतिमात्रार्थं वा यजन्ते, तेषां देवत्वप्राप्त्यनन्तरं ब्रह्मज्ञानादयः।

ततश्च चरमब्रह्मसाक्षात्कारान्मोक्षः । एवञ्च "असौ वा आदित्यः पिङ्गलः" इति श्रुतावपि असाविति निर्देशात् शुक्लादिरूपकान्तरूपाणां प्रागुक्तश्रुत्या निर्देशाच्च ब्रह्मण एव साकारस्येमानि रूपाणि । अतएव तान्येव रूपाणि नाडीषूक्तानि, ब्रह्मणः सर्व्वगतत्वात् । आदित्यालम्बनेनोपासनास्तुत्यर्थो नाडीखण्डः । अत्र 'परं ज्योतिरुपसंपद्य' इति यदुक्तं तदुपपादकम् 'असौ वा आदित्यो देवमधु' इत्यादिकम्; आलम्बनभेदस्तु प्रकरणभेदादवगन्तव्यः । नाडीखण्डे 'तेजसा हि तदा सम्पन्नो भवति' इति निगदस्तु तत्तज्ज्योतिर्म्मयरूपेणोपासकानां समासन्नसिद्धीनां सुषुप्तौ वैशिष्ट्यप्रदर्शनार्थः, येषामुपासकानां सिद्धिः प्रत्यासन्ना तेषां सुषुप्तिरेवंरूपा भवतीति तात्पर्य्यम् । संप्रसादश्रुतौ 'परं ज्योतिरुपसंपद्य' इत्युभोपासकानाम् । अन्योपासकानान्तु तत्तत्तेजःसम्पत्तिरिति विशेषः । 'सता सोम्य तदा सम्पन्नो भवति' इति श्रुतिर्हि सुषुप्तजन्मिमात्रसाधारणभावमावेदयति । विशेषाभिधानन्तूपासनास्तुत्यर्थमुपासनावस्थाज्ञापनार्थञ्च। ननु संप्रसादादित्यनुक्त्वा 'स्वाप्ययात्' इति सूत्रवचनं किमर्थमिति चेत् अनुपासकसाधारणसुषुप्ते र्वैलक्षण्यसूचनार्थम् । संप्रसादादिति यदि सूत्रं स्यात्ततः केवलम् "अथ य एष संप्रसादः" इति श्रुतिरेवोपतिष्ठेत, विशेषस्य सामान्यपरत्वाभावात्, सामान्यतः स्वाप्ययादिति सूत्रेण तु द्वयोरुपस्थितिसम्भवेन वैलक्षण्यज्ञानस्य सुलभत्वात् । वैलक्षण्यं तावद्ब्रह्मोपासनानिरतचित्तस्यासन्नसिद्धेः पुरुषस्य सुषुप्तिप्राक्काले सविशेषे तद्रूपे ब्रह्मणि स्थितिः, ततश्च निर्व्विशेषे, सैव सुषुप्तिः

शिवाद्युपासनानिरतचित्तस्य तु तथाविधपुरुषस्य सुषुप्तिप्राक्काले तत्तद्रूपे स्थितिरिति 'तेजसा सम्पन्नो भवति' इति सामान्यपरश्रुतेः, विषयमग्नचित्तानान्तु तत्काले तावदज्ञाने स्थितिः, निर्व्विशेषब्रह्मनिष्ठस्य तु सुषुप्तिप्राक्काले ब्रह्मानन्दे स्थितिः, सुषुप्तिस्तु सर्व्वेषां समाना निर्व्विशेषब्रह्मस्थितिरूपा। ननु चिदचिदात्मकस्य कथं निर्व्विशेषत्वमिति चेत् प्रविलीनप्रपञ्चत्वेनासत्कल्पायास्त्रैगुण्यरूपाया अचितः पृथगविभाव्यमानत्वेन चिदंशस्याविशेषतया, चिदचिदात्मकब्रह्मणो निर्व्विशेषत्वात्। यद्वा परिच्छिन्नत्वम् = अहमित्यादिना मिथोव्यावृत्तत्व—विशेषः, तद्रहितस्य निर्व्विशेषत्वात्। इयं हि निर्विशेषब्रह्मरूपा शक्तिराद्येति व्यपदिश्यते। न च 'तस्मिन् शुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितञ्च' इति श्रुत्यन्तरे ( बृ० ४।४।१ ) आहुरिति क्रियापदेन एक इत्यादेरध्याहर्त्तव्यकर्त्तृपदसम्बन्धात् परमतमिदं दूषणार्हम्, 'तद्धैक आहुरसदेवेदमग्र आसीत्' इतिवत्ः ( छा० ६।२ ) मन्त्रे अध्याहर्त्तव्यकर्तृपदकस्य आहुरिति क्रियापदस्य प्रामाणिकसंवादद्योतनन्यायेन सिद्धान्तप्रतिपादनायासकृत्प्रयोगात्। स च 'अपाणिपादो जवनो ग्रहीता' इति ( १।४ ) श्वेताश्वतरमन्त्रे 'तमाहुरग्र्यं पुरुषं पुराणम्' इति 'बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम्' इति च ( २।१ ) कठोपनिषन्मन्त्रे द्रष्टव्यः। तस्मात् स्वाप्ययादिति सूत्रेण निराकारम् उभाकारं च ब्रह्म प्रतिपादितम्।

श्रीचक्रपक्षे नवमसूत्रोत्थितिबीजन्तु—ननु शुभागमपञ्चकमिति यदुक्तं तस्मिन् को विशेषो येन यामलभैरवादित-

न्त्राणां हेयत्वेऽपि तस्योपादेयत्वम् ? तत्रोत्तर-सूत्रमेतत्, 'स्वाप्ययात्' समयादित्यर्थः, स्वया निजशक्त्या आप्यं स्वाप्यं याति प्राप्नोति यः (शिवः) कर्त्तरि कप्रत्ययात् तस्मात्, स्वेन स्वकीयेन शिवेन आप्यं याति प्राप्नोति यन्मिथुनं तस्मादिति वा, विशेषः शुभागमपञ्चकस्येत्यध्याहार्थः। साम्यप्राप्त्यर्थकः समयशब्दः, स्वाप्ययशब्दश्चेति भावः। आप्यं तत्त्वगुणलभ्यं रूपादिकं न तु आप्तं द्वयोस्तुल्यकालं हृदये दृश्यत्वात्। एतेन समयाचारघटकसमयशब्दयोगो दर्शितः। समं साम्यं याति प्राप्नोति इति हि समयशब्दार्थः। समयस्य शिवस्य समयायाः शिवायाश्च तुल्ययोर्मानसाराधनविधिः शुभागमपञ्चकस्य तन्त्राणां चतुःषष्टेरेको विशेष इति भावः। १।१।९ ॥

ननु सतीयमित्यस्य वाक्याकारत्वेऽपि, अक्षरार्थमुपादाय सत्यमित्यस्य स्वरूपनिर्वचनात् पुनर्वाक्यार्थग्रहणमयुक्तमिति चोद्यं परिहरन्नाह—

## गतिसामान्यात् । १।१।१० ॥

तथा हि 'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयम् इति तस्माद् हृदयम्' इति श्रुत्या ( छान्दो० ८।३ ) हृदयमिति वाक्यविवरणरूपया आत्मनो ग्रहणम् 'एष प्रजापतिर्यद्धृदयमेतद् ब्रह्म' इत्युपक्रम्य "तदेतत् त्र्यक्षरं हृदयमिति 'हृ' इत्येकमक्षरम् अभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद 'द' इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद 'य

॰मू' इत्येकमक्षरमेति स्वर्गं लोकं य एवं वेद' इति (बृ० ५।३ अन्यथा पुनरक्षरार्थग्रहणम्—इत्येवं गतिः' उभयरूपेणार्थज्ञानं तस्याः सामान्यात् समानत्वादत्राप्युभयरूपेणार्थग्रहणं नायुक्तम् ।

श्रीचक्रपक्षे तु—स्वाप्ययादिति सूत्रार्थोपपादनाय सूत्रयति गतिः सामान्यादिति । 'गतीनाम्' = अधिष्ठानावस्थानानुष्ठानरूपनाम्नां, 'सामान्यात्' = समानत्वात् स्वाप्ययत्वमिति शेषः । 'गतिः' = गम्यते प्राप्यते अस्मिन् इति अधिष्ठानं, गतिः = अवस्थानं दशा अवस्था आभिधानिकोऽयमर्थः, गतिः = गम्यते कृत्या प्राप्यते यत् इति अनुष्ठानम्, गतिः = गम्यते ज्ञायते येन इति रूपं नाम च । 'सर्व्वे गत्यर्था धातवः प्राप्त्यर्था ज्ञानार्थाश्च' इत्यभियुक्तोक्तेः । यद्वा गतिर्दशा सा चाधिष्ठानावस्थानानुष्ठानैस्त्रिधा भिद्यते, रूपं नाम चोक्तयोगलभ्यम् । अधिष्ठानादि-पञ्चविध-साम्यं शिवशक्त्योरिति मन्यमानानां शुभागमपञ्चकानुवर्त्तिनां समयिसंज्ञा । उक्तं हि सौन्दर्य्यलहर्य्यां 'तवाधारे मूले सह समयया लास्यपरया' इति श्लोकव्याख्याने देशिकवरैर्लक्ष्मीधरपादैः, "समया नाम—शम्भुना पञ्चविधं साम्यं यातीति समया; समयत्वं शम्भोरपि पञ्चविधं साम्यं देव्या सह यातीति । अत उभयोः समप्राधान्येनैव साम्यं विज्ञेयम् । पञ्चविधसाम्यन्तु—अधिष्ठानसाम्यं, अवस्थानसाम्यं, अनुष्ठानसाम्यं, रूपसाम्यं, नामसाम्यञ्चेति । यथा 'तवाधारे' इति अधिष्ठानसाम्यमुक्तम्, उभयोराधारचक्रस्याधिष्ठानरूपत्वात्, अनुष्ठानसाम्यं 'जनकजननी-मज्जगदिदम्' इत्यनेन प्रतिपादितम्, उत्पादनक्रियायाम् उभयोर्व्याप्रि-

यमाणत्वात्, अवस्थानसाम्यं लास्यताण्डवशब्दाभ्यां प्रतिपादितं लास्यताण्डवयोर्नृत्यरूपेणैकत्वात्, रूपसाम्यन्तूभयोस्तन्त्रान्तरसिद्धम्—

जवाकुसुमसङ्काशौ मदाघूर्णितलोचनौ ।
जगतः पितरौ वन्दे भैरवीभैरवात्मकौ ॥" इति

—विस्तरस्तत्त्वाकरेऽनुसन्धेयः ॥ १।१।१० ॥

ननु तथापि ब्रह्मणः साकारत्वं कथमुपपन्नं ? शक्तिशब्दवद् ब्रह्मशब्दवद् वा, सतीयमित्यस्यापि नित्यसम्बद्धचिद्चित्परतया युक्तत्वात्, न च 'परं ज्योतिरुपसम्पद्य' इत्यादि श्रुत्या तदुपपादितमिति वाच्यं; 'ज्योतिषां ज्योतिः' इत्यादावपि उमाकारशून्ये ब्रह्मणि ज्योतिःशब्दप्रयोगात् 'परं ज्योतिः' इत्यस्य तादृशज्योतिर्बोधकतयैवोपपत्तेः, ज्योतिर्मात्रपरत्वेऽपि करचरणमुखाद्यवयवविशेषवदुमारूपस्याप्रतिपादनाच्चेत्याशङ्कामपनुदति—

श्रुतत्वाच्च । १।१।११

श्रुतं हि 'तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम्' इति ( केन० ३।१२ ) 'बहुशोभमानां' 'स्त्रियम्' इत्याकारस्य स्पष्टश्रुतिरस्ति, तस्याश्च श्रुतौ हैमवत्या उमेति संज्ञा भवति, अद्रिजा हैमवतीति चैकार्थकं शब्दद्वयम्, कठोपनिषदि हंसावत्यामृचि च "अद्रिजा ऋतं बृहत्" इति—अद्रिजाया बृहद्‌तत्त्वेन ब्रह्मत्वं, तस्माच्छ्रुतत्वात् उमाकारं ब्रह्म सतीयमिति वाक्यार्थात् पर्यवसन्नम् । अक्षरार्थात्तु निराकारमित्यवोचाम ।

नन्विदमनुपपन्नम्, यत्कारणम्—अद्रिजापदेन हैमवतीपदेन च श्रौतेन तस्या उत्पत्तिर्लभ्यते, स्मर्य्यते च पुराणेषु व्यक्तम्, ब्रह्म च नित्यम्; नैष दोषः, गिरिदम्पत्योस्तपोविशेषेण—तद्रूपेणाविर्भावस्यैव जन्मतया व्यपदेशात्, ब्रह्मणः सर्व्वशक्तित्वात्, 'त्वं स्त्री त्वं पुमानसि' इति श्रुतेः, 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्' इति श्रुतेश्च। सूत्रे चकारः स्वाप्ययाधिकरणार्थप्रतिपादकहेतूनां चरमत्वद्योतकः। श्रीचक्रपक्षे सूत्रोत्थानबीजन्तु—ननु श्रीचक्रोपासनस्य श्रौतत्वेऽपि निरुक्तसमयिमतमश्रौतमित्याशङ्का, तत्रोत्तरसूत्रं श्रुतत्वाच्चेति, श्रूयते हि कैवल्योपनिषदि मन्त्रवर्णः—'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्।' उमासहायत्रिलोचनलक्षणस्य भूतयोनिचक्रस्य=शिवशक्तिमेलन—नवयोनिचक्रस्य, ध्यानयोगेन दर्शनं तमसः परस्ताद्गमनहेतुरिति समयिमतस्य श्रुतत्वात् नाश्रौतत्वम्, इत्यवैदिकतन्त्रान्तरेभ्योऽन्यो विशेषः। उमासहायमित्यनेनाधिष्ठानादिसाम्यं सूचितम्, उमासाहित्यविशिष्टे नीलकण्ठे विशेषेणान्वयात्; सलक्ष्मणो रामोऽलङ्कृत इत्यत्र अलङ्कृतत्वस्य लक्ष्मणेऽपि बोधवत् पारमेश्वर्य्यादीनामुमायामपि बोधात्। उमाया रक्तं ज्योतिरूपपादितपूर्व्वं 'नीलकण्ठम्' इत्यनेनास्यापि तथारूपत्वं सूचितम्, तान्त्रिकश्रुतौ 'बालार्ककोटितेजसं धृतजटाजूटेन्दुखण्डोज्ज्वलम्' इत्युपक्रम्य 'श्रीनीलकण्ठं भजे' इति पर्य्यवसानेन तथा प्रतिपादनात्। 'प्रशान्तम्' इत्यनेनाव-

वस्थानसाम्यं सूचितं मुक्तिजननानुकूलत्वात्, परमेश्वरमित्यनेन नामसाम्यं सूचितं परमेश्वरीमित्यस्योमानामत्वात्, प्रभवप्यम्-ईशानं द्वयोर्मिलितयोस्तुल्यम्। समयिनां बाह्यपूजा सनत्कुमारसंहितावचनेन प्रतिषिद्धा,—यथा 'बाह्यपूजा न कर्त्तव्या कर्त्तव्या बाह्यजातिभिः। सा क्षुद्रफलदा नृणामैहिकार्थैकसाधनात्। अन्तराराधनपरा वैदिका ब्रह्मवादिनः। जीवन्मुक्तास्चरन्त्येते' इत्येतन्मूलं 'ध्यात्वा मुनिर्गच्छति' इत्यादिः श्रौतमन्त्रः। किञ्च 'नैतमृषिं विदित्वा नगरं प्रविशेत्' इति च तैत्तिरीयारण्यके श्रूयते। एतमृषिम् मन्मथं विदित्वा 'नगरं' श्रीचक्रात्मकं न प्रविशेत् = "ऋषिज्ञानपूर्वकं श्रीचक्रात्मकं नगरं न पूजयेत्, बाह्यपूजां न कुर्य्यात्" इति लक्ष्मीधरदेशिकपादाः। अपि च श्रौतमन्त्रे योनिशब्द एव केवलं श्रीचक्रस्य प्रमाणमित्यपि न, किं तर्हि—

अष्टाचक्रा नवद्वारा देवानां पूरयोध्या।
तस्यां हिरण्मयः कोशः स्वर्गो लोको ज्योतिषावृतः।

इति तैत्तिरीयारण्यकश्रुतिः, अयमर्थः,—अष्टकोण—दशकोणद्वितय-चतुर्दशकोणाष्टपत्र-षोडशपत्र—त्रिवलय—त्रिरेखात्मकान्यष्टौ चक्राणि यस्याः सा अष्टाचक्रा, अत एव नवद्वारा-नवानि द्वाराणि त्रिकोणरूपाणि यस्याः सा नवद्वारा, देवानामिन्द्रादीनां पूज्यत्वेन सम्बन्धिनी पूः श्रीविद्यानगरम्; यद्वा देवानां सूर्य्यचन्द्राग्नीनां पूः सोमसूर्य्यानलात्मकत्वाच्छ्रीचक्रस्य। तस्य पुरत्रयसमष्टिरूपत्वात् पूरित्येकवचनसिद्धिः। अयोध्या असाध्या मन्दभाग्यानामिति लक्ष्मीधरपादाः, अयोध्या योद्धुमशक्या कामक्रोधादिरि-

पुमिरितितु वयम, समयाचारेण श्रीचक्रसेवकानां कामादयो रिपवो निर्बला भवन्तीति भावः। तस्यां पुरि श्रीचक्ररूपायां हिरण्मयः कोशः, सहस्रदलकमलकोश इत्यर्थः, तस्य कोशस्य ज्योतिषा स्वर्गलोक आवृतः। ज्योतिर्लोकः स्वर्गलोक इत्येकोऽर्थः, इत्येव तैत्तिरीयारण्यके श्रीचक्रतद्विद्या-तदनुष्ठान-तत्फलादिषु भूयस्यः श्रुतयः सन्ति। चकारात् श्रुत्यविरोधलक्षणोऽनुक्त-हेतुः समुचितः। तस्मात् समयिमतस्य श्रौतत्वात् अंशतोऽपि श्रुतिविरुद्धत्वाभावाच्च तत्प्रतिपादकशुभागमपञ्चकस्य यामलादि-तन्त्रेभ्यो नितरां विशेष इति ध्येयम्। १।१।११।

नन्वेवं निराकारं ब्रह्म किं स्वरूपम्? भूताकाशवाय्वादिभेदेन निराकारस्य नानाविधत्वात्, नच चिदचिदात्मकत्वेनैव विशेषः, प्राणमयमनोमयविज्ञानमयानन्दमयानां चिदचिदात्मकतया विशेष-विरहात् इति जिज्ञासायामाह।

( आनन्दमयाधिकरणम्—७ )

## आनन्दमयोऽभ्यासात्। १।१।१२ ॥

तैत्तिरीये प्राणमयादिश्रुतिर्विचारार्हवाक्यम्, अत्र संशयः—निराकारं ब्रह्म प्राणमयादिषु किं स्वरूपम्? सर्वेषामेव चिदचिदा-त्मकत्वात् निराकारत्वाच्च, नच पुरुषविधत्वोक्तिः पक्षपुच्छाद्युक्तिश्च निराकारत्वे बाधिकेति वाच्यम्, रूपकत्वेन तदुक्तेर्निराकारत्वे बाधकत्वविरहात्। अत्राह प्राणमय एव तदस्तु प्रथमोपस्थितप-रित्यागे मानाभावादेवंप्राप्ते उच्यते—उक्तश्रुतिवाक्यस्तोमान्तर्गतः

'आनन्दमयः'—निराकारं ब्रह्मेतिशेषः, अत्र श्रुत्येकदेशपुंलिङ्गशब्दग्रहणम्, तच्चोद्देश्यपदम्, नातो लिङ्गव्यत्ययः। कुतः 'अभ्यासात्'=आनन्दमयशब्देन आनन्दवाचकशब्देन च निराकारब्रह्मणः पुनः पुनरभिधानात्। 'रसो वै सः' इत्यानन्दमयप्रस्तावे तस्य निराकारस्वरूपं रसत्वमुक्त्वा 'रसं ह्येवायं लब्ध्वा आनन्दी भवति, कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाति यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने' इत्याद्युक्तम्। 'सैषानन्दस्य मीमांसा भवति' 'एतमात्मानमानन्दमयमुपसंक्रम्य' 'आनन्दो ब्रह्मेति व्यजानात्' इति तैत्तिरीयश्रुतयस्तमेव निराकारं ब्रह्मावगमयन्ति, शब्दतः प्रकरणाच्च। नन्वत्रापि पुरुषविधत्वादिव्यपदेशो यदि रूपकतया गृह्यते तत्र प्रयोजनं वक्तव्यम् इति चेद् ब्रूमः, आकाशतया व्यपदिष्टस्य विभुनो ब्रह्मणः 'तस्य प्रियमेव शिरः, मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः 'इत्येवं शिरआदितया अवयवकल्पनम्—तत्तत्सुखस्य गुणप्रधानभावावेदनार्थम्, तेषां च विषयसुखानामचिदवच्छेदेन, 'आनन्द आत्मा' इति नित्यसुखस्य च चिदवच्छेदेनैकत्रावबोधनार्थञ्च पुरुषविधतया कल्पनम्। पुरुषविधत्वञ्च पुंस्वरूपत्वम्, अतः पक्षिरूपणेऽपि न तद्बाधः। तस्मात् तादृशपक्षिरूपस्य ब्रह्मणः चिदचिद्रूपत्वमावेदितमित्येव रूपकप्रयोजनम्। अतएव तादृशं ब्रह्मपुच्छं चिदचितोः प्रतिष्ठा—प्रतिष्ठात्वं—नाम—आश्रयत्वम्। यथाहि पक्षिणः पुच्छं प्रतिष्ठा, तथा नित्यसम्बद्धचिदचिदात्मकं ब्रह्म—

भ्यितस्त्रिस्त्र प्रतिष्ठा, अत एव शक्तिरिति गीयते। न ह्यशक्तिः प्रतिष्ठा भवति। द्विविधा हि शक्तिः—धर्म्मरूपा धर्म्मिरूपा च। तत्र या अपराः शक्तयस्ता धर्म्मरूपाः, या चैका ज्ञानबलक्रियात्मिका शक्तिः स्वभावसम्बद्धा सा धर्म्मिरूपा, सैव प्रतिष्ठा—तद् ब्रह्म 'अन्योऽन्तर आनन्दमयः' इत्युपक्रान्तं निराकारमिति पर्य्यवसन्नम्। श्रीचक्रपक्षे, अस्य सूत्रस्योत्थानबीजन्तु—ननु समयिमते ईक्षत्यधिकरणे 'तन्निष्ठस्य मोक्षोपदेशात्' इति सूत्रव्याख्यायां 'परमं साम्यमुपैति' इति मोक्ष उपदिष्टः, स्वाप्ययाधिकरणे च "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" इति श्रुतिरुपदर्शिता—आभ्यां किंस्वरूपा मुक्तिरुपपादिता? किञ्च श्रूयते तैत्तिरीयारण्यके, "यो वै तां ब्रह्मणो वेद अमृतेनावृतां पुरीं तस्मै ब्रह्म च ब्रह्मा च आयुः कीर्त्तिं प्रजां ददुः" 'ब्रह्मणः'= ब्रह्मस्वरूपाया भगवत्याः, 'ताम्'=पूर्व्वोक्तां 'अमृतेनावृताम्'= चन्द्रमण्डलगलत्पीयूषधारावृतां 'पुरीम्'=श्रीचक्ररूपां त्रिपुरायाः पुरम् 'यो वेद तस्मै' 'ब्रह्म' ब्रह्मस्वरूपा, भगवती, 'ब्रह्मा'= ब्रह्मस्वरूपो भगवान्—इति द्वौ 'आयुः कीर्त्तिं प्रजाञ्च ददुः'=दद्यातामित्यर्थः, तत् कथं मोक्षः? अत्रोत्तरम्—'आनन्दमयोऽभ्यासात्' इति। अभ्यासः क्रियाभ्यासो दर्शनाभ्यासश्च। तस्माद् आनन्दमयो भवति,—अयमेव मोक्ष इत्यर्थः, अयं भावः,—सकामानभ्यासकृताभ्यां ताभ्यामायुरादिफललाभः, अकामाभ्यासकृताभ्यां मोक्षः, तत्स्वरूपञ्चानन्दमयत्वम्, "स्वर्य्यन्तो नापेक्षन्ते" इति तैत्तिरीयारण्यकश्रुतेः; 'यन्तः'—

चक्रविद्यामवगच्छन्तः, स्वर्नापेक्षन्ते—इति लक्ष्मीधरपादाधिव्याख्यानस्य स्वर्गसुखं तुच्छीकुर्व्वन्तीतिभावः, तेन निरतिशयसुखस्वरूपो मोक्षः, इदमेव परमसाम्यं तमसः परस्ताद्गमनञ्चेति । १।१।१२ ॥

नन्ववयवे विकारे च मयटो विधानात् विभुवस्तुनोऽवयवाभावेन सांख्यमते प्रकृतेरिव विकाराभ्युपगमे कुण्डलादेर्हिरण्यत्वहिरण्मयत्ववत् आनन्दत्वमानन्दमयत्वञ्च ब्रह्मणो युज्येत, यथानन्दस्य विकारभूतं ब्रह्म स्यात्; नत्वेवं सम्भवति, सर्व्वोपादानताया ब्रह्मण्यवधारणात्, तस्मान्नानन्दमयो ब्रह्मस्वरूपमिति शङ्का—तत्समाधानगर्भं सूत्रमाह ।

## विकारशब्दान्नेति चेन्न प्राचुर्य्यात् । १।१।१३ ॥

'विकारशब्दात्' विकारार्थकमयट्प्रत्ययात्मकशब्दात्, आनन्दमय इत्यनुषज्यते 'न' ब्रह्म इति शेषः, ब्रह्मस्वरूपं न भवितुम् अर्हतीत्यर्थः, 'इति' इयं शङ्का 'चेत्' यदि स्यात्,—तत्रोत्तरम्, 'न' न सा युक्तेत्यर्थः, कुतः 'प्राचुर्य्यात्' आनन्दस्येति शेषः । तथा च आनन्दमयशब्दः प्रचुरानन्दबोधकः, प्राचुर्य्यार्थेऽपि मयटो विधानात् उक्तशङ्काया असम्भवात्, तदुक्तं भगवता पाणिनिना 'तत्प्रकृतवचने मयट्' इति, व्याख्यातञ्च शाब्दिकाचार्य्यैः "प्राचुर्य्येण प्रस्तुतं प्रकृतं तस्य वचनं प्रतिपादकं भावेऽधिकरणे वा ल्युट्" इति । आनन्दान्तरं ह्यप्रचुरम् अन्यस्य भूयस्त्वश्रुतेः,—'सैषानन्दस्य मीमांसा भवति, युवा स्यात् साधुपुत्राध्यापक आशिष्ठो

द्रढिष्ठो बलिष्ठः, तस्येयं पृथिवी सर्व्वा वित्तेन पूर्णा स्यात्, स एको मानुष आनन्दः, ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्व्वाणामानन्दः' इत्युपक्रम्योत्तरोत्तरमानन्दभूयस्त्वमुपदिशन्ती 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः स यश्चायं पुरुषे यश्चासावादित्ये' इति श्रुतिः ( तै० २।८ ) तदानन्दस्य सर्व्वतः प्राचुर्य्यमाह। अत्र 'प्रजापतेः' हिरण्यगर्भस्य 'ब्रह्मणः' परमात्मन इत्यर्थः। ब्रह्मण इति षष्ठी तु पुरुषस्य चैतन्यं, राहोः शिर इतिवदभेदार्था। वस्तुतः अंशिनोऽश इतिवद् ब्रह्मण आनन्द इत्यत्रापि भेदे षष्ठी, चिदचिदुभयात्मकं हि ब्रह्म, तत्र चित्त्वावच्छेदेनानन्दत्वम्, अचित्त्वसामानाधिकरण्येन सत्त्वांशे चानन्दत्वमिति निरतिशयानन्दरूपत्वेनानन्दमयं भवदपि चिन्मात्रस्वरूपानन्दनिष्ठभेदप्रतियोगि चेति षष्ठीप्रयोगो नानुपपन्नः। अयमाशयः- द्विविधो ह्यानन्दो नित्यः सत्त्ववृत्तिरूपश्च। तयोरनुगमस्तु वृत्तिरूपदुःखमोहविरोधिभावत्वेन। आनन्दमय इत्यत्र मयट्प्रत्ययप्रकृत्यर्थतावच्छेदकं हि यथोक्तमनुगतरूपम्;—प्रियमोदप्रमोदानां वैषयिकसुखानां सत्त्ववृत्तिरूपाणाम् आत्मस्वरूपानन्दस्य चिदात्मकस्य च आनन्दमयेऽन्तर्भावितत्वात्, ब्रह्मण आनन्द इत्यत्र तु चित्स्वरूपानन्द एव गृह्यते, यस्य खलु 'आनन्द आत्मा' इत्याम्नानम्। स च नोभयात्मकः, तस्मादुभयात्मकब्रह्मणश्चिन्मात्रे भेदस्य घटपटोभयभेदस्य घट इव सत्त्वात् षष्ठीप्रयोगः। तस्माद् यः कुतोऽप्यानन्दात् अल्पो न भवति, प्रत्युत सर्व्वतः प्रचुरस्तथाविधानन्दस्वरूपं निराकारं ब्रह्मेति फलितम्। यदि च, प्रजापतिरित्यस्य

दत्तादिनाम्ना प्रसिद्धं देवतान्तरमर्थः, न तु हिरण्यगर्भ इति, किन्तु 'स एको ब्रह्मण' इत्यत्रैव ब्रह्मणो हिरण्यगर्भस्येत्यर्थः, बृहदारण्यके 'स एको ब्रह्मलोक आनन्दः' इति श्रवणात्, न हि परब्रह्मणः कश्चिदस्ति लोकः, न च ब्रह्मैव लोक इति व्युत्पत्तिः 'सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः' ( बृ० ४।३।३५ ) इति श्रुतेर्ब्रह्मलोक-शब्दवदिति वाच्यम्, बृहदारण्यके 'ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दः·········एष परम आनन्द एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददाम्यत ऊर्द्ध्वं विमोक्षायैव ब्रूहि' इति जनकप्रतिवचनेन अस्य ब्रह्मलोकस्य मोक्षरूपत्वाभावावगमात्, यदि ब्रह्मैव लोक इति तात्पर्य्यं ब्रह्मलोक इत्यस्य स्यात्, तस्यैव मोक्षरूपत्वेन तथा प्रतिवचनं नोपपद्येत; न च तात्पर्य्यमनवबुध्यमानस्य जनकस्य तथा प्रतिवचनम्, तथात्वे याज्ञवल्क्यस्य तच्छ्रवणेन रहस्यप्रकाशनभीतेरुत्पत्त्यसम्भवात्, श्रूयते हि—'अत्र ह याज्ञवल्क्यो बिभयाञ्चकार, मेधावी राजा सर्व्वेभ्यो माऽन्तेभ्य उदरौत्सीत्' इत्युच्यते, तदा—'अत ऊर्द्ध्वं विमोक्षायैव ब्रूहि' इत्यस्य यथा विमुक्तः स्यां तथोपदिशेत्यर्थाभ्युपगमेन ब्रह्मलोक इत्यस्य ब्रह्मैव लोक इत्येतत्परत्वेऽप्यसङ्गत्यभावं ब्रूमहे । न हि सर्व्वाधिकानन्द-रूपं ब्रह्मेति वाङ्मात्रेण मोक्षो भवति, ब्रह्मसाक्षात्कारहेतुनिदिध्यासनोपयोगि मननं मे यदुपदेशेन भवति तदेवाचक्ष्वेति जनकप्रतिवचनतात्पर्य्यात् । यद्वा 'ब्रह्मण आनन्दः' इत्यस्य हिरण्यगर्भस्यानन्द इत्येतत्परत्वेऽपि स च यस्यानन्दस्य क्षुद्रांशः स एव

प्रचुरः, प्रचुरबहुशब्दयोरेकार्थवाचायाः कोषसम्मतत्वेन योऽय-मानन्दमयः स एवानन्दभूमेति बहुशब्दादिमनिच् प्रत्ययेन भूमेति सिद्धेः। मनुष्यादयो हिरण्यगर्भान्ताः सर्व्वे एव तदानन्दस्य क्षुद्रांशभागिनः, 'एतस्यैव आनन्दस्यान्यानि भूतानि मात्रामुप-जीवन्ति' इति ( बृ० ४।३।३२ ) श्रुतेः, तैत्तिरीये आनन्दमयाधिकारे 'रसो वै सः······एष ह्येवानन्दयाति' इत्यनेन तदर्थस्यैवाभिधानात्। 'यश्चायं पुरुषे यश्चासावादित्ये स एकः' ( तै० २।८ ) इत्यत्र प्रक्रान्तरसपदार्थानन्दस्यैव तत्पदेन ग्रहणात् न कस्यचिदस्त्यनुयोग-स्यावसरः। 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' इत्यत्र षष्ठीविभक्तिस्तु प्रागुपदर्शितरीत्यैवोपपादनीया। नन्वेवं ब्रह्मज्ञस्य याज्ञवल्क्यस्य कथं भीतिः श्रूयते इति चेत् शरीरसम्बन्धेनाविद्या-लेशस्यानुवृत्तेः, 'सोऽबिभेत्' इति ( बृ० १।४।२ ) सृष्टिकर्त्तुरपि भीतिश्रुतेः, ब्रह्मानन्दसाक्षात्कर्त्तुः शरीरिणोऽभयञ्च तद्योग्य-वाप्राप्तिरित्यवधेयम् ।

श्रीचक्रपक्षे तु—शिवशक्त्योर्मेलनात्मकषड्विंशतत्त्वस्य आनन्दरूपत्वात्, 'शिवशक्त्यात्मकं विद्धि जगदेतच्चराचरम्'-इत्यागमात् सर्व्वस्यैव जगतः शिवशक्तिप्रकृतिकतया शिवशक्त्यो-रानन्दरूपत्वेन, आनन्दमयत्वस्य मुक्तामुक्तसाधारणत्वात् आनन्दमयत्वं मोक्षस्वरूपमित्यनुपपन्नमिति शङ्कातत्समाधानगर्भं सूत्रं विकारशब्दादित्यादि। अस्यार्थः—ननु मयट्प्रत्ययो विकारवचनः, तस्मात् आनन्दमय इत्यनेनानन्दस्य विकारः—आनन्दप्रकृतिक इत्यर्थो लब्धः, ततश्च आनन्दस्व-

रूपशिवशक्तिसम्मेलनप्रकृतिकस्य सर्व्वस्यैव जगत आनन्दमयत्वं, न तु मुक्तमात्रस्येति चेन्न, अत्र मयट्प्रत्ययस्य प्राचुर्य्यार्थकत्वात्, प्रचुरानन्दलाभो मुक्तानामेव भवति, आनन्दप्राचुर्य्यञ्च मुक्तमात्र-लभ्यम्, यथाहि प्रचुरधनस्य दारिद्र्यं न युज्यते तथा प्रचुरानन्द-भागिनो दुःखं नोपपद्यते, न च 'मृष्यन्ते हि स्वर्गसुधामहाह्र-दावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्' इति न्यायेन प्रचुरानन्दभागिनोऽपि दुःखकणिका प्रसज्येत—इति वाच्यं, न्यायार्थानवबोधेन तथाभिधानात्, न हि सुधामहाह्रदावगाहनदशायां सम्भवति वह्निकणिकासंस्पर्शः, किन्तर्हि—भूयः सुधामहाह्रदाव-गाहनिपुणानामपि कदाचिद् उपजायते वह्निकणस्पर्शः। स च क्षुद्रदुःखहेतुतया मृष्यत इति हि न्यायार्थः, अत्र तु नास्ति तन्न्यायावसरः। आढ्यत्वदारिद्र्ययोरिवानन्दभोगदुःखभोगयो-र्यौगपद्यासम्भवेन प्रचुरानन्दावाप्तिदशायां मोक्षाख्यायां दुःखप्रस-ङ्गस्यापादयितुमशक्यत्वात्। 'तत्प्रकृतवचने' इति पाणिनीयसूत्रे भावेऽधिकरणे च ल्युटो ग्रहणादत्राधिकरणपक्षावलम्बनमिति बोध्यम्। १।१।१३ ॥

ननु भवौ प्रियादिसम्बन्धदर्शनात् आनन्दमयोऽयं आन-न्दात्मकब्रह्मप्रकृतिकः कश्चित् कोशो भविष्यति, अन्नमयादिवत्, तस्मात् प्राचुर्य्यार्थे एवायं प्रत्ययः, न तु विकारवचनः,—इत्यत्र किं विनिगमकमित्याक्षेपं परिहरन्नाह—

तद्धेतुव्यपदेशाच्च ।१।१।१४ ॥

स एव हेतुः 'तद्धेतुः' इत्यवधारणबोधकः कर्म्मधारयः।

तस्य 'व्यपदेशः' श्रुतिवचनं तस्मात्। मयटः प्राचुर्य्यार्थत्वमिति शेषः। स च व्यपदेशः 'एष ह्येवानन्दयाति' (तै० २।७) आनन्दयतीत्यर्थः। 'एष एव' = ब्रह्मतया प्रक्रान्त उपसंहृतआनन्दमय एव — आनन्दयति सर्व्वेषामानन्दहेतुर्भवति, नत्वन्यः; यथा हिमानी समीरणं शीतलयति, तेजोराशिरर्कश्चोष्णीकरोति, तथा प्रचुरानन्दस्वरूपः परमात्मा सर्व्वानानन्दयति। तस्मान्न विकारार्थो मयट् प्रत्ययः, किन्तु प्राचुर्य्यार्थः। न हि विकारस्य सर्व्वानन्दहेतुत्वं सम्भवति, अर्व्वाचीनत्वात्।

श्रीचक्रपक्षे तु तदुपासकानां न केवलं मुक्तावानन्दमयत्वमपि तु ततः प्रागपीत्याह—तद्धेतुव्यपदेशाच्चेति, तस्य = आनन्दस्य, यो हेतुस्तस्य, व्यपदेशात् = श्रीचक्रमाश्रित्यागमवचनात्, श्रीचक्रपराणामानन्दमयत्वप्राप्तिरुपपन्ना। आगमवचनं यथा—

त्रिखण्डं मातृकाचक्रं सोमसूर्य्यानलात्मकम्।
त्रिकोणं बैन्दवं सौम्यमष्टकोणञ्च मिश्रकम्॥
चक्रं चन्द्रमयञ्चैव दशारद्वितयं तथा।
चतुर्दशारं वह्नेस्तु चतुश्रकञ्च भानुमत्॥
एतत् प्रसादादिन्द्राद्या वसवोऽष्टौ मरुद्गणाः।
ये ये समृद्धा लोकेऽस्मिंस्त्रिपुराचक्रसेवकाः॥

समृद्धिः = ऐश्वर्यम्, साचानन्दमयत्वहेतुरिति प्रसिद्धम् १।१।१४।

उपक्रमादपि तस्यैवानन्दहेतुत्वं श्रौतमित्येतत्साधयति—

## मान्त्रवर्णिकमेव च गीयते १।१।१५

आनन्दमयस्य चिदचिदात्मकत्वमुपपादितम् । तथाविधमेव ब्रह्म उपक्रमे मन्त्रवर्णेन प्राप्तं संसृष्टं वा 'मान्त्रवर्णिकम्' तदेव वस्तु 'एष ह्येवानन्दयाति' इति सावधारणतद्धेतुव्यपदेशात्मकश्रुतौ 'गीयते' पठ्यते, चः हेतौ । 'एषः' इति आनन्दमयस्यैव सर्वान्तरात्मनः परामर्शकम् । स च मन्त्रवर्णः 'ब्रह्मविदाप्नोति परम्' इत्युपक्रम्य 'तदेषाभ्युक्ता' इत्यनन्तरं पठितः—'सत्यज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्' इत्यादिरूपः । अनेन मन्त्रवर्णेन सत्यमिति-पदद्वारा चिदचिदात्मकं ब्रह्मवोपदिष्टम्; यत् 'सत्' तदमृतं, यत् 'ति' तन्मर्त्यमित्यादिश्रौतनिरुक्तेस्तत्पदस्य । तस्यैवानन्दमयत्वं सर्वान्तरात्मत्वञ्च इत्यस्य प्रियशिरस्त्वाद्यन्वयतया प्रतिपादनात् । तस्मादुपक्रान्तमनुवृत्तञ्च वस्त्वपहाय 'एषः' इत्यनेन वस्त्वन्तर—परामर्शो न युज्यत इति भावः ।

श्रीचक्रपक्षे तु—आगमवचनस्य वैदिकत्वमुपपादयति—मान्त्रवर्णिकमित्यादिना, आगमे यज्जीवतामानन्दमयत्वहेतुर्गीयते तन्नावैदिकं किन्तु मान्त्रवर्णिकं, मन्त्रवर्णेन संसृष्टं—स च मन्त्रवर्णः—'यो वैतां ब्रह्मणो वेद अमृतेनावृतां पुरीं तस्मै ब्रह्म च ब्रह्मा च आयुः कीर्त्तिं प्रजां ददुः' इति तत्प्राप्तस्य आयुरादेरानन्दहेतुत्वात् । अथागमवचने श्रीचक्रोपासनं समृद्धिफलकमुक्तम्, समृद्धिश्चानन्दमयहेतुतया गृहीता, मन्त्रवर्णे तु न समृद्धिः, किन्त्वायुरादिकमेव तत्फलमिति कुतो मान्त्रवर्णिकस्य प्रतिपादन-

मागमवचसेति चेन्नैष दोषः, आयुःप्रजयोरेव फलयोरानन्दमयत्व-हेतुतया लाभात्, कीर्त्तिशब्देन च समृद्ध्यादेरपि प्राप्तेः—न ह्यसमृद्धस्य कीर्त्तिः सम्पूर्णा भवति, स्वजनपालनासामर्थ्यसम्भवपरीवादादीनामपरिहार्य्यत्वात्। 'सुखादीन्दुःखनिधनां प्रतिमुञ्चस्व स्वां पुरम्' इति मन्त्रवर्णो श्रीचक्रोपास्यमूर्त्तेः सामान्यतः स्वभक्तसुखभोगदुःखनाशसाधकतायाः उक्तत्वाच। तस्मादागमवचनं मन्त्रवर्णानभिहितं नाभिधत्ते इत्यानन्दमयत्वं जीवतामपि श्रीचक्रोपासकानामिति सिद्धम्। १।१।१५।

नन्वेवंरूपमान्त्रवर्णिकोक्तिर्यदि चिदचिदात्मकब्रह्मप्रतिपादनहेतुत्वेनानन्दमयपरा स्यात्, प्राणमयादिपरापि कथं न स्यात्? तेषामपि चिदचिदात्मकत्वादित्याशङ्कां निरस्यति—

नेतरोऽनुपलब्धेः। १।१।१६।

'इतरः' आनन्दमयादितरः प्राणमयादिः 'न' ब्रह्मेति शेषः, तत्र हेतुः 'अनुपलब्धेः' भृगुणा तस्य ब्रह्मत्वेनागृहीताप्रामाण्यकोपलम्भस्याभावात्। तथाहि अन्नप्राणमनोविज्ञानानन्दानाम् अन्नरसमय,–प्राणमय–मनोमयविज्ञानमयानन्दमयत्वेन तैत्तिरीयोपनिषदि ब्रह्मानन्दवल्ल्यामुक्तानां विज्ञानान्तेषु ब्रह्मजिज्ञासुना भृगुणा यत एकैकपरिज्ञानादप्यनिवृत्तजिज्ञासेन परावृत्य परावृत्य पितरमुपसरता भूयो-लब्धतन्निदेशेन तपस्तप्तं यावदानन्दब्रह्मज्ञानम्, आनन्दस्वरूपे विज्ञाते च निवृत्ता तस्य ब्रह्मजिज्ञासा, यतः पुनः परावर्त्तमानो नासौ पितरमुपससार; तस्माद् विज्ञान-

मयपर्य्यन्तस्य नास्ति ब्रह्मत्वम्, अस्ति त्वानन्दमयस्य, तदुपलब्धेरेव ब्रह्मजिज्ञासाया निवृत्तेरिति भावः। अतएवान्नमयाधिष्ठितचैतन्यमात्मेति, प्राणमयाधिष्ठितचैतन्यमन्तरात्मेति, मनोमयाधिष्ठितचैतन्यं परमात्मेति, विज्ञानमयाधिष्ठितचैतन्यं ज्ञानात्मेति परिभाषमाणास्तावदागमिनो ब्रह्मस्वरूपमूलविद्यायाः पीठदेवतारूपेण तानर्चयन्ति। मूलविद्या हि आनन्दमयीति सिद्धान्तात्।

श्रीचक्रपक्षे तु—आनन्दमयत्वश्रीचक्रोपासनयोरन्वयमुक्त्वा व्यतिरेकमाह-नेतर इति। 'अनुपलब्धेः' चक्रविद्याया अज्ञानात् अनुपासनादिति यावत्, 'इतरः' समयाचारिभिन्नः—'न' आनन्दमयो न भवतीत्यर्थः। तथाहि श्रुतिः—"इन्द्रमग्निञ्च ये विदुः सिकता इव संयन्ति। रश्मिभिः समुदीरिता अस्माल्लोकादमुष्माच्च" भगवत्याश्चक्रविद्यात्मिकायास्त्रिपुरसुन्दर्य्या अन्यत्वेन ये इन्द्रादिदेवान् जानन्ति उपासते इत्यर्थात्, सिकता इव बालुकाकणा इव अस्मादमुष्माच्च लोकात् समुदीरिताः=उत्क्षिप्ताः, 'रश्मिभिः' सूर्य्यकिरणैः 'संयन्ति' = संबध्यन्ते-न तेषां कश्चिल्लोकः, केवलं तापभाजो भवन्तीत्यर्थः। लक्ष्मीधरदेशिकपादास्तु "ते सिकता इव बालुकाकणा इव संयन्ति परस्परं विरला भ्रष्टा भवेयुः। किञ्च रश्मिभिर्यमपाशैः समुदीरिताः संयता बद्धा भवेयुः, किञ्च अस्माल्लोकादमुष्माच्च लोकाद्, भ्रष्टा भवेयुरिति शेषः" इति 'सिकतावेरिव' इति त्रिपद्या अर्थमाहुः। समयाचारेण श्रीचक्रोपासनं विना आनन्दमयत्वं न भवतीत्यर्थः। १।१।१६।

नन्वेवमपि गुणोपलब्धिर्भवतु मा वा, अभ्यासादिलिङ्गवान-

न्नमय इव विज्ञानमयोऽपि ब्रह्म भवितुमर्हति 'विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतेः, अपि च विज्ञानमयमधिकृत्य 'विज्ञानं देवाः सर्व्वे ब्रह्मज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद् वेद तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा सर्व्वान् कामान् समश्नुते' इति मान्त्रवर्णिकमेव ब्रह्म गीयते । तज्ज्ञानफलञ्च पाप्महानिः, सर्व्वकामावाप्तिश्च एतद्द्वयं ब्रह्मलिङ्गम् 'अपहत पाप्मा' इति ( छा० ८।७ ख० ) 'सर्व्वकामः सर्व्वगन्धः सर्व्वरसः' इति च ( छा० ३।१४ ) श्रुतेः, अस्य ब्रह्मभावस्य विज्ञानमयज्ञानफलतया श्रवणात् 'ब्रह्मवेद ब्रह्मैव भवति' इति श्रुतिदर्शनाच्च विज्ञानमयस्य ब्रह्मत्वं कथं न सिध्येदित्याशङ्कायामाह—

भेदव्यपदेशाच्च । १।१।१७ ।

'नेतरः' इति पूर्व्वस्मादनुकृष्यते । अत्र चकारस्तदनुकर्षणार्थः । आनन्दमयादितरो विज्ञानमयो न ब्रह्म इत्यनुकृष्टस्यार्थः । अत्र हेतुमाह 'भेदव्यपदेशात्' इति, 'भेदस्य' विज्ञानमयात् आनन्दमयस्य यो भेदस्तस्य, 'व्यपदेशात्' श्रुतौ विशेषेण अपदेश उपदेशस्तस्मात् ; श्रुतिर्हि विज्ञानमयोपदेशानन्तरम् 'अन्योऽन्तर आत्मा आनन्दमयः' इति, अन्यः = विज्ञानमयादन्यः, अन्तरः = अभ्यन्तरवर्त्ती तदपेक्षया अन्तर्दृष्टिग्राह्यः चित्तैकाग्र्यगम्य इत्यर्थपरा विज्ञानमयादानन्दमयस्य भेदं व्यक्तमुपदिशति । 'शरीरे पाप्मनो हित्वा' इति नापहतपाप्मत्वं, किन्तर्हि शारीरपाप्ममात्रहानिः, शरीर इति विशेषणात् ; तानि च पापानि 'अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च कायिकं त्रिविधं स्मृतम्' इति स्मृत्या व्याख्यातानि । एतदुक्ति-

रिक्तानां वाचिकमानसपापानामपरिहारेणानपहतपाप्मत्वाभावात् । सर्व्वकामत्वं सर्व्वकामावाप्तिश्च नैकोऽर्थः । सर्व्वकामत्वं सर्व्वकामस्वरूपत्वं सर्व्वकामाधिष्ठानत्वं वा, न तु सर्व्वकाम्यवस्तुलाभः, सर्व्वकामावाप्तिश्च सर्व्वविधकाम्यवस्तुलाभः; स च नित्यतृप्तस्य ब्रह्मणो न सम्भवतीति विज्ञानमयस्योपासनफलं न ब्रह्मभाक्, तस्माद् विज्ञानमयो न ब्रह्म ।

श्रीचक्रपक्षे तु—नन्वस्ति यज्ञफलं स्वर्गः, स च प्रचुरानन्दरूपः 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम्' इति स्मरणात् । तत्, श्रीचक्रोपासक एवानन्दमय इति न युक्तमित्याक्षेपं परिहरति—भेदव्यपदेशाच्चेति ।

भेदेन = यज्ञशीलायज्ञशीलयोर्गृहस्थतदतिरिक्तयोर्मिथश्च भेदेन, व्यपदेशात् = श्रीचक्रोपासनयैव द्वयोरेव स्वर्गापेक्षया सुखप्राचुर्य्यस्य श्रुतौ निर्देशात्, इतरः = श्रीचक्रोपासकादन्यः न आनन्दमयः = प्रचुरानन्दभागी न भवति, आनन्दान्तरस्याप्राचुर्य्यादित्यर्थः । चकारेण 'नेतरः' 'आनन्दमयः' इति सूत्रद्वयप्रतीकयोरनुकर्षात् । सा च श्रुतिः—'अश्रृतासः श्रृतासश्च यज्वानो याप्ययज्वनः । स्वर्य्यन्तो नापेक्षन्ते' इति, श्रृतासः = श्रृताः—श्रृतमेषामस्तीति गृहस्थाः, अश्रृतासः = अश्रृताः—श्रृतं पाको नास्ति येषां ते गृहस्थातिरिक्ताः, यज्वानः = यागशीलाः, अयज्वनः = अयज्वानः—यागरहिताः, यन्तः = चक्रविद्यां जानन्तः, इह ज्ञानमुपासनफलकं विशिष्टं वेदितव्यम्, ये ये समृद्धा लोकेऽस्मिंस्त्रिपुराचक्रसेवकाः' इत्यागमोक्तेः, श्रीच-

क्रोपासकानां तैत्तिरीयारण्यकोक्तश्रुश्निसंज्ञकमुनीनाम् 'उत्तिष्ठत मा स्वप्त अग्निमिच्छध्वं भारताः' इत्युपासनोद्योगप्रतिपादकश्रुतेः, तदनन्तरं 'युवा सुवासाः' 'आप्लवस्व संप्लवस्व' इत्यादिनोपासनप्रकारज्ञापकश्रुतेश्च। एतेनैतदुक्तं भवति, यज्ञं विनापि श्रीचक्रोपासकानामानन्दमयत्वात् तादृगानन्दमयत्वे यज्ञोऽन्यथासिद्धः। यद्वा श्रीचक्रोपासनरूपयज्ञस्य 'भेदव्यपदेशात्'। भेदस्य=यज्ञान्तरात् स्वरूपभेदस्य फलभेदस्य च अमृतत्वलक्षणस्य, व्यपदेशात्= व्यक्तरूपेणाम्नानात्, तथाहि 'अपाम सोमममृता अभूम' इति श्रुतौ उमया सह वर्त्तमानतया सोमाख्यस्य चन्द्रमण्डलस्य सहस्रारस्थितस्य श्रीविद्यास्थानस्य ग्रहणम्, तस्य पानं तद्गलितसुधापानं क्रोष्टून् समशृणोदितिवत् तेन चामृतत्वप्राप्तिः 'आनन्दरूपममृतं यद्विभाति' इति श्रुतेः, आनन्दवन्तोऽभूमेति तदर्थः। तद्गलितसुधापानप्रकारश्च योगशास्त्रादिप्रसिद्धः समयिनां सम्मतश्च। बाह्यचन्द्रमण्डलं तत्सम्बद्धा सोमवल्ली च त्रिपुराधिष्ठानम्। अतएव 'जातवेदसे सुनवाम सोमम्' इत्यादेर्ऋचः श्रीत्रिपुराशताक्षरीमन्त्रेऽन्तर्भावो दुर्गासावित्रीत्वेन विष्णुसूत्रे निर्देशश्चोपपन्नः। मानसभजनाशक्तानां समयिनामपि क्षुद्रफलकामनात्यागेन बहिःपूजनमुपपादयिष्यते। शक्तानान्तु प्रतिषिद्धैव; तस्मात् श्रीचक्रोपासक एवानन्दमयो यज्ञान्तराच्च क्षुद्रानन्दभागीति तत्त्वम् ॥ १।१।१७ ॥

ननु आनन्दमयो न चिदात्मकं ब्रह्म, किन्तु जडं महत्तत्त्वं प्रियादयस्तु तद्वृत्तिभेदाः। पुच्छत्वेन रूपिता तत्प्रतिष्ठा जडा

प्रकृतिरेव । तस्या अपि स्मृतौ ब्रह्मत्वेनाभिधानात् ; सत्त्वप्रधानत्वेन चास्या आनन्दमयत्वम् । स्वार्थिकप्रत्ययानां प्रकृतिलिङ्गभागित्वादस्य पुंलिङ्गता। स्मर्य्यते हि 'अव्यक्तं कारणं यत्तं नित्यं सदसदात्मकम् । प्रधानं प्रकृतिश्चैव यामाहुस्तत्त्वचिन्तकाः ।' इत्युपक्रम्य "जगद्योनिं महद्भूतं परं ब्रह्म सनातनम्' इति प्रकृतिस्वरूपनिर्देशानन्तरमन्यस्मिन्नध्याये, 'प्रथमो महतः सर्गो विज्ञेयो महतस्तु सः । तन्मात्राणां द्वितीयस्तु भूतसर्गः स उच्यते ॥ वैकारिकस्तृतीयस्तु सर्गो ऐन्द्रियकः स्मृतः । इत्येष प्राकृतः सर्गः सम्भूतोऽबुद्धिपूर्वकः। इति वायुपुराणे ( वा० पू० ४–६ अ० ) पुराणान्तरे च स्मर्य्यते, तत्र प्राकृतसृष्टेरबुद्धिपूर्वकत्ववचनं, तत्त्वचिन्तका इत्यनेनोक्तसांख्याचार्य्यवादोल्लेखश्च प्रकृतेरचिन्मात्रत्वं गमयतः । सा हि प्रकृतिः "परं ब्रह्म सनातनम्' इत्युक्तब्रह्मरूपा ; तथाच सैव, आनन्दमयश्रुतौ पुच्छवत् प्रतिष्ठा भवतु, यद्वा शिरः प्रभृति पुच्छान्तावयवसमुदायवत्तया कल्पित आनन्दमयः, तदात्मक एवास्तु प्रियादीनां तदीयसत्त्वगुणवृत्तिविशेषरूपत्वादिति शङ्कायामाह—

## कामाच्च नानुमानापेक्षा । १।१।१८

आनन्दमयाधिकारे कामात्='सोऽकामयत' (तै० २।६) इत्यानन्दमयब्रह्मणः कामनाश्रुतेः, 'अनुमानापेक्षा' अनुमानस्य= प्रकृतेर्ब्रह्मत्वज्ञापिकायाः प्रोक्तवायवीयस्मृतेः,"अपेक्षा" =चिदचिदात्मकब्रह्मणो बाधेनाचिन्मात्रत्वबोधनसामर्थ्यं 'न' = नास्ति, कामनाज्ञानयोरव्यभिचारात् । कामनाविषयकश्रुतेर्बलवत्त्वे त्वानन्दमये

ज्ञाननैयत्यावगमात् नाचिन्मात्रस्यानन्दमयत्वमिति भावः। अत्र चकारोऽनुक्तहेत्वन्तरसमुच्चयार्थः। 'स तपोऽतप्यत तपस्तप्त्वा इदं सर्व्वमसृजत' इति ( तै० २।३ ) श्रुतिर्हि हेत्वन्तरम्, तपःसृष्टिकर्तृत्वञ्च बुद्धिपूर्व्वके एव भवतः। अतस्तस्य नाचिन्मात्रात्मकत्वमिति बोध्यम्। महदादिसर्गस्याबुद्धिपूर्व्वकत्वस्मृतिस्तु महदादिसर्गाणां वैकारिकसृष्टिकर्तुः प्रजापतेर्बुद्धिपूर्व्वकत्वाभावमेव गमयतीति तत्त्वम्। श्रीचक्रपक्षे तु—क्रियाभ्यासस्वरूपज्ञापनार्थमिदं सूत्रम्—तथाहि 'आदित्यं गणनाथञ्च देवीं रुद्रं यथाक्रमम्। नारायणं विशुद्धाख्यमन्ते च कुलदेवताम्' इति स्मरणात्, 'मल्लिकामुत्पलम्' इत्युपक्रम्य 'यः प्रयच्छति पुण्यार्थं पुष्पाण्येतानि भारत। चण्डिकायै नरश्रेष्ठ भक्तिश्रद्धासमन्वितः। स कामानखिलान् प्राप्य चण्डिकानुचरो भवेत्।' इति च स्मरणात्—पुष्पादिद्वारकश्रीचक्रपूजनमपि क्रियारूपतया प्राप्तम्। न च समयिनां बाह्यपूजा न कर्त्तव्येति निषेध एव तत्र बाधक इति वाच्यम्, 'सा क्षुद्रफलदा नृणामैहिकार्थेष्टसाधनात्।' इति हेतूपन्यासेन तादृशतान्त्रिकपूजानिषेधेऽपि चण्डिकानुचरत्वप्राप्तिलक्षणमहाफलकस्मार्त्तबाह्यपूजायाः प्रतिषेधाभावात् स्मार्त्तं नित्यबाह्यपूजनं प्राप्तम्—'वरं प्राणपरित्यागः शिरसो वापि कर्त्तनम्। नत्वनभ्यर्च्य भुञ्जीत केशवं कौशिकीं शिवम्' इति स्मरणात्, श्रीचक्रस्यापि चण्डिकापराख्य-त्रिपुरसुन्दरीरूपत्वात्, तत्प्रतिषेधति, कामादित्यादिसूत्रेण। 'कामः'=कामस्य श्रुतिप्रतिपादको वेदांशः, तथाहि तैत्तिरीयब्राह्मणम् ( ३।१०।१० इत्यादि ) "जनको वैदेहः अहोरात्रैः समाजगाम, पुत्रो निर्ऋत्या

वैदेहः, अचेता यश्च चेतनः, स तं मणिमविन्दत् (त), सोऽनङ्गुलि-रावयत्, सोऽग्रीवः प्रत्यमुञ्चत्, सोऽजिह्वो अशश्चत । नैवमृषिं विदित्वा नगरं प्रविशेत्" इति । अस्यार्थो देशिकपाददर्शितो यथा—"जनकः उत्पादकः ( आविर्भावकः, तपसा प्रथमं द्रष्टा ) श्रीविद्याया ऋषिः—विदेह एव वैदेहः ( अनङ्गः ) मन्मथः, 'अहोरात्रैः'=अहोरात्रात्मकैः ( चान्द्रमसाहोरात्रैस्तिथ्यात्मकैः ) पञ्चदशाक्षरीमन्त्रवर्णैः—दर्शादिपूर्णिमाकलात्मकैः ( दर्शादृष्टाप्रभृतिभिः शुक्लप्रतिपद्द्वितीयादिभिः पूर्णिमान्ताभिः पञ्चदशभिः कलाभिस्तादात्म्येन गृहीतैः ) समाजगाम तं ( वर्णसमुदायात्मकं ) मन्त्रं समाजगाम आहृतवान् इत्यर्थः, यस्तु मन्त्रमाहरति स तस्य ऋषि-रुच्यते । अतएव तैत्तिरीयारण्यके अरुणोपनिषदि 'पुत्रो निर्ऋत्या वैदेहः' निर्ऋत्या लक्ष्म्या यद्वा ( निर्ऋतिः अलक्ष्मीः ) अनिर्ऋत्या लक्ष्म्याः ( अकारप्रश्लेषात् ) पुत्रो वैदेहः मन्मथः ( अनङ्गत्वात् ) 'अचेता यश्च चेतनः' अनङ्गत्वादेव चेतोरहितः, चेतनश्च सर्व्वभूतान्तर्य्यामित्वात् 'स तं मणिमविन्दत्' सः अनङ्गः तं प्रसिद्धं मणिं विद्यात्मकं रत्नमविन्दत् लब्धवान् अपश्यत् । असौ अनङ्गः अन्धोऽपि अपश्यदिति अन्धो मणिमविन्दत् (त) इतिवाक्यशेषबलाल्लभ्यते । अतएव परचित्कलाया विद्यायास्त्रि-पुरसुन्दर्य्या मन्मथ ऋषिरभूत् । 'सोऽनङ्गुलिरावयत्' स मन्मथः अनङ्गुलिरनङ्गत्वादेव अनङ्गुलिः, आवयत् असीव्यत्, सीवनानन्त-रकृत्यमाह 'सोऽग्रीवः प्रत्यमुञ्चत्' सः मन्मथः अनङ्गत्वादेव अग्रीवः, मणिसम्पादनफलं प्रत्यामोचनमकरोत्=धृतवानित्यर्थः ।

विद्यारम्भे मणित्वारोपणस्य धारणमेव (केवलं) न फलं भवतीत्याह 'सोऽजिह्वो अशाम्यत' सः अनङ्गत्वादेव अजिह्वः जिह्वारहितः अशाम्यत, अघोषत् आस्वादितवानित्यर्थः......'नैतमृषिं विदित्वा नगरं प्रविशेत्।' एतम् ऋषिम् मन्मथं विदित्वा नगरं श्रीचक्रात्मकं न प्रविशेत्। ऋषिज्ञानपूर्व्वकं श्रीचक्रात्मकं नगरं न पूजयेत् बाह्य-पूजां न कुर्य्यादिति निषेधविधिः। बाह्यपूजायामेव ऋषिच्छन्दो-ज्ञानपूर्व्वकत्वम्। आन्तरपूजायां तादात्म्यसन्धानात्मिकायां ऋष्या-दिज्ञानं नास्ति। उपयोगस्तु दूरत एव। अतो वस्तु-सिद्ध-ऋष्यादिज्ञानपर्य्युदासमुखेन श्रीचक्रस्य बाह्यपूजनं त्रैवर्णिकैर्न कर्त्तव्यमिति नियम्यते। एतेनैतदुक्तं भवति—कामः अस्याः पञ्चदशाक्षरीविद्याया एकैकवर्णं वेदादिशास्त्रेषु इतस्ततो विप्रकीर्णं दृष्टवान्, तपोलब्धज्ञानस्तान् वर्णान् सोमसूर्य्यानलात्मकतया त्रिखण्डं विधाय सीवनं कृतवान्, मूलविद्यया संयोजयामास, एवं सीवननिष्पन्नां षोडशाक्षरीं विद्यां ग्रीवायां धृतवान्-चिरं सेवितवान्-तदनन्तरं चन्द्रकलामृतास्वादं कृतवान्। अतएव अस्या विद्यायाः काम एव ऋषिः। एवं हि कामस्य एतद्विद्याया ऋषित्वादिबोधकश्रुत्या बाह्यपूजाप्रतिषेधात् न स्मृत्युक्तबाह्यपूजनं क्रियाभ्यासे ब्रह्मवादिभिरुत्तमाधिकारिभिः समयिभिरपेक्षणीयं किन्तु प्रागुक्तषड्विधैक्यानुसन्धानमेवेति संक्षेपः॥ १।१।१८॥

ननु कामनाकृतिज्ञानानां वृत्तिरूपाणां प्राकृतत्वमेवेति प्रद-र्शिता श्रुतिः कथमानन्दमयस्याचिन्मात्रात्मकत्वं व्यावर्त्तयेदि-त्याशङ्कायामाह—

## अस्मिन्नस्य च तद्योगं शास्ति । १।१।१९ ।

'अस्मिन्'—आनन्दमयाधिकारे 'अस्य' = आनन्दमयब्रह्मणः, 'तद्योगं' = तद् = तच्छब्देन, योगं = सम्बन्धं—उपस्थाप्यत्वलक्षणं तद्घटितमन्त्रप्रतिपाद्यत्वलक्षणञ्च सम्बन्धविशेषं 'शास्ति' = उपदिशति श्रुतिरिति शेषः। आद्ये श्रुतिः 'रसो वै सः रसं ह्येवायं लब्ध्वा आनन्दी भवति' इति। तत्पदप्रतिपाद्य आनन्दमयो यदि जडं महत्तत्त्वं, यदि वा जडा प्रकृतिः स्यात् 'रसो वै सः' इति तत्पदेन तत्रैव रसत्वमुक्तमित्यभ्युपेयम्। तच्च नोपपद्यते, तल्लाभाज्जीवस्यानन्दित्वासम्भवात्, आनन्दित्वमित्यतिशायने मत्वर्थीयप्रयोगात्। सम्बन्धिमात्रार्थकत्वे एवकारासङ्गतिः, कण्डूयनादिनापि यत्किञ्चिदानन्दाधिगमात्। सर्व्वातिशाय्यानन्दश्च ब्रह्मानन्द इत्यवोचाम। उत्तरत्र 'अभयं गतो भवति' इति श्रवणात्। नहि बुद्धिपरः प्रकृतिपरो वा कश्चिदप्यभयं गतो भवति, पुनरावृत्तिभीतेरनपायात्। द्वितीये—तच्छब्दघटितमन्त्रः, स च 'सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चिता' इति ( तै० २।१ ) तेन ब्रह्मणो विपश्चित्त्वमुक्तम्, विपश्चित्त्वमचिन्मात्रस्य न सम्भवति तस्य चिद्धर्म्मत्वात्; तस्मादानन्दमयश्चिदचिदात्मकं ब्रह्मेति सिद्धम्। सूत्रस्थचकारो हेत्वर्थः, अधिकरणसमाप्तिद्योतकश्च।

श्रीचक्रपक्षे तु—तर्हि कीदृशी क्रिया, कर्त्तव्येत्यत्राह—अस्मिन्निति सूत्रम्। 'अस्मिन्' = श्रीचक्रप्रकरणे 'अस्य' = समयाचारवतः, 'तद्योगं' तत्र—श्रीचक्रे योगं मेलनं—

बहुविधं चतुर्विधं वा ऐक्यं शास्ति अनुसन्धेयतयोपदिशति, यद्वा योगं समाधिं 'शास्ति' कर्त्तव्यतयोपदिशति 'मिथौ चरित्वा प्रविशेत्' ( तै० आ० १।११ ) इति श्रुतिरिति शेषः। मिथौ इति छान्दसः प्रयोगः, मिथः एकान्ते चरित्वा ज्ञात्वा प्रविशेत्। इदं हि रहस्यज्ञानम् ऐक्यानुसन्धानरूपं तच्च गुरूपदेशगम्यम्। समयिदेशिकमतेन कथञ्चिदावेदितपूर्व्वम्। अथवा मिथौ मिथुनभूतौ शिवौ चरित्वा समाधिना लब्ध्वा श्रीचक्रं प्रविशेत् भजेत इति हि तदर्थः। 'तत्सम्भवस्य व्रतम्' सम्भवत्यस्मात् इति प्रजननहेतुः सम्भवः = कामस्तस्य, प्रजनश्चास्मि कन्दर्पं इति गीतोक्तेः, कामराजविद्याया इति यावत् व्रतं साधनम्। देशिकाचार्य्यव्याख्यानस्याप्ययमेव भावः। अत्रापि चकारेणागमवचनं समुच्चीयते—अधिकरणसमाप्तिश्च द्योत्यते। वचनं यथा—'आन्तराराधनपरा वैदिका ब्रह्मवादिनः'। एतेन क्रियोपदिष्टा। आनन्दमयाधिकरणस्य श्रीचक्रपक्षे इत्थमेव व्याख्यानम्,—शाक्तसाधारणपक्षे व्याख्यान्तरमातन्यते—

ननु आद्यस्य हिरण्यगर्भस्य यतो जन्म तद्ब्रह्मेति सिद्धम् आनन्दमयश्रुतिस्तु अन्नादेर्भूतानामुत्पत्तिवद् आनन्दादपि भूतानामुत्पत्तिमुदाहरति न तु हिरण्यगर्भस्य, तस्मादानन्दमयो न प्रकृतं ब्रह्म 'किन्तु अन्नं ब्रह्मेति व्यजानाद्' इतिवद् अब्रह्मणि ब्रह्मत्वारोपवाद इत्याशङ्कापरिहारार्थमानन्दमयोऽभ्यासादिति सूत्रम्। आनन्दमयः='अन्योऽन्तर आत्मा आनन्दमयः' इति श्रुतिस्थ आनन्दमयशब्द', ब्रह्मपर इति शेषः, तत्र हेतुः—अभ्या·

सात्=आनन्दतद्वाचक-सुखादिशब्दानन्दमयशब्दानां श्रुतौ ब्रह्म-परतया पौनःपुन्येनाभिधानात्। श्रुतयस्तु दर्शितप्राया:, 'भूमैव सुखं नाल्पे सुखमस्ति'–प्रभृतयोऽपि द्रष्टव्याः, यत्र तत्तद्व्यावृत्त्या सुखस्य ब्रह्मरूपत्वं स्थापितम् । बाधशङ्काविषयेऽप्यारोपकल्प-नाया अयुक्तत्वं किं पुनर्दृष्टप्रामाण्यकेऽस्मिन्नानन्दमय ब्रह्मवादे इति भावः । ननु माभूदानन्दस्य ब्रह्मत्वे बाधः, आनन्दमयस्य ब्रह्मत्वं त्वसिद्धं ब्रह्मणो विकारत्वासम्भवात् मयट्प्रत्ययस्य तदर्थकत्वाचेत्यभिप्रायकशङ्कागर्भं तत्समाधानसूत्रमुक्तार्थकम् । आनन्दमयशब्देनापि निरतिशयानन्दस्यैव ग्रहणात् तस्य च ब्रह्म-स्वरूपतायां तवाप्यविवादादिति भावः। यतो ब्रह्मा सम्भूतस्त-स्यानन्दमयत्वं साक्षादुपपादयितुं सूत्रयति—तद्धेतुवेति । तस्य = 'यो ब्रह्माणं विदधाति पूर्व्वम्' इति श्रुत्युक्तस्य 'हेतुव्यपदेशात्' = हेतोः = शाश्वतसुखहेतुतायाः व्यपदेशात्=विशेषेण अपदेशः अन्यव्यावृत्त्या स्पष्टाभिधानं तस्मादित्यर्थः। तथाहि श्वेताश्वत-रोपनिषदि 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबल-क्रिया च' इति ब्रह्मस्वरूपप्रतिपादनपरे षष्ठाध्याये 'यो ब्रह्माणं विदधाति पूर्व्वम्' इति प्रपत्ति-मन्त्रात् पूर्व्वमाम्नातं 'तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्' इति 'रसं ह्येवायं लब्ध्वा आनन्दी भवति' इत्यत्रापि आनन्दनित्ययोगस्य मत्व-र्थीयेन बोधनात्, न चानन्दस्य कार्यत्वे तन्नित्ययोग उपपद्यते । एवकारेण चान्यव्यावृत्तिरुपदर्शिता । तथा च श्वेताश्वतरोपनि-षत्–षष्ठाध्यायमन्त्रसमानार्थेयमानन्दश्रुतिः । तेन यस्मा आद्यस्य

जन्म तस्या एवानन्दमयत्वं सिद्धमिति भावः। यच्च भूतानामु-त्पत्तिरानन्दमयादुक्ता, हिरण्यगर्भोपादानस्यापि तद् यथोपपद्यते तत् प्रपञ्चितपूर्व्वम्। अत्र चकार आनन्दरूपतायां स्मृत्युक्तप्रमा-णसमुच्चयार्थः, तच्च प्रमाणं कौर्म्मे पूर्व्वभागे द्वादशाध्याये— 'आनन्दमक्षरं ब्रह्म केवलं निष्कलं परम्। योगिनस्तत् प्रपश्यन्ति महादेव्याः परं पदम्' इति 'महादेव्याः परं पदम्' इति 'तद्विष्णोः परमं पदम्' इति वत्। ब्रह्मण आनन्दमयत्वे हेत्वन्तरमाह—मान्त्र-वर्णिकम् इति। 'सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चिता' इति योऽयं मन्त्रः, तत्र ब्रह्मणो विपश्चित्त्वं 'यो वेदांश्च प्रहिणोति तस्मै' इत्यनेन श्वेताश्वतरमन्त्रेण समुदितम्। मन्त्रान्तराणि तैत्ति-रीयकगृहीतानि—'असन्नेव स भवति' इति 'उताविद्वानमुं लोकम्' इति 'असद्वा इदमग्र आसीत्' इति चैतैर्मन्त्रवर्णैः संसृष्टं तेभ्यः प्राप्तं वा इति मान्त्रवर्णिकमित्यस्यार्थः, तदेव सदसदात्मकं नित्य-सम्बद्धचिदचित्स्वरूपं ब्रह्म आनन्दमय इत्यनेन 'रसं ह्येवायं लब्ध्वा' इति रसशब्देन च 'गीयते' = आम्नायते। नन्वेवं हेतोर-विशेषात् प्राणमयो मनोमयो विज्ञानमयश्च कथं न ब्रह्म? अथ कथमविशेष इति चेत्—'सर्व्वाणि वा इमानि भूतानि प्राणमेवाभि-संविशन्ति प्राणमभ्युज्जिहते कतमा सा देवता प्राणः' (छा० १।१), 'प्राणस्य प्राणम्' ( केन० १ ) 'प्राणो ब्रह्म' ( तै० ३।३ छा० ४।१० ) 'मनो ब्रह्मेत्युपासीत' ( छा० ३।१८ ) 'यदेतद्धृदयं मनश्चैतत्' ( ऐ० ३।२ ), 'एष प्रजापतिर्यद्धृदयमेतद्ब्रह्म' ( बृह० ५।३ ), 'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयम्' इति

( छा० ८।५ ), 'एष आत्मा·····ब्रह्म' ( छा० ८।३।४ ) 'मनो ब्रह्मेति व्यजानात्' (तै० ३।४ ), 'विज्ञानं ब्रह्म वेद' ( तै० २।५ ) 'विज्ञानमानन्दं ब्रह्म' ( बृ० ३।९।२८ ) 'विज्ञानं ब्रह्मेति व्यजानात्' ( तै० ३।५ ), 'विज्ञानं ब्रह्मेत्युपास्ते' ( छा० ७।७ ) इति चैवमादि-श्रुतिभ्यः तत्तन्मयत्वसाधकाभ्यासहेतोरविशेषः—इत्याशङ्कायामाह नेतर इति सूत्रं प्रागुक्तार्थकम् । भेदव्यपदेशादित्यादिसूत्रयोः पात-निकार्थौ प्रथमवर्णकोक्ताविहापि ग्राह्यौ । नन्वेवमपि आनन्दमयो ब्रह्म भवितुं नार्हति, यतस्तैत्तिरीये आनन्दमयानुवाके तावदस्ति 'अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः । आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा ।' इति ( तै० २।५ ) तथाच आनन्दमयः पुरुषविधः पक्षिरूपो वा, ब्रह्म च तस्य पुच्छं, न पुनरानन्दमयस्वरूपं ब्रह्म, इत्याशङ्कामपनयति अस्मिन्निति सूत्रेण—तदर्थश्च 'अस्मिन्'=आनन्दमयानुवाके, 'अस्य'=ब्रह्मणः, 'तद्योगं'=ताभ्यां विलक्षणानन्दाभ्यां योगं—सम्बन्धं, 'शास्ति'=उपदिशति श्रुतिरिति शेषः । अस्यायमाशयः 'पुरुषविधः' इति यदुक्तं तेन गम्यते, यथा पुरुषः चिता आत्मना अचिता बुद्ध्यादिस्थूलदेहान्तेन संघातेन सम्बद्धः, अयमानन्द-मयस्तथा, तदुपपत्तये श्रुतिराह 'प्रियमेव शिरः' इत्यादि, न च पुरु-षस्य पक्षपुच्छवत्त्वमसिद्धम् इति वाच्यम्, पक्षशब्दस्य पार्श्वार्थक-त्वात् पुच्छशब्दस्याश्रयार्थकत्वाच्च । पुरुषविध इत्यस्य पुंविध इत्यर्थे वा, पक्षिण्यपि स्त्रीपुंसविभागस्य वर्तमानत्वात् । पुरुषपदं स्थूलदेहपर-मितितु वस्तुगतिः । प्रियमोदप्रमोदाः सत्त्वगुणानन्दाः, तेषामवयव-

विशेषत्वेन कल्पनम् आनन्दमयेऽचित्सम्बन्धस्य बोधनाय, 'आनन्द आत्मा' इति च चित्सम्बन्धस्य, उभयथैव आनन्दप्राचुर्य्यसम्बन्धः। एकः परिणामी आनन्दः, अन्यश्चापरिणामी, प्रत्येकमेव प्राचुर्य्यात् चिदवच्छेदेनाचिदवच्छेदेन चानन्दमयत्वमुपपन्नम्। यदि चापरिणाम्यानन्दापेक्षया परिणाम्यानन्दस्याल्पत्वं तथापि परिणाम्यानन्देषु यस्य प्राचुर्य्यं तदादायाचिदवच्छेदेनानन्दमयत्वमुपपादनीयम्, चिदवच्छेदेन सर्वातिशाय्यानन्दरूपतया च मुख्यानन्दमयत्वोपपत्तिरिति ध्येयम्। चिदचित्सम्बन्धात् पुरुषतुल्यत्वम्, स्थूलसुखस्वरूपसत्वादिगुणत्रयात्मकप्रकृतेरवयवत्रयत्वेन कल्पनम्, अन्तःस्थचिदात्मनश्चिदानन्दत्वेन च कल्पनमेवं कल्पितांशद्वयमंशिस्वरूपे ब्रह्मणि प्रतिष्ठितम्, अतएव 'पुच्छम्' इति 'प्रतिष्ठा' इति च तद्व्यपदेशः, यथा लूनपुच्छः पक्षी खल्ववाङ्मुखः पतति स्वकर्म्मोक्षमस्तथा अंशिन्यप्रतिष्ठमंशद्वयं सृष्ट्यासमर्थमेवेति नित्यसम्बद्धचिदचिदात्मकस्य ब्रह्मणः प्रतिष्ठात्वमितितु परमार्थः। अवयविन्यवयवसम्बन्धवद् ब्रह्मणि चिदचितोः सम्बन्धस्तयोरानन्दमयत्वाद् आनन्दमयोऽसौ ब्रह्मैव, सम्बन्धश्च तादात्म्यम्, प्रत्येकांशे प्रत्येकानन्दस्य; मिथश्च तयोर्बलाख्यसम्बन्धः सम्मेलनसामर्थ्यम्, उभयपर्य्याप्तसत्ताविशेषरूपमावेदितमधस्तात्। अतएवास्मिन्नधिकारे 'आनन्दं ब्रह्मणो विद्वान्' इति षष्ठ्या भेदसम्बन्धरूपार्थोऽपि सङ्गच्छते। अत्र पुरुषविधत्वं पक्षिरूपत्वञ्च विरुद्धतया प्रतीयमानमपि दर्शितप्रकारेण परिहृतविरोधम्; तस्मादानन्दमयो ब्रह्मेति सिद्धम्। इहापि कल्पे, सूत्रस्थचकारो

हेत्वर्थः, अधिकरणसमाप्तिद्योतकञ्च । १।१।१९ ॥ (इत्यानन्दमयाधिकरणम् । )

नन्वानन्दमयस्य निराकारस्यास्तु ब्रह्मत्वं नतूमायाः साकारायाः, यत् खलु समन्वयाद्यधिकरणेषु प्रतिपादितं तदपि श्रुत्यन्तरतात्पर्य्यपर्य्यालोचनया न विचारसहमिति निर्णीयते केनोपनिषदुक्तया उमायाः केनापि साधनेन लब्धोत्कर्षाया जीवत्वमेव, यथा अन्तःपदघटितश्रुतावादित्यपुरुषस्य, इत्याक्षेपं दृष्टान्तासिद्धिप्रदर्शनमुखेन परिहरति ।—

( अन्तरधिकरणम्—८ )

अन्तस्तद्धर्म्मोपदेशात् । १।१।२० ॥

'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व्व एव सुवर्णः' ( छा० १।६।६ ) इति 'अन्तः' पदघटिता श्रुतिः सूत्रस्थेन अन्तःपदेन परामृश्यते, इयमेव श्रुतिर्विचारार्हवाक्यम्—अत्र हिरण्मयः पुरुषो देवतालक्षणजीवविशेषो वा ब्रह्म वा ? इति संशयः, द्वयोः कोट्योरुपस्थितेः, पुरुषशब्दस्य 'अथ खलु क्रतुमयः पुरुषः' इत्यत्र जीवे, 'तेनेदं पूर्णं पुरुषेण सर्व्वम्' इत्यत्र श्रुतौ ब्रह्मणि च वृत्तिदर्शनात् । एवं स्थिते कश्चिदाह—जीवपर एवायम्, निराकारस्य ब्रह्मणो हिरण्यश्मश्रुत्वाद्यसम्भवात् इति पूर्व्वपक्षः । अत्रोत्तरमनेन सूत्रेणाह, 'अन्तः' = अन्तःपदघटितायामुदाहृतश्रुतौ, अन्तः पदोत्तरलुप्तसप्तम्याः प्रतिपादकत्वपर्य्यवसितं विषयत्वमर्थः,तच्छ्रुतिप्रतिपाद्यः

पुरुष इति यावत्, ब्रह्मेति शेषः, अत्र हेतुः 'तद्धर्म्मोपदेशात्' इति। ब्रह्म येन धर्म्मेण प्रपाठकान्तरे उपदिश्यते, हिरण्मयः पुरुषोऽपि तेन धर्म्मेणोपदिश्यत इति। स च धर्मः सर्व्वपाप-शून्यत्वम्। 'य आत्मा अपहतपाप्मा' इति ( छा० ८।७।१ ) श्रुतौ अपहतपाप्मतया—सर्व्वपापशून्यत्वेन ब्रह्मोपदिश्यते, अत्र अन्तः-श्रुतावपि हिरण्मयः पुरुषस्तथा 'तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः' इत्येवंरूपेण सर्व्वपापशून्यतयोपदिश्यते। न च 'अशब्दमस्पर्शमरूपमव्ययम्' इति श्रुत्या ब्रह्मणो नीरूपत्वमुक्त-मत्र तु हिरण्मयपुरुषे रूपवत्त्वमिति वैधर्म्याभास्य ब्रह्मत्वमिति शङ्क्यम्, 'तच्छुभ्रं ज्योतिषां ज्योतिस्तद् यदात्मविदो विदुः' (मु० २।२।६ ) 'यदा पश्यः पश्यते रुक्मवर्णम्' इति ( मुण्डक० ३।१ ) अरूपस्यापि ब्रह्मणः सरूपत्वस्य, श्रवणाद् ब्रह्मणि रूपवत्त्वादिना सगुणत्वस्य नीरूपत्वादिना निर्गुणत्वस्य, जगत्कर्तृत्वस्य निष्क्रियत्व-स्य च, समन्वयाधिकरणभाष्ये सविशेषमुपपादितत्वाच्च। अन्यत्रापि, यत्रैवं ब्रह्मधर्म्मोपदेशः, तत्र तत्तच्छब्दप्रतिपाद्यं—ब्रह्मैव, यथा 'प्राणो ब्रह्म' 'खं ब्रह्म' 'को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्' इतिचैवमादिश्रुतिषु प्राणखाकाशशब्दाः ब्रह्मैव प्रतिपाद्यम्। 'विज्ञानमानन्दं ब्रह्म' इत्यादिनोपदिष्टस्य ब्रह्म-धर्म्मस्यानन्दरूपतायाः 'यद्वाव खं तदेव कं यदेव कं तदेव खम्' इति 'प्राणञ्च हास्मै तदाकाशञ्चोचुः' इति तत्रोपदेशात्। एवम् 'अथ लोकस्य का गतिराकाश इति होवाच, सर्व्वाणि वा इह भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति'.....

आकाशः परायणम्' इति ( छा० १।९।१ ) श्रुतावाकाशशब्देनापि, सर्व्वभूतोत्पत्तिलयस्थानपरायणत्वानां ब्रह्मधर्म्माणां तत्रोपदेशात् । न च 'आकाशाद्वायुर्वायोरग्निः' इत्यादिश्रौतक्रमेण भूताकाशस्यापि वाय्वाद्युत्पत्तिहेतुत्वात् कारणलयक्रमेण तस्य लयस्थानत्वात्, लीनावस्थया कार्य्याणामव्यक्तभावेनाश्रुततया तस्य परायणत्वाच, ते हि धर्म्माः, भूताकाशब्रह्मसाधारणाः, न तु ब्रह्ममात्रवृत्तय इति वाच्यम्, आकाशस्य भूततया स्वस्मिन् भूतसामान्यान्तर्गतस्य स्वस्योत्पत्तिलयस्थानत्वाभावात्, अतएव स्वभिन्नपरायणत्वस्याप्यसम्भवात् 'विज्ञानमानन्दं ब्रह्म रातेर्दातुः परायणम्' इति (बृ० ४।६।२८) श्रुत्युक्तपरायणत्वस्य 'नान्यः पन्था विद्यते अयनाय' इति श्रुतिव्याख्यातस्वरूपस्य ब्रह्ममात्रधर्म्मत्वाच । नन्वयमाकाशस्तल्लिङ्गादिति वक्ष्यमाणसूत्रस्य विषय इति चेन्न 'तद्धर्म्मोपदेशात्' 'तल्लिङ्गात्' इत्यनयोरेकार्थत्वे एतदधिकरणानन्तरसूत्रस्य 'अतएवाकाशः' इत्याकारकताया युक्तत्वात्, भिन्नार्थकत्वे च तद्धर्म्मोपदेशश्रुत्यैव ब्रह्मणि आकाशशब्दप्रतिपाद्यत्वसाधनस्यौचित्यात् ।

ननु तद्धर्म्मोपदेशतल्लिङ्गयोः कोऽर्थभेदः, येन 'आकाश इति होवाच' इत्यत्राकाशं, तद्धर्म्मोपदेशाद् ब्रह्मेति प्रतिपद्येमहि नतु तल्लिङ्गादिति चेत्, ब्रह्मधर्म्मसाक्षात्प्रतिपादकश्रुतिवाक्यस्य तद्धर्म्मोपदेशशब्देन परम्परया ब्रह्मप्रतिपादकश्रुतेश्च तल्लिङ्गशब्देन ग्रहणादर्थभेद इति ब्रूमः । 'अस्य लोकस्य का गतिराकाश इति होवाच' इत्यादिश्रुतौ 'यतो वा इमानि भूतानि

जायन्ते' इत्यादिश्रुत्युक्तब्रह्मधर्म्मस्य सर्व्वभूतोत्पत्तिहेतुत्वादेः साक्षात्प्रतिपादकवाक्यसत्त्वादेतल्लक्षणविषयत्वमेवास्य समीचीन-मिति प्रेक्षामहे।

श्रीचक्रपक्षे तु—ननु योगस्य शासनेऽपि तन्मात्रेणैवोपासनं बाह्योपचारादिसहकारेण वा ? इति जिज्ञासायामाह अन्तरिति सूत्रम्। तदर्थश्च—'तद्धर्म्मोपदेशात्' = तद्धर्म्माः—तेषां समयिनां धर्म्माः, तस्य 'उपदेशः' = उपदिश्यतेऽनेनेति उपदेशः शास्त्रम्—श्रुतिः तैत्तिरीयारण्यकम्, स्मृतिश्च शुभागमपञ्चकम्। यद्यपि वासिष्ठश्रुतिमध्ये तत्प्रवेशो युक्तस्तथापि शुभागमपञ्चकस्य ऋषिवाक्यतया स्मृतित्वेन, शिवशिवावचनस्य च श्रुतित्वेन गणयितव्यत्वात्। तस्मात् 'अन्तः' अन्तरेव उपासनमित्यर्थादाक्षिप्यते। न तु बाह्योपचाराद्यपेक्षेति तात्पर्य्यम्। ते च श्रुतिस्मृती प्रदर्शितपूर्व्वे। विशेषश्च वक्ष्यते इति दिक् १।१।२०॥

नन्वादित्यस्य संज्ञाजानित्वकुन्तीसमागमादिषु जीवधर्म्मेषु तत्र तत्र वर्णितेष्वपि कथं नाम तस्य जीवत्वमपलपनीयम्, सर्व्वपाप-शून्यत्वोक्तिस्तु 'सर्व्ववाद्यमयी घण्टा' इत्यादिवत् प्रशंसार्था भवितु-मर्हति, आदित्यदेवस्यादित्यपुरुषस्य च भेदकल्पने गौरवान्मानाभा-वाच्चेत्याशङ्कामपनेतुं सूत्रयति—

भेदव्यपदेशाच्चान्यः १।१।२१॥

'भेदव्यपदेशात्' आदित्यपुरुषस्य आदित्यदेवस्य च यो भेदोऽनैक्यं 'तद्व्यपदेशात्' = श्रुतौ तदाम्नानात् आदित्यनाम्नो

देवाज्जीवविशेषरूपात् 'अन्यः' भिन्नः, अन्तः श्रुतिप्रतिपाद्यपुरुष इति शेषः । सा च श्रुतिः—'य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः' इति ( बृ० ३।७।९ ) सूत्रे चकारः स्मृतिवचनसमुच्चयार्थोऽधिकरणसमाप्तिद्योतकश्च । स्मृतिवचनं यथा—'ध्येयः सदा सवितृमण्डलमध्यवर्त्ती नारायणः सरसिजा-सनसन्निविष्टः । केयूरवान् कनककुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः' इति । अत्र मकरकुण्डलवानिति पाठान्तरम् । 'नारायणः परं ब्रह्म' इति च स्मृतिवचनान्तरम् । तस्मादादित्य-मण्डलस्थो हिरण्मयपुरुषो नारायणः । न त्वसावादित्यनामा देवः, किन्तु परं ब्रह्म । आदित्यनामा देवस्तु सूर्य्यादिनामभिः प्रसिद्धः, स एव जीवविशेषः, संज्ञाजानित्वादिकं तस्यैव, नतु हिरण्मयपु-रुषस्य; हिरण्मयपुरुषस्तु ब्रह्मैवेति जीवदृष्टान्तासिद्ध्या उमाया जीवत्वशङ्का परास्तेति संक्षेपः ।

श्रीचक्रपक्षे तु, अत्र विशेषमाह—भेदेति सूत्रेण । 'चकारस्तु-कारार्थः, किन्तु 'भेदव्यपदेशात्' = तैत्तिरीयारण्यकश्रुतौ—'नैतमृषिं विदित्वा नगरं प्रविशेत्' इति निषेधः, 'यदि प्रविशेन्मिथौ चरित्वा प्रविशेत्' इति तद्व्यावृत्तिः—इत्येवं भेदेन व्यपदेशात्; व्यपदेशात =अनुशासनात् 'अन्यः'=भिन्नः अधिकारी अस्तीति शेषः, यद्वा 'अन्यः' अधिकारिभेदात् प्रागुक्तप्रकारभिन्नः प्रकारोऽस्तीत्यर्थः । १।१।२१ ॥

ननु भवत्वादित्यस्थपुरुषस्य ब्रह्मत्वम्, पक्षिवद् वा विमान-

चारिदेववद् वा, भूताकाशे दृश्यमानाया उमायास्तु जीवत्वं कथं वार्य्यते ? न च उक्तमेव स्वाप्ययाधिकरणे दहराकाशे साकारब्रह्मण उमाया उपासनं श्रौतमिति वाच्यम्, यतः केनोपनिषदनुशिष्टाया उमाया ब्रह्मत्वसिद्धौ सतीयमितिशब्दस्य वाक्यरूपत्वमियं सती-त्यर्थकत्वञ्च—निःसंशयं विज्ञायेत, उमाया जीवत्वे नैवं स्यात्; यथा 'परं ज्योतिरुपसंपद्य' इति "अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुरशरीराण्येतानि, तद्यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते" ( छा० ८।१२ ) इत्यत्र यथा परज्योतिरुपसंपद्येति सौरतेजोविशेषप्राप्तिं गमयति, तद्वत् आदित्यपुरुषज्योतिःप्राप्तिमेव गमयिष्यतीत्याशङ्कायां सूत्रयति—

( आकाशाधिकरणम्—९ )

## आकाशस्तल्लिङ्गात् । १।१।२२ ॥

'आकाशः'='तस्मिन्नेवाकाशे स्त्रियमाजगाम' ( के० ३।१२ ) इति श्रुतिस्थाकाशशब्दप्रतिपाद्यः, ब्रह्मेति शेषः, अत्र हेतुः 'तल्लिङ्गात्' =तत्पदघटिताल्लिङ्गात्—तत्—तच्छब्दो लिङ्गमिति कर्म्मधारयः। अत्र तत्पदेनादिभूतेन एवकारस्यापि ग्रहणम्। तथाच 'तस्मिन्नेव' इति पदद्वयस्थित्या तत्राकाशशब्दो ब्रह्मपर इति गम्यते इत्याशयः। यद्वा 'तल्लिङ्गात्'=तस्य ब्रह्मणो लिङ्गात् ज्ञापकात्। अत्रापि तदेव पदद्वयं ज्ञापकम्। तथाहि यदि स आकाशो भूताकाशः स्यात् 'तस्मिन्नेव' इति नोपपद्येत। पूर्व्वं भूताकाशस्यानिर्द्देशेन तत्पद-प्रयोगस्यानौचित्यात्। भूताकाशस्यैकत्वेन तत्र एवकारोपन्यास-

स्यायुक्तत्वाच्च। मम पक्षे तु प्रक्रान्तं वस्तुतो ब्रह्म—यक्षपदेन यद् गृहीतम्, तत्पदेन तस्य परामर्शात् एवकारेण च प्रसिद्धतया प्राप्तस्य भूताकाशस्य व्यावृत्तेः नैकस्यापि पदस्यायुक्तोपन्यासत्वं वैफल्यं वा। न चाकाशपदेन यक्षरूपब्रह्मणोऽन्तर्धानस्थानस्य ग्रहणमिति वाच्यम्, तत्राकाशपदस्य वृत्तेरप्रसिद्धत्वात्, ब्रह्मणि तु आकाशतद्वाचकशब्दानामसकृत् श्रौतप्रयोगात्। अक्षरार्थस्तु—'तस्मिन्नेव पूर्व्वप्रकान्ते तिरोहिते यक्षात्मके एव 'आकाशे' ब्रह्मणि स्त्रियम् आजगाम—आससाद। अन्तःस्थितामग्नौ दारुणि मन्थोद्भूतामग्निशिखामिवेति भावः।' तेनेन्द्रस्यान्तर्बहिश्च तद्रूपस्फुरणं क्रमेण जातमिति गम्यते, ब्रह्माकाशस्य अन्तराकाशरूपत्वात्, आजगामेति क्रियापदस्वरसाच्च। आगतिरासत्तिरेकोऽर्थः, सत्त्वबहुलानां देवानामन्तरासत्तिः प्रधानं, बहिरासत्तिश्च गौणी, तदुभयस्य क्रमिकत्वञ्च राजयात्रान्यायेन लभ्यते। अन्यथा ददर्शेति क्रियापदं स्यात्। न नु दर्शनेऽप्यस्ति अन्तर्बहिर्भावः, सत्यमस्ति, क्रमस्तु विपरीतः—पूर्व्वं बहिरिन्द्रियसन्निकर्षः, उत्तरन्तु मानसः, अत्र तु मानसासत्तिः पूर्व्वा, परा च सान्निध्यलाभरूपा बहिरासत्तिः। अत्र च 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' (कठ० १।२।२२) इति श्रुतिरनुग्राहिका भवति। सर्व्वेश्वरम्मन्यस्तावदिन्द्रोऽपि परिचितमहाशक्तिनो यक्षस्य स्वरूपज्ञानाय स्त्रियमिमां पृष्टवांस्तद्वचनेन च क्षणाद् ब्रह्मज्ञोऽभवत्। न हि बहिर्देशस्थस्य ब्रह्मज्ञस्यापि पुरुषस्य सकृद्वचनेन ब्रह्मज्ञानं भवतीति दर्शितं छान्दोग्यभूत्योद्दालकश्वेत-

केतुवृत्तान्तेन। अत्र च 'तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् स ह्येनन्नेदिष्ठं पस्पर्श' इति प्रतीकेन सद्यो ब्रह्मज्ञत्वमिन्द्रस्य दर्शितम्। 'एनन्नेदिष्ठं पस्पर्श' इत्यनेन साकारब्रह्मणा उमाया आसत्तिरुक्ता, अव्यवहितसम्बन्धत्वेन स्पर्शासत्त्योरैक्यात्। अव्यवहितत्वस्य सापेक्षत्वप्रदर्शनेन चार्थविशेषपरत्वं तु श्रुत्यैव सूचितम् अग्न्यादीनां त्रयाणां नेदिष्ठस्पर्शो देवतान्तरापेक्षया, इन्द्रस्य तु सर्वापेक्षयेति स्पष्टमेव श्रुत्या। 'न च प्रथमो विदाञ्चकार' इत्यनेनोत्तरवाक्येन तद्विवरणादयं स्पर्शो आसत्तिरूपः किन्तु वेदनरूप इति वाच्यम्, 'नेदिष्ठम्' इत्यनेन समीपतरत्वबोधनात्—स्पर्शस्यासत्तिरूपताया युक्तत्वात्। उत्तरवाक्ये 'स ह्येनत्' इत्येषां पदानामनुवादत्वापत्तेश्च। अस्मन्मते च 'हि'=यतः स इन्द्र एनत् ब्रह्म नेदिष्ठं=अन्यापेक्षया निकटतरं, पस्पर्श आससाद, अतः स एनत् ब्रह्म प्रथमं विदाञ्चकार इति हि यतः, अतोऽन्यान् देवान् अत्यक्रामदित्यर्थः। पृथगर्थकक्रियान्वयितया न तेषामनुवादरूपता। यक्षरूपब्रह्मणः स्पर्शस्तु प्रथमं नेन्द्रस्य, किन्त्वग्नेः, उमासत्तिस्तु इन्द्रस्यैव प्रथमम्। तस्मात् 'एनत्' इति उमाब्रह्मपरम्, तच्च साकारम्, निराकारश्चाकाशपदार्थः। यदि च यस्मिन्नेवाकाशे यक्षमाविरभूत् तिरोदधे च तदेवाकाशमत्र 'तस्मिन्नेव' इत्यादिना गृह्यते, तदापि यक्षस्याविर्भावतिरोभावाभ्यामुमाब्रह्मणश्चाविर्भावेण च ब्रह्मलिङ्गेन आकाशोऽत्र ब्रह्म, साकारब्रह्मणो निराकाराश्रितत्वादिति सूत्रार्थो बोध्यः। नन्वत्र यदीन्द्रस्य ब्रह्मज्ञानं प्रथमम्, छान्दोग्याष्टमाध्यायस्थाख्यायिका-

यामिन्द्रस्य प्रजापतिसत्कारात् ब्रह्मज्ञानलाभवर्णनं कथमुपपद्यते इति चेन्न, मन्वन्तरभेदेनेन्द्रभेदस्य शास्त्रसिद्धतया उपनिषद्द्वयोक्तयोरिन्द्रयोर्भेदात्। तल्लिङ्गादित्येकवचनन्तु लिङ्गत्वेनानुगमम- भिप्रेत्य प्रयुक्तम्। तल्लिङ्गादित्यनेन तदनुमानमाहित्यर्थोऽपि गम्यते। अनुमानपदवाच्यञ्च वेदातिरिक्तं सर्व्वं धर्म्मप्रतिपादकशास्त्रं, तेन वेदस्यानुमानात्। एवञ्चागमवचनमप्यत्र संगृहीतं भवति। तद् यथा—

पुरा पुरन्दरमुखाः स्वेश्वरत्वाभिमानिनः।
प्राहुः किमीश्वरोऽस्त्यस्मद्व्यतिरिक्तः सुरानिति॥
अथ दुर्गा जगन्माता नित्या चैतन्यरूपिणी।
एतेषां धर्म्मसेतूनामिन्द्रादीनां नियन्त्रणम्॥
करिष्यामीति निश्चित्य ज्योतीरूपं दधात्यलम्।
तेषामाविरभूद्दुर्गा जगद्धात्री जगन्मयी॥
कोटिसूर्य्यप्रतीकाशं चन्द्रकोटिसमप्रभम्।
ज्वलन्तं पर्व्वतमिव सर्व्वलोकभयङ्करम्॥
तद् ददृशुः सुराः सर्व्वे भयमापुर्महौजसः।
किमेतन्न विनिश्चेतुं शक्तास्तेऽभवन् सुराः॥
वायुमाहुः समाहूय किमेतत् परमाद्भुतम्।
विजानीहि भवद् धीर मातरिश्वन् दिशः पते॥
ततो वायुर्द्रुतं तत्र गतस्तेजोऽन्तिकं ततः।
तमन्तिकमुपायातं प्राह तेजोमयी ततः॥
बलवन् कस्त्वमायातो वीर्य्यं किञ्चास्ति वा त्वयि।

आदातुं शक्यते सर्व्वं पृथिवीतलसम्भवम् ॥
इति प्रत्युक्तवान् वायुः क्षणं तत्रैव तिष्ठति ।
आदत्स्वैतत् तृणमिति वायवे निदधे तृणम् ॥
वायुः सर्व्वप्रयत्नेन नादातुं तत् क्षमोऽभवत् ।
ततो देवाः प्रोचुरग्निं भीता उद्विग्नमानसाः ।
अग्ने एतद् विजानीहि किमेतत् कर्म्म चाद्भुतम् ॥
इत्युक्तो देवतावृन्दैरग्निस्तेजोऽन्तिकं गतः ।
कस्त्वं का वास्ति ते शक्तिस्तेजो वागित्युवाच तम् ॥
स प्रोक्तवानग्निरस्मि सर्व्वदाहकशक्तिकः ।
अमरो जातवेदा वा तेजः पुनरुवाच तम् ॥
दहैतत् तृणमत्यल्पमिति तस्मै तृणं ददौ ।
अग्निः सर्व्वप्रयत्नेन दग्धुं नैतत् क्षमोऽभवत् ॥
ततो निववृते वह्निर्भूत्वा सोऽपत्रपान्वितः ।
एकत्रस्थाः सुराः सर्व्वे मन्त्रयामासुरुत्तमम् ॥
इयमेवेश्वरी नूनं स्तोष्यामो नेश्वरा वयम् ।
इति निश्चित्य सुधियस्तुष्टुवुः परमेश्वरीम् ॥
प्राहुर्देवगणाः सर्व्वे त्वमीशा नेश्वरा वयम् ।
ईश्वरत्वाभिमानेन यदस्माकं सुदुष्कृतम् ॥
क्षन्तुमर्हसि तत् सर्व्वं कृपया जगदम्बिके ! ।
तव रूपं सुगोप्यं यन्मङ्गलं सर्व्वमङ्गलम् ॥
तद् द्रष्टुं वयमिच्छामो देहि दर्शनमुत्तमम् ।
इत्युक्तानां सुबुद्धीनामाविरासीच्चिदम्बरे ॥

मृगेन्द्रोपरि सुस्मेरा सर्व्वालङ्कारभूषिता ।
चतुर्भुजा महादेवी रक्ताम्बरधरा शुभा ॥

इत्यादि तन्त्रवचने शिवाम्बरे=शिवस्वरूपे अम्बरे इत्यभिधानात् सिद्धमाकाशस्य ब्रह्मत्वम् । यदि वा शिवा इति विच्छिद्यते तदाप्यम्बरमिदं ब्रह्मैव, न तावद्ब्रह्म ब्रह्मणः प्रतिष्ठानं भवति स्वे महिम्नीत्युक्तत्वात् ।

ननु 'य आकाशे तिष्ठन् आकाशादन्तरः' इत्यादि ( बृ० ३।७।१२ ) श्रुतौ भूताकाशस्यापि ब्रह्मणः प्रतिष्ठानत्वमाम्नायते, तत् कथमुच्यते न तावद्ब्रह्म ब्रह्मणः प्रतिष्ठानं भवतीति चेन्न, स्थितिप्रतिष्ठयोर्भेदात् 'यः पृथिव्यां तिष्ठन्' इत्यारभ्य सर्व्वत्र ब्रह्मणः स्थितिं निवेदयन्ती श्रुतिः सर्व्वव्यापित्वमेव तस्याह, यदधीना स्थितिस्तस्यैव प्रतिष्ठानत्वमुच्यते, तत्तन्त्रा स्थितिश्च प्रतिष्ठा आविर्भावोऽपि प्रतिष्ठाविशेष एव, न तु स्थितिसामान्यम् ; तस्मात् स्वाश्रिताविर्भावे ब्रह्मणि अन्याश्रिताविर्भावत्वप्रदर्शनस्य सर्व्वज्ञायाः श्रुतेरसम्भवात् । यच्च वाय्वादीनां परज्योतिरुपसम्पत्तिदृष्टान्तः प्रदर्शितस्तेनोमाब्रह्मज्योतिरुपसम्पत्तिरेव समर्थ्यते, वाय्वादेः सौरतेजोविशेषप्राप्त्या या स्वरूपाभिनिष्पत्तिः सा वैशाखमासादेव भवति, वैशाखश्च सौरो मेषराशिसंक्रमाद् भवति तदा मेषस्य पूर्वदिगधिकारितया तदुदीयमानरवेः प्राच्यरश्मिप्राप्तिरेव वाय्वादीनां परज्योतिरुपसम्पत्तिः, तच्च रक्तं ज्योतिरुमाया एवेति प्रतिपादितपूर्वत्वात् । 'नच एवमेवैषसम्प्रसादः' इति दार्ष्टान्तिके

एष इति सर्वज्ञेन प्रजापतिना प्रत्यक्षीक्रियमाण उत्तमोपासक एव। अतः स 'उत्तमः पुरुषः' इति व्यपदिष्टः।

लक्षणनिरूपणानन्तरमेतावता ग्रन्थेन ब्रह्मणः स्वरूपं सप्रमाणं निरूपितमिति ध्येयम्। 'तस्मिन्नेवाकाशे' इत्यत्र ब्रह्मधर्म्मस्य सर्व्वपापशून्यत्वजगत्कर्तृत्वादेरुपदेशाभावात् पूर्व्वसूत्रोक्तहेतोरविषयतया तल्लिङ्गादिति पृथगुपन्यासः, 'यदतः परो दिवो ज्योतिर्दीप्यते' (छा० ३।१३।७) इत्यादिश्रुतौ ज्योतिःपदस्य ब्रह्मपरत्वं तल्लिङ्गादेव, तत्र लिङ्गन्तु द्युसम्बन्धः, त्रिपादस्यामृतं दिवि इति पूर्व्वखण्डे द्युसम्बन्धिनि ब्रह्मत्वावगमात् न तदर्थं पृथक् सूत्रमिति ध्येयम्।

श्रीचक्रपक्षे तु—प्रागुक्तप्रकारभिन्नः प्रकारोऽस्तीति सामान्यतयोक्तं तद्विशेषमुपदर्शयितुम् आकाश इत्यादिसूत्राण्याह। तत्र प्रथमस्यार्थः—'आकाशः'—वियच्चक्रं सुवर्णादिपीठनिर्म्मितं बहिराकाशावच्छेदकत्वादाकाश इति व्यपदिश्यमानं श्रीचक्रं बहिराचारेण पूज्यमिति शेषः। अत्र हेतुः 'तल्लिङ्गात्' 'युवा सुवासा' इति तैत्तिरीयब्राह्मणोक्तबहिराचारविशेषलक्षणलिङ्गात् यदि केवलमान्तरोपासनैव सर्व्वेषां समयिनामविशेषेण स्यात्, तर्हि सुवासस्त्वोपदेशो न स्यात् यौवनञ्च नापेक्ष्येत। तल्लिङ्गादिति तस्मिन् शास्त्रे यल्लिङ्गं ऐहिकार्थसाधनादिति वैदिका ब्रह्मवादिन इति च द्वयं लिङ्गत्वेनानुगतं ज्ञापकद्वयम्, तस्मादपि आकाशशब्दवाच्यमुपदर्शितं बहिः श्रीचक्रं पूज्यं भवति। अस्यायमाशयः—यश्चैहिकार्थसाधनाभिलाषरहितो वैदिकाचाररतः साधकः स्यात् असमर्थश्चान्तरसाधने, बाह्योपचारैरपि वियच्चक्रं पूजयेत्।

अब्राह्मजातीनां बाह्यपूजानिषेधस्तु उत्तमाधिकारिणां योगिनां बाह्यपूजाया अकरणे दोषाभावप्रदर्शनार्थो योगविघ्न-व्यासङ्गनिराकरणार्थो मध्यमन्दाधिकारिणां यथाशक्त्यान्तरपूजापूर्व्वकबाह्यपूजार्थश्चेति रहस्यम् । १।१।२२ ॥

एवं ब्रह्मणः साकारत्वे निराकारत्वे च व्यवस्थापिते, फलावच्छेदतो निरूपणमभिप्रेत्य तदुभयोपासनमुपदिदिक्षुर्भगवान् बादरायणः प्राणायामस्य सर्व्वोपासनद्वारतया प्राणसम्बद्धं प्रक्रान्तोमोपासनाविशेषसाधनदुर्गामन्त्रगर्भश्रुतिविचारपरं सूत्रं प्रथममाह—

( प्राणाधिकरणम्–१० )

अत एव प्राणः । १।१।२३ ॥

'प्राणः' = प्राणश्रुतिस्था देवता, 'द्वया ह प्राजापत्या' (बृ० १।३) इत्यादि ब्राह्मणे, 'ते वाचमूचुस्त्वं न उद्गाय' इति क्रमेण वागादीनामसुरकृत पाप्मवेधे—'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति' इत्युपक्रम्य 'सा वा एषा देवता दूर्नाम दूरं ह्यस्या मृत्युर्दूरं ह वा अस्मान् मृत्युर्भवति य एवं वेद' इति श्रुतिः प्राणश्रुतिः, ( बृ० १।३।१–९ ) तदधिष्ठिता देवता—'सा वा एषा देवता' इत्यस्यार्थः, अन्तस्तद्धर्म्मोपदेशादित्यत्र अन्तःपदघटितश्रुतिस्थहिरण्मयपुरुषवत् औपचारिकः प्रयोगः, प्रहणवाक्ये लक्षणाया अदोषत्वात्—इन्द्रियाधिवा मुख्यः प्राणो वा प्राणोपाधिको जीवविशेषो वा ब्रह्म वेति संशयः । प्राणशब्दादेषामुपस्थितेः, 'दशेमे पुरुषे प्राणाः'

इति ( बृ० ३।९।४ ) 'तान् वरिष्ठः प्राण उवाच' इति ( प्रश्न० २ ) 'प्राणो ह पिता प्राणो माता' ( छा० ७।१५ ) 'प्राणबन्धनं हि सोम्य मनः' ( छा० ६।८।२ ) इति च श्रुतेः। तत्र नेन्द्रियं 'सा वा एषा देवता एतासां पाप्मानं मृत्युमपहत्य यत्रासां दिशामन्तस्तद् गमयाञ्चकार' इत्युत्तरवाक्ये 'एतासां देवतानाम्' इत्यनेन वागादीन्द्रियाणां पृथगेव प्रतीतेः। तस्मात् मुख्यः प्राणः इति प्राप्तम् 'आसन्यं प्राणमूचुः' इत्यत्र आसन्यपदस्यास्यभवार्थकतया 'सा वा एषा देवता' इति तदेतत्पदाभ्यां तस्यैव ग्रहणात्। यदि वा त्वं न उद्गायेत्यत्र 'तथेति' इति प्रतिवचनमचेतनस्य मुख्यप्राणस्य नोपपद्यत इत्युच्यते तदा प्राणाभिमानी जीवविशेषो भविष्यति ; न तु ब्रह्म, तस्याप्रक्रान्ततया 'सा वा एषा' इत्यत्र तत्पदैतत्पदाभ्यां तस्य परामर्शायोगात्। एवं प्राप्ते उच्यते ब्रह्मैवेति तत्र हेतुः 'अतएव' आभ्यामेव= पञ्चमीद्विवचने तसिः—स च इदम्=इमे, ताभ्याम्, त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते इति वार्त्तिकात्, सः= तद्धर्मोपदेशः, इदं तल्लिङ्गम्। स इति व्यवहितस्य परामर्शकम्, इदमिति सन्निकृष्टस्य। एवकार एकमात्रहेतुव्यवच्छेदाय। सिद्धान्तस्य दार्ढ्यं हेत्वाधिक्येन सूचितम्। 'दूरं ह्यस्या मृत्युः' अस्या इति पञ्चम्या रूपं 'दूरं ह वा अस्मान् मृत्युः' इत्युत्तरत्र पञ्चमीश्रुतेः। पञ्चम्या दूरमित्यनेनान्वयात् अस्याः समीपे मृत्योरागमनं नास्तीत्यर्थलाभेन विमृत्युत्वमस्या देवताया उपदिष्टं तच्च ब्रह्मधर्म्मः। 'विजरो विमृत्युः' इति श्रुतेः, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति

श्रुतेश्च। न च 'विजरो विमृत्युः' इत्यात्मस्वरूप आत्मा च चिन्मात्रम्, ब्रह्म च चिदचिदुभयरूपमिति विमृत्युत्वश्रुतिर्न ब्रह्मपरेति शङ्कनीयम्, आत्मनो विमृत्युत्वाद्युपदेशस्य ब्रह्मस्वरूपज्ञापनार्थत्वात्, आत्मस्वरूपज्ञानं विना ब्रह्मस्वरूपज्ञानासम्भवात्। आत्मनो विमृत्युत्वे ब्रह्मणोऽपि विमृत्युत्वात् निर्गुणत्ववत्। तयोरुभयरतात्। ब्रह्मलिङ्गञ्च ज्ञातुरमृत्युत्वं—'तमेव विदित्वातिमृत्युमेति' इति श्रुतेः, प्राणदेवतायामपि तल्लिङ्गमस्ति 'दूरं ह वा अस्मान् मृत्युर्भवति य एवं वेद' इति। यो हि एतत्प्राणदेवतास्वरूपं वेद मृत्युस्तं नोपसर्पतीत्यर्थाद् अमृतत्वप्राप्तेः। यदुक्तमासन्यप्राणस्य तदेतत्पदाभ्यां ग्रहणमिति तन्न, तथासति तस्य विमृत्युत्वानुशासनं नोपपद्येत, तस्य जन्यत्वेन मृत्युग्रस्तत्वात्। सुवर्णमयहारं पश्यतः तदेतद् विशुद्धसुवर्णमेवेतिवचनवत् 'एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि च' इत्यादिश्रुतेर्ब्रह्मप्रकृतिकासन्यप्राणप्रक्रमेऽपि' तदेतद्ब्रह्मैवेत्यर्थिकायाः 'सा वा एषा देवता' इति श्रुतेरस्मत्सिद्धान्तबाधकत्वाभावाच्च। 'यः प्राणे तिष्ठन् प्राणस्यान्तरो यं प्राणो न वेद यस्य प्राणः शरीरं प्राणमन्तरो यमयति एष आत्मा अन्तर्याम्यमृतः' इति श्रुतिरप्यत्रानुग्राहिका भवति।

ननु मृत्युरयं न विनाशः, किन्तु आसङ्गलक्षणः पाप्मा—'पाप्मानं मृत्युमपहत्य' इत्युत्तरत्र श्रवणात्। ब्रह्मणो विमृत्युत्वञ्च अविनाशित्वं सनातनत्वमतो ब्रह्मधर्म्मस्य प्राणदेवतायामनुपदेशात् तज्ज्ञातुरपि तथाविधपाप्मराहित्येन च ब्रह्मज्ञातुरिव न विमृत्युत्वमिति तल्लिङ्गाभावाच्च कथं प्राणदेवताया ब्रह्मत्वमिति

चेत्, न, उत्तरत्र पाप्मानं मृत्युमिति श्रवणादेव 'दूरं ह्यस्या मृत्युर्दूरं ह वा अस्मान् मृत्युः' इति पूर्व्वस्थमृत्युशब्दयोः प्रसिद्धार्थकताया युक्तत्वात्, तथाविधार्थकमृत्युशब्दस्य प्रक्रान्तत्वे पश्चात्तद्विवरणायोगात्, आसङ्गलक्षणपाप्मराहित्यस्य पाप्मसामान्यराहित्यस्य वा 'असङ्गो ह्ययं पूरुषः' इति 'अपहतपाप्मा' इत्यादिश्रुतेश्च ब्रह्मण एव धर्म्मत्वाच्च। यथा मूकोऽहमन्धोऽहमित्यादिप्रतीतेर्वागादीनामसङ्गः प्रतीयते तथा जीवाम्यहं म्रियेऽहमित्यादिप्रतीतेः प्राणस्याप्यासङ्गसत्त्वेन तदपहनने सामर्थ्यविरहात्। अथ विषये ममत्वाभिमान एवासङ्ग इति चेत्, तत्रापि प्राणमूलकत्वध्रौव्येण तदपहनने प्राणस्यासामर्थ्यात्। अथ विषयभोगसिद्धये तत्तदिन्द्रियस्यानियन्त्रितप्रकृतिरेवासङ्ग इति चेत् तदपहन्ता न मुख्यः प्राणस्तदभिमानी वा जीवः, अगम्यागमनादिचेष्टयोक्तप्राणस्यापि तथाविधासङ्गस्य शास्त्रप्रमाणकत्वात्, अपहन्ता तु परमात्मैव 'एष ह्येव साधु कर्म्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते' ( कौ० ब्रा० ३।९ ) इति श्रुतेः, 'सर्व्वस्य वशी सर्व्वस्येशान' इति च (बृ० ४।४)। 'अपहतपाप्मा' इति श्रुतिरिममप्यर्थं ग्राहयति। तस्मात् पाप्मापहन्तृत्वमपि ब्रह्मधर्म्मस्तस्य चोपदेशः प्राणदेवतायामिति तज्ज्ञानस्यापि पाप्महन्तृत्वञ्च न तस्य लिङ्गं भवति 'ज्ञात्वा देवं सर्व्वपाशापहानिः' ( श्वे० १ ) इति मन्त्रवर्णात्। अत्र पाशशब्देन पापस्यापि ग्रहणं बन्धनहेतुत्वात्, तथाच सर्व्वाभिरेव दिग्भिः सा देवता ब्रह्मैवेति सिद्धम्। तस्यैव ब्रह्मणः साकारोपासनमादर्शयितुमाह, दूर्नामेति। दूरिति

प्रथमान्तो दूशब्दः, षष्ठस्वरान्तस्तवर्गतृतीयादिः, दूनाम्नीत्यर्थः, हिमालयो नामेतिवत्। दूनाम्नी देवता च जगद्धात्री दुर्गा तद्बीजवर्णत्वात्। 'अथ दुर्गामनुं वक्ष्ये' इत्युपक्रम्य 'शान्तबीजं समुद्धृत्य वामकर्णविभूषितम्' इति विश्वसारतन्त्रवचनात्' न च नेदं बीजरूपं नादबिन्दुरहितत्वादिति वाच्यम्. 'ऐ ऐ इति भयार्त्तेन दृष्ट्वा व्याघ्रादिकं वने। बिन्दुहीनमपीत्युक्तं वाञ्छितं प्रददाति वै॥' इत्यादि देवीभागवततृतीयस्कन्धप्रमाणेन बिन्दुरहितस्य द्वादशस्वरमात्रस्य वाग्भवबीजभाववदस्यापि तथात्वात्, प्रधानेन व्यपदेशा भवन्तीति न्यायात्। 'दं दुर्गावाचकं देवि! ऊकारो रक्षणार्थकः। विश्वमाता च नादार्थः कुर्व्वर्थो बिन्दुरूपकः॥' इति वरदा-तन्त्रषष्ठपटलीयवचनदर्शितस्य विश्वमातर्दुर्गे रक्षां कुर्विति तद्बीजार्थस्य तद्ब्राह्मण एवाभ्यारोहजपमन्त्रेण सूचितत्वाच्च। तथाहि 'असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतं गमय अमृतं मा कुरु' इति श्रूयते, मामृतं कुर्विति समुदितार्थः, अत्र लोट्प्रत्ययोपस्थापितयुष्मत्पदार्थप्राणदेवताया विश्वमातृत्वं 'अत्ता विश्वस्य' इति (प्र० २।११) श्रुत्यन्तरप्रसिद्धम्। दुर्गारूपत्वञ्च तस्या दूशब्दादत्रैव सूचितम्। रक्षणं कुर्व्वित्यस्य मामृतं कुर्व्वित्यर्थः स्फुट एव, न ह्यमृतत्वमन्तरेण काचिद्रक्षास्ति भावान्तरस्य अपचयस्वभावत्वात्। या हि जगद्धात्री दुर्गा सैव केनोपनिषदुक्ता उमा। दुर्गाकवचे 'उमा देवी शिरः पातु' इत्यारभ्य 'रक्ष मां सर्व्वगात्रेषु दुर्गे! देवि! नमोऽस्तु ते' इति

कुब्जिकातन्त्रवचनात्, आकाशस्तल्लिङ्गादिति सूत्रभाष्ये तथा प्रतिपादितत्वाच्च ।

नन्वत्र दूर्नामेत्यनेन रेफान्तः षष्ठस्वरमध्यस्तवर्गतृतीयादिवर्ण एव नामतया निर्दिष्टो दूरमिति विवृत्या तस्यैवाधिकसम्बन्धात्, न तु षष्ठस्वरान्त इति चेन्न, हृदयमित्यादौ 'हृ इत्येकमक्षरम्' इत्यादिरूपेण एकैकाक्षरसम्बन्धस्य तद्घटितवाक्यार्थसूचकतया प्रतिपादितत्वेनात्र तथैव दूकाकारस्य तद्घटितवाक्यार्थवर्णने बाधकाभावात्, रेफान्तशब्दस्य प्राणदेवतायां प्रसिद्धिविरहेण नामेत्यस्यानुपयुक्तत्वात्, दूप्रधानबीजाभ्यारोहजपमन्त्रये रेकार्थस्य दर्शितत्वाच्च । एतेन ब्राह्मणेन दुर्गानाममन्त्रोऽपि सूचितः, तथाहि दूर्नामेति पञ्चमस्वरमध्यो रेफान्तस्तवर्गतृतीयादिः शब्दः, तस्य प्रसिद्धिश्च 'दुर्गां देवीं शरणमहं प्रपद्ये' इति श्रुतौ 'जातवेदसे सुनवाम' इत्यादि दुर्गासावित्रीमन्त्रे च प्रसिद्धेः, 'दिशामन्तस्तद्गमयाञ्चकार' इत्यत्र यद् 'गमयाञ्चकार' इति क्रियापदं 'गा' इति तत्प्रतिरूपम्, अन्तर्भूतण्यर्थगमधातोः 'अन्यत्रापि दृश्यते' इति वार्त्तिकाद् डप्रत्ययेन सिद्धम्, देवताशब्दस्य स्त्रीत्वाच्च आबन्तत्वम्, स्मृतिरपि भवति,—'प्रभावे यः स्मरेन्नित्यं दुर्गादुर्गाक्षरद्वयम् । आपदस्तस्य नश्यन्ति तमः सूर्य्योदये यथा ॥' इति तस्मादासन्यप्राणावलम्बनेन जगद्धात्रीमूर्त्त्यवच्छिन्नब्रह्मोपासनं—दुर्गानामाश्रितमुपासनं निराकारं वा कर्त्तव्यमिति आख्यायिकातिप्रो विधिः । अस्य च यथाधिकारमुपयोगः । आसन्यप्राणस्य ब्रह्मभावानुगमप्रदर्शनन्तु प्राण-

यामस्य सर्व्वविधोपासनोपयोगित्वसूचनाय । 'सा वा एषा देवता एतासां देवतानाम्' इति निगदाशयस्तु दुर्गारूपब्रह्मोपासनसिद्धौ दुर्गैवोपासकस्य वागादीनां शुद्धिं विदधाति । उपासनासिद्धो हि तस्या मन्त्रं नामैव वोच्चारयति नाशुद्धं वचनान्तरम्, तच्छरीरदिव्यसौरभमेव तस्य सदा घ्राणेन्द्रियगोचरो भवति न तु तत्प्रतिकूलो गन्धः । तद्रूपमेव सदा पश्यति नान्यत् । तदीयमन्त्रं नाम वा सदा शृणोति । एवं हि उपासनरतस्य सा वागादीन् पाप्मभ्यो मोचयति तदुपासनविधुरेषु देशेषु जनेषु च तदीयेनैव तमसा वागाद्यशुद्धिः स्थापितेत्यर्थवादो हेतुनिगदात्मकः, निषेधश्च व्यक्त एव 'नान्त्यमियात् न जनमियात् इति' निराकारोपासनपक्षे चिदचिदात्मकं ब्रह्मैव वागादिविशुद्ध्यै भवति तस्य सर्व्वेशत्वात् । एतेनैव 'कतमा सा देवता प्राण इति होवाच' इति श्रुतिस्थः प्राणो ब्रह्म इत्यपि प्रतिपादितम्, तत्रापि तद्धर्म्मोपदेशतल्लिङ्गयोर्हेत्वोः सत्त्वात् । 'यत् प्रयान्त्यभिसंविशन्ति' इति श्रुत्या सर्वेषां भूतानां संवेशस्थानत्वं ब्रह्मधर्म्मतया प्रतिपादितं 'सर्व्वाणि वा इमानि भूतानि प्राणमेवाभिसंविशन्ति' इति श्रुत्या च तदेव प्राणधर्म्मत्वेनोपदिष्टम्, 'प्राणमभ्युज्जिहते' इत्यत्रच ब्रह्मलिङ्गम्, न चात्रापि 'यतो वा इमानि भूतानि जायन्ते' इत्युक्तब्रह्मधर्म्म एवोपदिष्ट इति वाच्यम्—जननापादानत्वलक्षण प्रकृतित्वस्य श्रुत्युक्तब्रह्मधर्म्मत्वस्य तया श्रुत्या प्राणेऽनुपदेशात् । ब्रह्मलिङ्गन्तु भवत्येव अप्रकृतिरपि वह्नेरिव धूमः, सत्ताया इव द्रव्यत्वम् ।

श्रीचक्रपक्षे तु—बाह्यपूजाधारान्तरमाह—अतएव प्राण इति ।

'अत एव' प्रोक्तात् लिङ्गात् श्रौतस्मार्त्तज्ञापकादेव आन्तरमात्रसाध-नाशक्तानमधिकारिविशेषाणां पक्षे 'प्राणः' श्रीगुर्व्वादिः, आदिपदेन कुमारीसधवयोः संग्रहः, 'अङ्गनासु विशिष्यते' इति प्रपञ्चसारोक्तेः 'प्राणस्य श्रीगुर्व्वादिस्वरूपत्वञ्च श्रुतिराह 'प्राणः पिता प्राणो माता' इत्यादिना। श्रीविद्यारूपतया आराध्य इति शेषः। उत्तरकौलास्तु प्राणपदार्थः सुन्दर्य्याः तरुण्या वराङ्गं श्रीचक्रमिति वदन्ति; श्रमर्थिमतविरुद्धमेतत् ॥ १।१।२३ ॥

न केवलं दुर्गामन्त्रेण तन्नाममन्त्रेण वा शक्तिरूपस्य ब्रह्मण उपासनमपि तु गायत्रीमन्त्रेणापि तस्यैवोपासनमित्युपपादयितुं गायत्र्यधिकरणं ज्योतिरधिकरणसंज्ञया प्रसिद्धमारभते—

( गायत्र्यधिकरणम्–११ )

## ज्योतिश्चरणाभिधानात् ।१।१।२४ ॥

'गायत्री वा इदं सर्व्वम्' ( छा० ३।१२।१ ) इति विचारार्हवाक्यम्, अत्र गायत्रीपदं छन्दोविशेषपरं, गायत्रीसंज्ञकजीवविशेषपरं, तत्प्रतिपाद्यभर्गपरं वा ? भर्गपरत्वेऽपि भौतिकज्योतिःपरं, सूर्य्यदेवपरं, ब्रह्मपरं वेत्याकाराः संशया भवन्ति, तत्तत्कोट्युपस्थितेः, तथाहि गायत्रीशब्दस्य प्रसिद्धोऽर्थः छन्दोविशेषः, स च अष्टाक्षरैकैकपादबद्धत्रिपाद् वर्णसमुदायः, तत्संज्ञकमन्त्रात्मकवर्णसमुदायश्च, छन्दःशब्देन वेदस्यापि प्राप्तेः। 'गायति त्रायते च' इति तत्रत्या निरुक्तिश्च पुराणप्रसिद्धाया देवीरूपाया गायत्र्या लिङ्गम्। देवदत्तादिशब्दो यथा मनुष्यविशेषस्य वाचकस्तथा

गायत्रीशब्दोऽपि । एवं भर्गविशेषस्यापि वाचको भवितुमर्हति 'य एष तपति' ( बृ० ५।१८ ) इति श्रुत्यन्तरेण तथा प्रतिपादनात्; भर्गो ज्योतिः, ज्योतिरपि त्रिविधम्—भौतिकम्, देवतास्वरूपम्, ब्रह्मस्वरूपञ्च : भौतिकं प्रसिद्धम्, देवशरीरस्य तैजसतया तस्यापि ज्योतिष्ट्वं घटते, 'तच्छुभ्रं ज्योतिषां ज्योतिः' इति श्रुतिबोधितञ्च ब्रह्मेति। किं तावदत्र प्राप्तम्? छन्दोविशेष इति, 'चतुष्पदा' इति विवरणात्, छन्दो हि पादबद्धं भवति। ननु छन्दोरूपा गायत्री त्रिपदैव भवति न तु चतुष्पदा इति चेत् मन्त्रविशेषात्मकवेदरूपत्वादेवास्य च्छन्दस्त्वम्, तथाच मन्त्रस्यास्य षडक्षरीविभागेन चातुष्पद्यस्य सम्भवात्। न च चतुष्पदेति सामान्येनास्य ब्रह्मपरत्वमेवास्तु, ब्रह्मणोऽपि पादचतुष्टयवत्तायाः श्रुतावुक्तत्वाद् इति शङ्कनीयम्, 'वाग् वै गायत्री' इति तत्रैव निर्देशात्। प्रसिद्धञ्च गायत्रीमन्त्रस्य वाक्त्वं पदसमूहरूपत्वात्, तिङ्सुबन्तचयरूपत्वाद् वा। न च 'गायत्री वा इदं सर्व्वं भूतम्' इत्युपक्रमवाक्यं नोपपद्यते, वाचः सर्व्वभूतात्मकत्वासम्भवादिति वाच्यम्, सर्व्वभूतस्य वाग्विषयत्वेन शब्दार्थयोरभेदविवक्षया च तदुपपत्तेः। यदि च 'इदं सर्व्वं भूतम्' इत्यनेनोपस्थितस्य वस्तुजातस्य वाक्सामान्यविषयत्वं गायत्रीमन्त्रस्य च वाग्विशेषरूपत्वं, वाक्सामान्यविषयस्य सर्व्वभूतस्य गायत्र्याख्यवाग्विशेषप्रतिपाद्यत्वाभावाद् गायत्र्याः सकलजगदभिन्नत्वं नोपपद्यते; न च भूर्भुवः स्वरित्यस्य सर्व्वविषयत्वेन तदुपपत्तिरिति वाच्यम्, महाव्याहृतिरूपाणां तेषां गायत्र्यनन्तर्गतत्वाद् वेदमन्त्रादौ प्रणवस्येव गायत्र्यादौ

महाव्याहृतित्रयस्यापि पाठ्यतया विहितत्वेन अज्ञानां तदादिसमुदायस्य गायत्रीत्वभ्रान्त्यैवमाशङ्कायाः सम्भवाद् इति विभाव्यते, तदा गायत्रीयं जीवविशेष एवास्तु यस्य वागिति प्रसिद्धा संज्ञा, ऋग्वेदीयदेवीसूक्तस्येयमृषिका, दुहिता चाम्भृणस्य महर्षेः। न च तस्या गायत्रीति संज्ञा क्वचिदपि नोपलभ्यत इति वाच्यम्, अत्रैव 'गायति त्रायते च' इति नामनिरुक्त्यैव वाङ्नाम्न्यास्तत्संज्ञाभागित्वस्योपपादितत्वात्, न ह्यचेतनस्य शब्दस्य गानकर्तृत्वं सम्भवति। न च 'गायत्री वा इदं सर्व्वम्' इत्युपक्रमवाक्यमनुपपन्नम्, तस्या ऋषिकायाः सर्व्वस्वरूपत्वासम्भवादिति वाच्यम्, 'अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा' इति तस्य ब्रह्मरूपत्वेन 'इदं सर्व्वम्' इत्युक्तेः सुसङ्गतत्वात्। नन्विदं न युज्यते 'गायत्री वा इदं सर्व्वम्' इत्यत्र सिद्धार्थस्यैव गायत्रीशब्दस्य प्रयुक्तेरौचित्यात्, न तु साध्यार्थस्य; आम्भृण्या वाचो यद्यत्र प्रवेशः स्यात्, उपक्रमे 'वाग् वा इदं सर्व्वं भूतम्' इत्यादिरूपेण, प्रसिद्धसंज्ञयैव तदुपादानं स्यादिति चेत्, भर्गपर एवात्र गायत्रीशब्दोऽस्तु, भर्गश्च प्रसिद्धत्वाद् भौतिकज्योतिरेव; समार्थे श्रुत्यन्तरे ( बृ० ५।१४ ) 'अथास्या एतदेव तुरीयं दर्शतं पदं परो रजा य एष तपति' इत्यत्र एतत्पदेन निर्देशात् त्रिपाद्गायत्रीमन्त्राभिधेयभूतचतुर्थपदं भौतिकज्योतिःस्वरूपो भर्गः, एवञ्च छान्दोग्येऽपि 'सैषा चतुष्पदा गायत्री' इति (छा० ३।१२।५) वाक्येन स एव सूचित इति हि युक्तम्, तस्य सर्व्वभूतत्वञ्च वाचैवोपपादनीयम्, 'तेजोमयी वाक्' (छा० ६।५।४) इति श्रुत्या वाचस्तेजःसारतया निर्देशात्, तेजसश्च ज्योतिषोऽन-

न्यत्वेन, वाक्सामान्यगोचरसर्व्वभूतस्वरूपत्वं यद्वाचस्तदेव ज्योतिषः सर्व्वभूतरूपत्वम् । यद्वा असत्कल्पं सर्व्वं भूतं ज्योतिषैवाभिव्यज्यते; स्वाभिव्यञ्जितशब्दात्मनोपचाराद् विपश्चीः श्रोतुरिवेत्यादिप्रयोगवत्, ज्योतिषः सर्व्वभूतात्मनोपचारादिदं सर्व्वं भूतमित्यप्युपपद्यते ।

ननु नेदं भौतिकं ज्योतिः, यतः खलु यत्र श्रुत्यन्तरे 'य एष तपति' इत्यनेन दृश्यमानत्वं ज्योतिष उच्यते तत्रैव 'ददृश इव ह्येषः' इति वाक्यान्तरे इवकारनिर्द्देशात् तस्य दृश्यमानत्वं प्रतिषिध्यते, 'तपति' इति कर्त्तृप्रयोगश्चौपचारिकत्वमापद्यते, नाप्याकाशवाय्वोरभिव्यञ्जकत्वं ज्योतिषोऽस्ति येनाभिव्यञ्जकतया सर्व्वभूतात्मत्वं तस्य स्याद् इति चेद् भर्गोऽयं सूर्य्यमण्डलाधिदेवताजीवविशेष एव 'सर्व्वं भूतम्' इति तदात्मकत्वेन स्तुतः । तदुपाधेर्दृश्यमानत्वेन तस्य चास्माभिरदृश्यमानतया ददृश इवेति, तपतीति च कर्त्तृत्वं सुसङ्गतमेव, नचैवं मण्डलस्थदेवतान्तर्य्यामि ब्रह्मैव गृह्यतां 'सर्व्वं भूतम्' इत्यादेरपि विनैवोपचारं तत्र समन्वयादिति वाच्यम्, 'तद्वै तत् सत्ये प्रतिष्ठितं चक्षुर्वै सत्यम्' इति श्रुत्यन्तरे तस्य चक्षुःप्रतिष्ठत्वप्रतिपादनात् स्वप्रतिष्ठस्य तु ब्रह्मणश्चक्षुःप्रतिष्ठत्वासम्भवात् । देवतायाश्चक्षुःप्रतिष्ठत्वञ्च राज्ञो राज्यप्रतिष्ठत्ववदुपपद्यते, सूर्य्योनाम देवोहि चक्षुरिन्द्रियस्याधिस्वामी । इत्येवं प्राप्ते उत्तरं पठति— ज्योतिश्चरणाभिधानादिति । 'ज्योतिः' = गायत्रीप्रतिपाद्यो भर्गः— ब्रह्मैवेति पूर्व्ववत् । अत्र हेतुः 'चरणाभिधानात्' = पादाभिधानात्, यथा ब्रह्मणश्चत्वारः पादा अभिहिताः 'चतुष्पाद् ब्रह्म' इति ( छा०

३।१८।२ ) तथात्रापि, 'सैषा चतुष्पदा गायत्री' इति प्रक्रम्य 'तदेतदृचाभ्यनूक्तम्, तावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य सर्व्वाभूतानि त्रिपादस्यामृतम्' इति ऋचा हि ब्रह्मणश्चतुष्पात्त्वं यदुक्तं तदेव गायत्र्या चातुष्पद्ये प्रमाणतयाभिधानात्। एवञ्च आम्भृणी वागपि एतेनैव संगृहीता भवति, तस्या अपि ब्रह्मभावात्। सा च उमाया अनन्या सत्यपि मूर्त्तिभेदे जगद्धात्रीत्रिपुरसुन्दरीकाल्यादिवद् आम्भृण्या वाचोऽपि ब्रह्मभावेन प्राप्तेः। हैमवतीत्ववद् आम्भृणीत्वमपि तस्या उपपादनीयम्।

श्रीचक्रपक्षे तु, निम्नाधिकारिणां भौमं श्रीविद्याराधनयन्त्रमभिधाय मध्याधिकारिणां ज्योतिःस्वरूपं तद्यन्त्रमाह—'ज्योतिः' अग्निः सूर्य्यश्चन्द्रश्च श्रीविद्याराधनस्थानं भवतीति शेषः, अत्र हेतुः 'चरणाभिधानात्' वेदमन्त्रे तेषां ज्योतिषां भगवत्याश्चरणत्वेनाभिधानात्। तथाहि याजुषे तैत्तिरीयब्राह्मणे 'लोकस्य द्वारमर्च्चिमत् पवित्रम् ज्योतिष्मद् भ्राजमानं महस्वत्। अमृतस्य धारा बहुधा दोहमानं चरणं नो लोके सुधिताम् दधातु' इति। लोकस्य ब्रह्मलोकस्य द्वारं प्रापकम्। 'सूर्य्यद्वारेण विरजाः प्रयान्ति' इति ( मुण्डक० १।२ ) श्रुतेः, 'तेऽर्च्चिषमभिसंभवन्ति' इत्युपक्रम्य 'संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इति ( छा० ५।१० ) श्रुतेश्च। अर्च्चिरत्र अग्निः, 'अग्निर्ज्योतिरहः शुक्लः' इति गीतोक्तेः। अर्च्चिमत्—अर्च्चिष्मत्, एतेनाग्निस्वरूपं ज्योतिरुक्तम्, 'तेऽर्च्चिषमभिसंभवन्ति' इति श्रुतेः 'अग्निर्ज्योतिः' इत्यनेन गीतायां विवरणात्, पावकत्वात्तदेव पवित्रमित्युक्तम्।

ज्योतिष्मदिति सूर्य्यप्रतिपादकं भ्राजमानमिति तस्यैव विशेषणात् सर्व्वतो दीप्तिमत्तया लोकप्रसिद्धमित्यर्थः। महस्वदिति चन्द्रस्वरूपम् 'अमृतस्य धारा बहुधा दोहमानम्' इति विशेषणात्, चन्द्रोऽमृतकर इति प्रसिद्धिः। तत् सर्व्वमेव—चरणं = भगवत्याः श्रीपादपद्मज्योतिः। 'येन सूर्य्यस्तपति तेजसेद्धः' इति ( तै० ब्रा० ३।१२।९।७ ) 'तमेव भान्तमनुभाति सर्व्वं तस्य भासा सर्व्वमिदं विभाति' इति 'अहं मित्रावरुणोभा विभर्म्यहमिन्द्राग्नी' 'अहं सोममाहनसं बिभर्म्मि' इति च मन्त्रवर्णात्, 'चन्द्रादित्यविवर्द्धिनी' 'जातवेदसी' इति स्मृतेश्च (महाभारत भीष्मपर्व्व २३ अ०) नः = अस्मान् सुधितान् = तृप्तान् सुधीकृतान् सुबुद्धियुक्तान् वा दधातु = विदधातु पुष्णातु वा इति श्रीचरणज्योतिःस्वरूपत्वात् तेषां तदाराधनास्थानत्वम्। अत एवोक्तं चन्द्रज्ञानविद्यायाम्—सूर्य्यमण्डलमध्यस्थां देवीं त्रिपुरसुन्दरीम्। पाशाङ्कुशधनुर्ब्बाणान् धारयन्तीं प्रपूजयेत्' इति। अग्नौ तदाराधनं होमेन, चन्द्रमण्डलञ्च षोडशनित्यास्थानमिति युक्तं तत्र तदाराधनम्। यद्वा वैदिकानां मन्त्रमध्याधिकारिणामैहिकफलकामनाराहित्ये षड्विधस्य चतुर्व्विधस्य वा ऐक्यस्यानुसन्धानासामर्थ्ये च बाह्यपूजनमुक्तम्—अत्रापि प्रथमं मातृकाश्रीचक्रयोरभेदश्चिन्तनीयः, तत्प्रकारमुपदर्शयितुं सूत्रमिदम्, तथाच 'ज्योतिः' सोमसूर्य्यानलात्मकत्रिखण्डमातृकाचक्रम्, प्रागुक्तार्थकम्, विशेषस्त्वियान्, सोमसूर्य्यानलात्मकमित्यवरोहक्रमेणोक्तं लोकस्य द्वारमिति मन्त्रवर्णस्त्वारोहक्रमेण। तदेव चरणं श्रीचक्ररूपं भगवत्याः श्रीपादपद्मस्थानं तदनुध्याय ततश्च सुधितान् पुष्णातु

इति कृतप्रार्थनोऽसौ बहिः पूजामारभेत नत्वन्यथेत्याशयः। भाष्ये विवृतमेतदिदमेव सूत्रमनुव्याख्यायेति बोध्यम्। १।१।२४॥

ननु 'गायत्री वा इदं सर्व्वम्' इति छान्दोग्यश्रुतेर्बृहदारण्यकश्रुतिसंवादित्वमभ्युपगतं चेत् तदा गायत्र्याश्छन्दोरूपत्वमवश्यमङ्गीकार्य्यं यतस्तत्राम्नायते 'भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै पदम्······ऋचो यजूंषि सामानीत्यष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै पदं······प्राणोऽपानोव्यान इत्यष्टाक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै पदम्' इति। अत्र चतुष्पदेति यदुक्तं तदेतत्पादत्रयमपहाय न सम्भवति, तुरीयायेत्यादिकं त्वभिधेयरूपमस्यैव, वाचकत्वसम्बन्धात् समुदायस्य च पदत्वेन विवक्षणात् षडक्षरपादविवक्षया वा 'चतुष्पदी' इति (बृ० ५।१४।७) 'चतुष्पदा' इति च (छा० ३।१९) श्रुतिरप्यत्रोपपद्यते। तस्माद् 'गायत्री वा इदं सर्व्वम्' इत्यादिश्रुतिर्गायत्र्याख्यच्छन्दोमात्रपरैवेत्याशङ्कागर्भतन्निरासस्रूत्रम्—

## छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम्॥ १।१।२५॥

'छन्दसः' गायत्र्याख्यच्छन्दोबद्धमन्त्रस्य 'अभिधानात्' गायत्रीशब्देनोक्तत्वात् 'न'=तस्य ब्रह्मपरत्वं नास्ति, मन्त्रस्य भूताद्यात्मकत्वं यथा, तत्प्रकारः प्रागुपदर्शितप्रायश्रुत्यैवोपपादितः, इति चेद् उच्यते इति शेषः, तत्रोत्तरमाह नेति। ब्रह्मपरत्वं नास्तीति न वक्तव्यम्। ननु छन्दःपरत्वं ब्रह्मपरत्वयोरुभयं न युज्यते

इत्यत्राह—'तथा'=तेन प्रकारेण गायत्रीमन्त्राश्रयेणेत्यर्थः, 'चेतोऽर्पणनिगदात्' ब्रह्मणि मनःसमर्पणबोधकश्रौतगद्यात् 'गायत्री वा इदं सर्व्वम्' इत्युपक्रम्य 'तदेतदृचाभ्यनूक्तम्' इत्यन्तात्। यदि गायत्रीशब्दप्रतिपाद्यस्य ब्रह्मस्वरूपता न स्यात् 'इदं सर्व्वम्' इत्यभेदनिर्देशस्य, 'तदेतदृचाभ्यनूक्तम्' इत्यनेन यो मन्त्र उत्थापितस्तस्यासमवेतार्थकत्वादसमर्थकतया, तदुत्थापकस्य वाक्यस्यायुक्तत्वं स्यादित्यर्थः। ननु कस्तावन्मन्त्रः प्रदर्शितो येनैवमुच्यते इत्यत आह तथाहि दर्शनमिति 'तावानस्य महिमा ततो ज्यायांश्च पूरुषः' इति मन्त्रात्मकवेद एव दर्शनम्, दृश्यते अपरोक्षीक्रियते येन, स्वतःप्रमाणत्वेन वेदस्य दर्शनसंज्ञा स्मृतेश्च वेदाधीनत्वेनानुमानसंज्ञा। गायत्र्या ब्रह्मपरत्व एव मन्त्रोऽयं समवेतार्थो भवति न तु गायत्रीमन्त्रपरत्वे। मन्त्रप्रतिपाद्यः खलु पूरुषो न मन्त्रः, किन्तु ब्रह्मैव। तस्माद् गायत्रीशब्दस्य ब्रह्मपरत्वं युक्तम्।

श्रीचक्रपक्षे तु—नन्वयं मन्त्रः अपाघासु इष्टिषु याज्यात्वेनाम्नातः, तत्र 'चरणाय स्वाहा' इति चतुर्थ्युपहितशब्दस्यैव देवतात्वं, स च शब्दो वेदभागः, चरणशब्दोऽपि वेदशाखापरः, नात्र देव्याः सम्बन्धोऽपीति शङ्कातत्समाधानगर्भं सूत्रमाह—'छन्दोऽभिधानात्' इत्यादिकम्। प्रदर्शितमन्त्रश्चरणाय स्वाहेति मन्त्रोत्थापकः, तत्र चरणशब्देन 'छन्दसः' वेदस्य, वेदशाखाया इत्यर्थः 'अभिधानात्'=वाच्यत्वात् 'न'=भगवतीचरणपरत्वं नास्ति; तदादाय भगवत्या आराधनविधानं नोपपद्यत इति भावः, 'इति चेत्'=यद्येवमुच्येत—तद्दूष्यते—'न'=एतत्. कथनं न युक्तम्,

'चेतोऽर्पणनिगदात्' = 'निगदः' कर्म्मणि विनियुक्तो याजुषमन्त्रादिस्वरूपो वेदभागः, 'चेतोऽर्पणः' ब्रह्मणि चेतःसमाधानहेतुः, चरणाय स्वाहेति निगदो हि तथा, यत एवम्, अतश्चरणपरत्वमेव युक्तम्, मन्त्रे तदर्थभूतवेदशाखायां चेतःसमर्पणेन ब्रह्मणि तद्द्वारकचेतःसमर्पणापेक्षया साक्षात्तत्रैव चेतःसमर्पणस्य युक्ततया 'चरणाय स्वाहा' इति मन्त्रस्थचरणशब्दस्यापि भगवतीचरणाभिधायकत्वं न्याय इति भावः। अत्र निदर्शनमाह 'तथाहि दर्शनम्' दर्शनं प्रत्यक्षश्रुतिविशेषः छान्दोग्योपनिषदो गायत्रीखण्ड इति फलितम्, तस्य ब्रह्मपरत्वं न तु मन्त्ररूपवेदपरत्वम् इति सिद्धान्त एवास्मत्पक्षस्य साधको दृष्टान्त इति तात्पर्य्यम्। न च तत्रापि मन्त्रपरत्वमेवेति वाच्यम्, संख्यासामान्येन चतुष्पात्त्वरूपेण ब्रह्मण एवाभिधानात् 'सेयं चतुष्पदा गायत्री' ब्रह्मापि चतुष्पात्, 'पादोऽस्य सर्व्वाभूतानि त्रिपादस्यामृतम्' इति हि निदर्शितम्। १।१।२५ ॥

सिद्धान्तमिमं द्रढयितुं हेत्वन्तरमाह—

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ १।१।२६ ॥

'एवम्' ऋचः अभ्यनुवाचकत्वे 'भूतादिपादव्यपदेशोपपत्तेः' आदिपदेन दिवः परिग्रहः, भूतानां दिवश्च ऋचि यः पुरुषस्य पादत्वेन व्यपदेशः, तेनैव गायत्र्याः चातुष्पद्यव्यपदेश उपपद्यते, न त्वन्यथा। अतो गायत्रीशब्दस्य ब्रह्मपरत्वमिति शेषः। यदि गायत्र्या मन्त्रमात्रमत्राभिधीयेत 'चतुष्पदा षड्विधा—तदेतदृचा-

भ्यनूक्तम्' इति श्रुतिर्नोपपद्येत । यतः सा खलु छान्दोग्यश्रुतिर्वा-कपृथिवीभूतशरीरप्राणहृदयरूपेण गायत्र्याः षड्विधत्वमनुशासती चातुष्पद्यमुद्दिष्टं प्रातिस्विकरूपेण नोदाजहार । तदवबोधनाय च 'तदेतदृचाभ्यनूक्तम्' इति प्रतीकेनालङ्कृता 'तत्' सामान्यतः प्राप्तमुद्दिष्टं चातुष्पद्यम् 'एतत्' वर्ण्यमानस्वरूपं 'ऋचाभ्यनूक्तम्' इति तदर्थः, 'पादोऽस्य सर्व्वा भूतानि' इत्येकः पादः, पुरुषस्य पादत्रयन्तु अमृतस्वरूपमात्मनिष्ठम्, एतच्चातुष्पद्यं पुरुषपदार्थस्य ब्रह्मणः प्राप्तम्—तच्च यदि तेनैव प्रमाणेन गायत्रीशब्दप्रतिपाद्यस्य साध्यते—ततश्च गायत्रीशब्दस्य ब्रह्मपरत्वमवश्यमङ्गीकार्य्यमिति भावः । एवञ्च गायत्र्याः षडक्षरीरूपैकपादस्याप्रसिद्धावपि भूतवाकपृथिवीशरीरप्राणहृदयानां षण्णां प्रक्रान्ताना भूतपृथिवीशरीरहृदयलक्षणचतुष्टयस्यात्र पादतया व्यपदेशाभावेऽपि न क्षतिः ।

चकारोऽनुक्तहेतुसमुच्चयार्थः । 'सावित्री वेदमाता च' इत्यादिमहाभारतभीष्मपर्व्वीयदुर्गास्तोत्रस्मृतिरपि सावित्र्या दुर्गारूपसाकारब्रह्मस्वरूपत्वसिद्धौ हेतुः, या च सावित्री सैव गायत्री, 'तस्माद् गायत्री नाम स यामेवामूं सावित्रीमन्वाह' इति ( बृ० ५।२४ ) श्रुतेः ।

श्रीचक्रपक्षे तु—तथाहि दर्शनम् इति पूर्व्वसूत्रवाक्यशेषं प्रपञ्चयन्नाह—भूतादीनि सूत्रम् । तदर्थश्चोक्तप्रायः । तत्र भूतादिपादव्यपदेशवद् अत्राप्युपपत्तेः । तस्मात् तत्रैव 'लोकस्य द्वारम्' इत्यादिमन्त्रस्य 'चरणाय स्वाहा' इति मन्त्रस्य

च ब्रह्मपरत्वमेव, तथैव श्रूयमाणत्वात्। इयांस्तु विशेषो निराकारब्रह्मपरत्वं दृष्टान्ते, साकारब्रह्मपरत्वं दार्ष्टान्तिके इति, ब्रह्मणस्तु निराकारतया साकारतया नास्ति भेद इत्युक्तम् ।१।१।२६।

ननु गायत्र्या अक्षराष्टकमयपादघटितत्वेन य उपदेशः श्रुतिवचनं यश्च ब्रह्मपरत्वबोधक उपदेशस्तयोर्भेदात्, परस्परविरोधात् गायत्र्या ब्रह्मपरत्वावधारणमयुक्तमिति शङ्कागर्भतत्समाधानसूत्रमाह—

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् । १।१।२७ ॥

'उपदेशः' = श्रुतिः, तस्य यो 'भेदः' = अन्योन्यविरुद्धार्थप्रतिपादकत्वं तस्मात् 'न' = गायत्र्या ब्रह्मपरत्वावधारणं न युक्तमित्यर्थः, 'इति चेत्' उच्यते इति शेषः, तत्रोत्तरं—नेत्यादि । उभयस्मिन्नपि उपदेशद्वयेऽपि अविरोधात् अन्योन्यविरुद्धार्थप्रतिपादकत्वाभावात्। तथाहि यदि गायत्र्या ब्रह्मपरत्वमभ्युपगम्यते, ब्रह्मणः सर्व्वप्रकृतित्वात् विकाराणाञ्च प्रकृत्यनन्यत्वात् छन्दोनिबद्धमन्त्रस्वरूपत्वमपि ब्रह्मणो न विरुध्यते । किञ्च बृहदारण्यके श्रुतम् 'गयांस्तत्रे प्राणा वै गयास्तत् प्राणांस्तत्रे यद् गयांस्तत्रे' इति गायत्रीनिरुक्तिः या च दूर्नाम प्राणदेवता पूर्व्वमुक्ता सापि गयांस्तत्रे, 'सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्रासां दिशामन्तस्तद्गमयाञ्चकार' इति श्रुतेः । एतासां देवतानां वागादीनां प्राणानाम् । वागादीनां प्राणत्वमाह श्रुतिः······'दशेमे पुरुषे प्राणाः' इति ( बृ० ३।९।४ ) 'सप्त वै शीर्षण्याः प्राणाः' इति 'द्वे श्रोत्रे द्वे

चक्षुषी द्वे नासिके एका वाक् इति' च ( शारीरकभाष्ये २।४।३ तै० सं० )। दूर्नाम देवता च मुख्यप्राणदेवता सैव गायत्रीति उपदेशो मन्त्रपरत्वोपदेशश्च मिथो भिन्नत एव तथापि तत्र विरोधो नास्ति। न हि प्राणमन्तरेण मन्त्रः प्रक्रमते—प्राणाधीनत्वान्मन्त्राणाम्। एवञ्च गायत्रीमन्त्रमवलम्ब्य प्राणस्थाने दहरब्रह्मपुरे मातृभावेनोपासनं वा निराकारब्रह्मनिदिध्यासनं वा छान्दोग्य-प्राणखण्डबृहदारण्यकगायत्री-ब्राह्मणयोर्निर्गलितोऽर्थः।

श्रीचक्रपक्षे तु—व्याघातमाशङ्क्य समाधत्ते उपदेशभेदादिति। 'उपदेशभेदात्' 'नेतमृषिं विदित्वा नगरं प्रविशेत्' इत्येक उपदेशः, ऋषिज्ञानवतः श्रीचक्रपूजनार्थकनगरप्रवेशनिषेधरूपः, 'यदि प्रविशेत् मिथौ चरित्वा प्रविशेत्' इति श्रीचक्रपूजनात्मकनगरप्रवेशविधिः, एवं निषेधविधिरूपयोरुपदेशयोः 'भेदात्' 'न' = नैकतरमपि पालनीयं व्याहतत्वादिति भावः, कुतार्किकाणामिमामापत्तिं परिहरति नेति; 'उभयस्मिन्' विधिपक्षे निषेधपक्षे चेति द्वयोः, अपिना केवलं निषेधपक्षस्य संग्रहः, 'अविरोधात्'—विरोधस्यैवाभावात् विरोधो हि भवति व्याघातः, नात्र तथा—अधिकारिभेदादिति भावः। एवञ्च यद्येक एव कर्त्ता निषेधस्य विधेश्च विषयः स्यात्, आशङ्क्येतापि विरोधः, इह न तथा। उत्तमाधिकारिणो योगिनो बाह्यपूजानिषेधपर्य्यवसायी ऋषिज्ञानवतः पूजानिषेधः, अन्येषामधिकारिणां बाह्यपूजनेऽपि आन्तराराधनपूर्व्वकत्वमिति द्वयोः श्रुत्योस्तात्पर्य्यान्न विरोधो व्याघातोऽप्रामाण्यप्रसङ्गो वा। भाषितमेतत्। १।१।२७॥

( अनुगमाधिकरणम्–१२ )

प्राणस्तथानुगमात् ।१।१।२८ ॥

गायत्र्यधिकरणोपस्थापितबृहदारण्यकगायत्रीब्राह्मणे—'प्राणो वै बलम्' (बृ० ५।१४।४) इत्यत्र प्राणशब्द इन्द्रियपरो वा मुख्यप्राणपरो वा ब्रह्मपरो वेति संशयः, सर्व्वत्रैव प्राणशब्दप्रयोगदर्शनात्, तत्र कश्चिदाह, इन्द्रियपरः, चक्षुःपदोपस्थाप्यस्य इन्द्रियविशेषस्य इन्द्रियसामान्यप्रतिष्ठितत्वात्—न ह्यप्रतिष्ठिते सामान्ये विशेषप्रतिष्ठा भवति, विशेषस्य सामान्याश्रितत्वात्। तथाहि गायत्र्याः पादत्रयप्रतिपादनानन्तरं 'अथास्या एतदेव तुरीयं दर्शतं पदम्, परोरजा य एष तपति, यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येष परोरजाः' इति पूर्व्ववाक्ये दृश्यमानसूर्य्यस्य तुरीयपदत्वमुपपाद्य 'सैषा गायत्री एतस्मिंस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता तद्वै तत् सत्ये प्रतिष्ठितं चक्षुर्वै सत्यं······तत् सत्यं बले प्रतिष्ठितं प्राणो वै बलम्' इति पूर्व्ववाक्येन दृश्यमानसूर्य्यस्य गायत्र्यास्तुरीयपदत्वं तस्य चान्धेनादृश्यमानत्वेन चक्षुःप्रतिष्ठितत्वं चक्षुषश्चेन्द्रियसामान्यप्रतिष्ठितत्वं युक्तं बलत्वञ्च तस्यौपचारिकम्। न चात्र सूर्य्यो यदि दृश्यमानतेजोमण्डलरूपः स्यात् ददृश इवेतीवशब्दप्रयोगो नोपपद्येत इति शक्यम्—तेजःप्रकर्षेण दुर्निरीक्ष्यतया तत्प्रयोगात्। यदि चेन्द्रियसामान्यपरत्वे प्राणा इति स्यात्, 'दशेमे प्राणाः' इत्यादिदर्शनादित्युच्यते तदा मुख्यप्राणपर एवास्तु 'प्राणोऽपानोव्यान इत्यष्टावक्षराण्यष्टाक्षरं ह वै गायत्र्यै पद-

म्' इति तस्य प्रक्रान्तत्वात्, चक्षुरादीनां वागादीनाञ्च सर्व्वेषामेवेन्द्रियाणां तदधीनत्वात् चक्षुषस्तत्प्रतिष्ठितत्वं युक्ततरमिति प्राप्ते उच्यते–प्राणस्तथानुगमादिति । 'प्राणः'=प्राणशब्दः 'तथा'=ब्रह्मपरः, कुतः 'अनुगमात्'=पूर्व्वोत्तरवाक्येन श्रुत्यन्तरेण च एकार्थप्रतिपादकत्वात् । पूर्व्वोत्तरवाक्यानि दर्शयिष्यन्ते । श्रुत्यन्तराणि च्छन्दोग्यस्य गायत्रीखण्डदहरखण्डादीनि, श्वेताश्वतरमन्त्रवर्णश्च । गायत्रीखण्डस्थगायत्र्या ब्रह्मपरत्वं गायत्र्यधिकरणे निर्णीतम्, तत्प्रतिपादितार्थस्यैव सप्रपञ्चप्रतिपादनं गायत्रीब्राह्मणे, तत्र तुरीयपदस्य गायत्रीमुख्यार्थत्वे पर्य्यवसानात् तस्य च ब्रह्मत्वेन स्वमहिमप्रतिष्ठितस्य चक्षुःपदप्रतिपाद्ये स्वाभिन्नेऽक्षिपुरुषे प्रतिष्ठितत्वमक्षिपुरुषस्य च तत्प्रतिष्ठितत्वमत्यन्ताभेदद्योतनायात्रोपदिष्टम् । 'ननु य एष तपति' दृश्यमानबोधकैतच्छब्दप्रयोगात् कथं ब्रह्मत्वं तुरीयपदस्येति चेन्न 'एष जानाति' इतिवद् उपाधिमात्राश्रयेणैतच्छब्दप्रयोगात्, अन्यथा तपतीति न स्यात्, अचेतने तेजोमण्डले आख्यातार्थकर्त्तृत्वस्य बाधात् । न च रथो गच्छतीतिवत् प्रयोगोऽयमौपचारिकः व्यापारमात्रं वा आख्यातार्थ इति वाच्यम्, सति गत्यन्तरे औपचारिकत्वाङ्गीकारस्यायुक्तत्वात् । व्यापारमात्रस्य आख्यातार्थत्वे पचतीत्यादेः पाकं करोतीत्यादिरूपेण विवरणायोगात् । अथ गायत्रीखण्डे गायत्रीपादविवरणावसरे 'पादोऽस्य सर्व्वा भूतानि त्रिपादस्यामृतं दिवि' इति ऋचः संवादनाद्, अत्र चाष्टाक्षरपादस्योक्त्या कथं द्वयोरनुगम इति चेद् भूरन्तरिक्षं द्यौरित्यस्याष्टाक्षरैकपादस्य भूतात्मकत्वाद् इतरेषां

त्रयाणां पादानामात्मनिष्ठत्वादेव ऋगर्थानुगतेः। ननु कथमेवं स्याद् इति चेत् जलस्य जीवनहेतुतया भूरित्यनेन पृथिव्या इव भवति विद्यते यत इति व्युत्पत्त्या जलस्यापि प्राप्तेः, अमूर्तत्वेन अन्तरिक्षमित्यनेनाकाशवाय्वोः, द्यौरित्यनेन च तेजसः प्राप्तेः, दिवधातोर्द्युत्यर्थकत्वात्, प्राणादीनाञ्चाध्यात्मतया ऋगादीनाञ्च शब्दाश्रितज्ञानात्मकतया द्वितीयतृतीयपादयोरात्मनिष्ठत्वे चतुर्थस्य ब्रह्मरूपत्वे च 'त्रिपादस्यामृतं दिवि' इत्यनेनैवैकार्थकत्वेनानुयोगानवकाशात्। तयोरेकवाक्यत्वरक्षार्थमुपचारस्यादोषत्वात्। अत एव 'प्राणो वै बलम्' इत्यनेन 'स्वाभाविकी ज्ञानबलक्रिया च' इति श्वेताश्वतरमन्त्रः संवदति। किञ्च चक्षुषः प्रतिष्ठा यदि मुख्यप्राणे कल्प्येत, अनभिधीयमानप्रतिष्ठे तस्मिंश्चरमप्रतिष्ठानत्वकथनमसमञ्जसं स्यात्। न हि परप्रतिष्ठं वस्तु स्वयमेवान्यस्य प्रतिष्ठानमिति युक्तं सर्व्वज्ञायाः श्रुतेर्वक्तुम्, तस्य मुखप्रतिष्ठितत्वात् 'आसन्यं प्राणम्' इति श्रुतेः। तस्मात् स्वमहिमप्रतिष्ठिततयान्यानपेक्षे यत्र चक्षुषश्चरमप्रतिष्ठा—स एव प्राणशब्दार्थः, तस्मादत्र प्राणो ब्रह्मैवेति सिद्धम्।

श्रीचक्रपक्षे तु बाह्यालम्बनेन श्रीविद्याराधनमुक्त्वा अन्तर्बहिश्चरं प्राणमालम्ब्य तदाराधनमुपदिशति प्राणस्तथानुगमादिति। 'प्राणः'='अथ हेममासन्यं प्राणमूचुः' इत्यत्रोक्तो मुख्यः प्राणः शारीरवायुविशेषः, 'तथा'=श्रीचक्रम्, श्रीत्रिपुरसुन्दर्य्याराधनालम्बनम्, कुतः 'अनुगमात्'=दुर्गात्रिपुरसुन्दर्य्योरेकरूपेण प्राप्तेः। तथाहि त्रिपुरातापिन्युपनिषदि त्रिपुराराधनप्रकरणे

द्वितीयोपनिषदि 'दुर्गेऽहं सस्यं नवः' इति प्रार्थनामन्त्रदर्शनात् प्राणदेवतायाश्च दूर्नामेत्यनेन श्रुतिपदेन दुर्गारूपत्वावगमात् 'जातवेदसे सुनवाम सोमम्' इति दुर्गासावित्र्याः शताक्षरीत्रिपुरसुन्दरीमन्त्रान्तर्गतत्वाच्च। एतेनैतदुक्तं भवति, त्रिपुरसुन्दरी खलु दुर्गा सा हि प्राणमन्तर्य्यामित्वेनाधितिष्ठति, त्रिपुरसुन्दरी च श्रीचक्रमधितिष्ठति, तस्मात् प्राणं श्रीचक्रं भावयित्वा तत्र युक्तं श्रीत्रिपुरसुन्दर्य्याराधनम्। यदि च त्रिपुरातापिन्युपनिषदि निर्व्विशेषब्रह्मणः शक्त्युत्पत्तिः श्रूयते, निर्व्विशेषञ्च निरञ्जनादिस्वरूपं चिन्मात्रम्, तथापि तत्र गायत्रीविवरणावसरे प्रसूते शक्तिमित्यनन्तरं सूते त्रिपुराशक्तिराद्येयमिति सवितृपदमाद्यां शक्तिं त्रिपुरां बोधयतीति प्रतिपादनेन प्रसवकर्म्मतयोक्तायाः शक्तेस्तद्भिन्नत्वावगतेः, यस्याः 'परास्य शक्तिर्विविधैव श्रूयते' इति मन्त्रे निर्द्देशः, अत एव तत्र निर्व्विशेषब्रह्मप्रतिपादनावसरे, 'तुरीयया माययान्त्यया निर्द्दिष्टं परमं ब्रह्म' इति श्रूयते, न चात्र निर्द्देशो ज्ञापनं, तथाच ब्रह्म निर्द्दिश्य माया तिरोधत्ते—अत्र अन्त्ययेति श्रवणात्। अनन्तरमेव 'परमपुरुषं चिद्रूपमात्मेति' इति ब्रह्मणश्चिद्रूपतायाः स्पष्टमुक्तत्वाच्च इति वाच्यम्, अन्त्ययेत्यस्य अन्ते प्रलयकाले वर्त्तमानयेत्यर्थकतया नित्यत्वावगतेः, तया इत्यत्र सहार्थे तृतीया, 'तया निर्द्दिष्टं'=तत्सम्बद्धतया श्रुत्योपदिष्टं, यच्चिद्रूपम् इत्यर्थकत्वेन तस्य चिदचिद्रूपतायामेव पर्य्यवसानात्। 'शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते' इति श्रुत्यन्तरसमानार्थकेन तुरीययेत्यनेन साक्षात् ब्रह्मभावप्रतिपादनाच्च। तस्मात् प्राणं श्रीचक्रतया विभाव्य तदाभिव-

त्रिपुरसुन्दर्य्या आन्तराराधनं विहितम् तदशक्तावन्तद्ध्यानियजनपुरःसरं बहिःपूजनं कर्त्तव्यम्, तत्र च प्राणायामानुष्ठानं प्रधानमिति निष्कर्षः। १।१।२८॥

ननु तुरीयं यदि ब्रह्म स्यात् गायत्रीखण्डाद्यनुगमादियं मीमांसा भवितुमर्हति, वस्तुतः पुनर्न तद् ब्रह्मेत्यत्र युक्तिप्रदर्शनगर्भं-वदाशङ्कातत्समाधानसूत्रमाह—

**न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभमा ह्यस्मिन्। १।१।२९॥**

'न'=तुरीयं पदं ब्रह्म न भवितुमर्हति, 'वक्तुः' गायत्रीब्राह्मण एवोत्तरवाक्ये बुडिलं प्रति उपदेष्टुः, जनकस्य 'आत्मोपदेशात्' ='आत्मना' स्वेनैव नतु परप्रवर्त्तनया यः 'उपदेशः' तस्मात्। तथाहि 'एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच यन्नु हो तद् गायत्रीविदब्रूथा अथ कथं हस्तीभूतो वहसीति मुखं ह्यस्याः सम्राण्न विदाञ्चकारेति होवाच तस्या अग्निरेव मुखं यदिह वा अपि बह्विवाग्नावभ्यादधति सर्व्वमेव तत् सन्दहत्येवं हैवैवंविद् यद्यपि बह्विव पापं कुरुते सर्व्वमेव तत् संप्साय शुद्धः पूतोऽजरोऽमृतः संभवति' इति (बृह० ५।१४।८) श्रुतिः। सोपक्रमायास्तस्याः—पिण्डितार्थस्तु यो गायत्र्याः पादत्रयस्यार्थं वेत्ति स सर्व्वेभ्यः सर्व्वप्रतिग्रहसमर्थः किन्तु 'प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्ज्जयेत्। प्रतिग्रहेण चैकेन ब्राह्मं तेजः प्रणश्यति' इति मनुवचनाद् गायत्रीपादत्रयार्थविद् यदि स्वसामर्थ्यानुरूपं

प्रतिगृह्णाति न तस्यामुत्र शुभं भवति, भोगेन स्वर्गहेतुपुण्यक्षयवत् प्रतिग्रहेण तत्सामर्थ्यस्वर्गान्यतरहेतोर्गायत्र्यर्थज्ञानजन्यपुण्यस्य नाशात्। तस्योदाहरणम्,—कदाचिदात्मतत्त्वविद् वैदेहो जनकः कमपि हस्तिनमारुह्य योगबलेन तत्पूर्व्वजन्म जानन् उवाच, भो आश्वतराश्वे बुडिल ! त्वं गायत्रीविदासीरिति त्वन्मुखादेवास्माभिः श्रुतम्, तत् कथमस्मिन् जन्मनि त्वं हस्तीभूतो वहसि ? इति ; उद्बोधितपूर्व्वजन्मवृत्तान्तो बुडिलः प्रत्युवाच—गायत्रीविदासमिति तु सत्यम्, तस्या मुखं नाम मुख्यार्थं नाहमवेदिषम्। इयतैवोत्तरेण जनको बुबुधे गायत्र्यर्थज्ञानमदेनाविचार्य प्रतिगृहीतवान्, तेन च जातपुण्यक्षयो मददोषेण हस्तियोनिं प्राप्त इति, ततश्चैनमुद्धरिष्यामीति जातकरुणो गायत्र्या मुख्यमर्थमुपदिदेशाग्निरिति श्रुतिविवृतपूर्वो मुख्यार्थश्च तुरीयं पदमिति, यस्य मुखमिति कृत्वा बुडिलेनोद्देशोऽकारि। अयमेव वक्तुर्जनकस्यात्मोपदेशः, आत्मनोपदेशः स्वत उपदेशः—प्रष्टुः प्रवर्त्तनां विनोपदेशः, एवञ्च करुणाप्रयुक्तोऽयमुपदेशो न स्थूलारुन्धतीन्यायानुगो भवितुमर्हति, न वाधिकारविशेषापेक्षः प्रजापतेरिन्द्रविरोचनौ प्रत्युपदेशवत्, किन्तर्हि तात्त्विक एव सचाग्निरिति न तु ब्रह्म।

नन्वग्निरित्युपदेशोऽप्यग्निस्वरूपतेजोविषयोऽग्निदेवताविषया वा, प्रसिद्धेः ; न तु सूर्य्यविषयः ; य एष तपतीत्यनेन श्रुतिवाक्येन सूर्य्यस्यैव तेजोमण्डलरूपस्य तुरीयपदत्वात् तदुपदेशौचित्ये कथमग्निरित्युपदेशस्तात्त्विकत्वेनोच्यते इति चेन्नैष दोषः, अग्न्यादित्ययोरैक्यं यज्ञसम्प्रदायसिद्धम्—'अयमग्निरर्कः' इति

( बृ० १।२।७ ) श्रुतिप्रमाणकमाहत्य तथाभिधानात्। स्यादेतत्, तथापि 'य एष तपति' इत्यन्तेन यो गायत्र्यर्थ उक्तस्तेन ब्रह्मज्ञानं न भवतीति प्राप्तमतः 'य एष तपति' इति प्रकारेण कथितं दर्शताख्यं तुरीयं पदं न ब्रह्म, सूर्य्यरूपतेज एव ; रथोगच्छतीतिवत् तपतीत्यत्राख्यातार्थस्य व्यापारत्वात् अकर्म्मकत्वविवक्षया कर्त्राख्यातस्याश्रयत्वार्थकत्वाद्वा। तथा च गायत्र्या ब्रह्माप्रतिपादकत्वात्, ब्रह्मस्वरूपत्वेन निर्णीतपूर्व्वायाः प्राणदेवताया अप्यत्र सम्बन्धो नास्ति। चक्षुषि सूर्य्यतेजसः प्रतिष्ठा तु चक्षुरिन्द्रियेण तत्प्रकाशग्रहणात् चक्षुरभावे प्रकाशाभावात् सूर्य्योऽसन्निवाप्रतिष्ठः स्यात्, चक्षुषश्च प्रतिष्ठा तदनुग्राहके मुख्य प्राण एव, तदभावे चक्षुरिन्द्रियस्याप्यभावात् नहि प्राणहीनः कश्चित् पश्यति। अत एव तत्र बलत्वोपचारः, प्राणेनैव चक्षुरिन्द्रियस्य सामर्थ्यलाभात्,। न चात्र प्राणोऽप्रतिष्ठोऽभिहितः, 'इत्येवं वेषा गायत्र्यध्यात्मं प्रतिष्ठिता' इत्यनेन प्राणस्य गायत्रीरूपवाचश्च शरीरप्रतिष्ठत्वोक्तेः, अध्यात्ममित्यस्याधिशरीरमित्यर्थः, 'एवम् उ एषा' इत्यस्या यथा प्राणस्तथा उ निश्चये एषा गायत्री अध्यात्मं प्रतिष्ठितेति हि ( बृ० ५।१४ ) श्रुतेरर्थः। मुख्यप्राणस्य शरीरप्रतिष्ठितत्वं चासन्यत्वोक्तेः पञ्चवृत्तित्वाच्च श्रुतिप्रसिद्धम्। तस्मात् प्राणो मुख्यप्राण एवेति शङ्कार्थः,'इति चेत्' = यदीयमाशङ्का स्यात्, तदास्माभिरुच्यत इत्याक्षेपलभ्योऽर्थः। किमुच्यते तदाह, अध्यात्मेत्यादिना,–'अस्मिन्' = तुरीयपदस्य ब्रह्मत्वे, 'अध्यात्मसम्बन्धभूमा' = अध्यात्मसम्बन्धस्य भूमा बाहुल्यं वर्त्तते 'हि' = यतः, मुख्य-

प्राणस्य एकैकशरीरेऽध्यात्मसम्बन्धः, ब्रह्मणः सर्वशरीरेषु च युगपन्सम्बन्ध इति बाहुल्यम्, आधिक्यम् तथाचाधिकेन व्यपदेशा भवन्तीति न्यायेन अध्यात्मसंबन्धबाहुल्यं यत्र तद्वाचाय गायत्र्या मुख्यार्थव्यवस्थापनस्य युक्तत्वात्। तस्मात् प्राण इत्यस्य ब्रह्मपरत्वम्। नन्वग्निरित्यस्य का गतिरितिचेत्, तस्यापि ब्रह्मपरत्वम्, कथं तद् इतिचेत्, अग्निसादृश्याद् ब्रह्मण्येवेयमग्निपदप्रयुक्तिरिति प्रतीयते जनकस्योत्तरवाक्यात्; तद्यथा—"यदि ह वा अपि बह्विवाग्नावभ्यादधति सर्वमेव तत् संदहत्येवं हैवंविद् यद्यपि बह्विव पापं कुरुते सर्वमेव तत् संप्साय शुद्धः पूतोऽजरोऽमृतः संभवति" इति। नहि ब्रह्मज्ञानमन्तरेणाजरामृतत्वं संभवति, 'तमेव विदित्वातिमृत्युमेति नान्यः, पन्था विद्यते अयनाय' इति मन्त्रवर्णात्। एतदुक्तं भवति यदेव तुरीयं पदं मुख्यत्वात् बुडिलजनकसंवादे तदेव मुख्यम्, जनकस्याग्निपदेन ब्रह्मोपदेशवत् 'तुरीयं दर्शतं पदं य एष तपति' इत्यनेनापि ब्रह्मोपदेशः; तदस्मिन् गायत्र्या अध्यात्मप्रतिष्ठत्वमाधिक्येन भवति। तथाहि दर्शतं पदं यदि सौरं तेजः स्यात् तस्याध्यात्मप्रतिष्ठत्वं नोपपद्येत, यदि पुनर्ब्रह्म, तस्याध्यात्मसम्बन्धः तत्प्रतिष्ठितत्वरूपः भूम्नैव घटते ब्रह्मण एव जीवरूपेण शरीराधिष्ठानात्। शरीराधिष्ठानमूलैव वाक्प्राणचक्षुरादीनामध्यात्मप्रतिष्ठा। स्वप्रतिष्ठितत्वं तु ब्रह्मणः स्वरूपेणेति न विरोधः। एवञ्च गायत्रीप्रतिपाद्यो यो भर्गः, स एव दर्शतं पदं स एव प्राणस्तत्प्रतिष्ठतया च चक्षुरादिवद् गायत्रीमन्त्रस्याप्यध्यात्मप्रतिष्ठत्वं सूप-

पादितम्, प्रतिपाद्यप्रतिपादकयोरनन्यत्वात् मन्त्रस्य वाक्यत्वाच्च, 'गयांस्तत्रे' इति च युक्तम्, गायत्र्या एव प्राणदेवतात्वेन ब्रह्मरूपत्वात्; अग्निपुरुषाच्च तदभेदेन अग्निपुरुषसम्बन्धादप्यध्यात्मप्रतिष्ठितत्वम्। यच्चोक्तं मुख्यप्राणे चक्षुषो बलत्वोपचार इति तन्मन्दम्, ब्रह्मणो बलशक्तेः स्वाभाविकत्वश्रवणाद्भिन्नैवोपचारं तन्नभात्। तुरीयपदस्य सौरतेजस्त्वे तस्य चाध्यात्मसम्बन्धस्य साक्षादभावात् तदुपक्रमेण 'एवं ह एषा गायत्री अध्यात्मं प्रतिष्ठिता' इत्यसङ्गतं स्यात्, 'एवम्'—इत्यनेन प्राप्तस्यापि तस्योपेक्षणानौचित्यादिति तत्त्वम्।

श्रीचक्रपक्षे तु—ननु युज्येतेदं यदि तत्र श्रुतौ प्राणवायुः प्रक्रान्तः स्यात्, नत्वेवम्; किन्तु प्राणाभिमानिनो देवताविशेषस्यैव तत्र प्रक्रमः, नहि जडस्य प्राणवायोर्वक्तृत्वं सम्भवति, तस्य प्राणस्य तत्र 'तथेति' इति वचनेन, श्रुत्यैव स चेतन इत्युपदिश्यते, न तु जड इत्याशङ्कागर्भं तत्समाधानसूत्रम्, वक्तुरित्यादि। वक्तुरिति हेतुगर्भं सम्बन्धिपदम्। तथाच आसन्यः प्राणो यतो वक्ता='त्वं न उद्गायेति' देवानां प्रार्थने 'तथेति' स्वीकृतिवचनप्रयोक्ता, अतस्तस्य इत्यर्थः, आत्मोपदेशात्=आत्मा चेतन इत्युपदेशात् श्रुत्या प्रतिपादनात् 'न' प्राणवायुरयं न भवति, तस्याचेतनतया वक्तृत्वायोगात्। एतेनैतदुक्तं भवति श्रुतौ 'आसन्यः प्राणः' इति प्रक्रमे सत्यपि, तस्य वचनप्रयोक्तृतायाः श्रुत्यैव दर्शितत्वात् नायमचेतनो वायुः किन्तु तदभिमानी जीवविशेष इति श्रुतितात्पर्य्यम्। इति पूर्व्वपक्षः 'इति चेत्'=इति यदि उच्यत इति शेषः, तन्निरस्यति 'न'=तन्न युक्तम्। 'हि'=यतः

'अस्मिन्'=प्रक्रान्ते प्राणे 'अध्यात्मसम्बन्धभूमा'=अध्यात्मसम्बन्धस्य जीवच्छरीरसम्बन्धस्य बाहुल्यम्,—अस्तीति शेषः। प्राणवायुनैव जीवच्छरीरस्य सम्बन्धो न तदभिमानिना जीवेनेति। तथाहि 'आसन्यं प्राणम्' इत्युपक्रमः, अनेनास्यवृत्तित्वमुपदर्शितम्। 'प्राणो हि वा अङ्गानां रसः तस्माद् यस्मात् कस्माच्चाङ्गात् प्राण उत्क्रामति तच्छुष्यति' इत्यनेन च सर्वाङ्गवृत्तित्वमित्यध्यात्मसम्बन्धस्य बाहुल्यं प्राचुर्य्यं पश्चात्मना प्राणेनैव भवितुमर्हति नतु तदभिमानिना जीवेन। यच्च वक्तृत्वमुक्तम् तदुत्तरश्रुत्यैव समाहितं 'एष उ वा बृहस्पतिः वाग्वैबृहती तस्या एष पतिः तस्माद् बृहस्पतिः' इति यो हि अङ्गानां रसतयोक्तः स एष बृहस्पतिरित्यर्थस्य ततोऽधिगमात्, वागधिपतित्वं प्राणवायोरित्यनेनैव वचनप्रयोक्तृत्वं तत्र सिद्धम्। न हि विगतप्राणः कश्चित् किञ्चिदपि वक्तुं प्रभवति। तस्मात् प्राणवायुरेव तत्र प्रतिपाद्यः, तच्च श्रीविद्याराधनस्यान्यतमं स्थानमिति भावः। प्राणदेवता च उमारूपं ब्रह्म, तत्र दुर्गाबीजमुपदर्शितम्, दुर्गेति नाममन्त्रस्तु त्रिपुरसुन्दरीसाधारणः, दुर्गेऽहं शरणं गत इति प्रार्थनमन्त्रस्य तदाराधने सत्वादतः प्राणाधिकरणेन नास्य विरोध इति ध्येयम्॥ १।१।२९॥

ननु यदि गायत्र्या मुखमेव तुरीयं पदं तच्च ब्रह्मैव, तदभिन्नत्वेन कथं जनकेनोपदिष्टम्, न च सादृश्यादित्युक्तमेवेति वाच्यम्, स्वपदेनोपादाय सादृश्योपन्यासस्य प्रसिद्धेः, मुखं चन्द्र इवेत्यादौ तथा दर्शनात्, अन्यथा लक्षणा स्यात्, इत्याशङ्कायामाह—

शास्त्रदृष्ट्यातूपदेशो वामदेववत् ॥ १।१।३० ॥

'शास्त्रदृष्टया' शास्त्रस्य दृष्टिः शास्त्रदृष्टिः देवदत्तस्य पुत्र देवदत्तपुत्र इतिवत् जन्यत्वं जनकत्वं वा षष्ठ्यर्थः, तया शास्त्रजन्यया दृष्टया दर्शनेन ब्रह्मणः सर्व्वात्मत्वदर्शनेन इत्यर्थः 'वाम देववत्' वामदेवनामकस्यर्षेरिव, स ऋषिर्यथा 'अहं मनुरभवं सूर्य्यश्च' इत्यत्र स्वं सर्व्वात्मभावेन ददर्श तथा जनकस्यापि सर्व्वात्मनो ब्रह्मणोऽग्नित्वेनोपदेशः। अस्यानुव्याख्यानम्,—य आदित्यः, यश्चाग्निः ब्रह्मपादत्वेन न तयोरस्ति विशेषः, तथाहि 'तदेतच्चतुष्पाद् ब्रह्म' इत्युपक्रम्याम्नातं छान्दोग्ये ( ३।१८ ) 'अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः' 'एषोऽग्निस्तपत्येष सूर्य्यः' इति ब्रह्मदृष्टया प्राणस्याग्निसूर्य्यरूपत्वमाम्नातं ( प्रश्न० २ प्र० ) 'तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः। तदेव शुक्रं तद्ब्रह्म' इति च ( श्वेता० ४।२ ) मन्त्रवर्णाः। सन्ति चैवंजातोयानि श्रुत्यन्तराणि। इत्येवं शास्त्रस्य दृष्टया दर्शितपदात्मकसूर्य्यत्वेन श्रुतिप्राप्तस्य ब्रह्मण एव अग्नित्वेन जनकस्योपदेशः। नामभेदेऽपि स्वरूपतस्तस्यैक्यात्। शास्त्रदृष्टौ दृष्टान्तः—वामदेववदिति—वामदेवो यथा अहं मनुरभवं सूर्य्यश्चेति स्वात्मानमेव सर्वात्मस्वरूपं पश्यन् मनुत्वेन सूर्य्यत्वेन च भवनं स्वात्मन एव ददर्श—तथैव शास्त्रदृष्टया जनकोऽप्येवं सूर्य्यत्वेनाग्नित्वेन च ब्रह्मैव दृष्ट्वा उपदिदेश, यदि सूर्य्यत्वेनैव तदुपादास्यत तेन ब्रह्मावबोधो बुडिलस्य नाभविष्यत्, सूर्य्यदेवतैव तेनाभोत्स्यत। तथापि यदि तस्याबोधः स्यादिति फलमपि ब्रह्मज्ञानोचितं जगाद। तुकार आशङ्काव्यवच्छेदार्थः।

श्रीचक्रपद्मे तु—ननु तस्याचिन्मात्रात्मकवायुत्वे दूसंज्ञा नोचिता, चिदचिदुभयात्मकदुर्गाकारब्रह्मण एव तत्संज्ञाभागित्वादित्याशङ्कामपाकरोति शास्त्रेति सूत्रेण । तुकारः शङ्काव्यवच्छेदार्थः, 'उपदेशः'=दुर्गाभावज्ञापकं दूर्नामेत्यादिकं वाक्यं श्रुतेरिति शेषः । 'शास्त्रदृष्ट्या'=शास्त्रस्य वेदस्य या दृष्टिस्तत्स्वदर्शनं तदुपलक्षितं तथाहि पञ्चात्मनोऽध्यात्मसम्बन्धिप्राणस्य प्रकरणे दृश्यते 'एषोऽग्निस्तपत्येष सूर्य्यः' इत्यादिः 'सदसच्चामृतं च यत्' इत्यन्तः प्रश्नोपनिषदि मन्त्रवर्णः । प्राणवायोः सदसदमृतभावः शास्त्रगम्यः, सर्व्वेषां कार्य्याणां कारणानुगमात् । सर्व्वकारणञ्च ब्रह्म । तत्रापि तथैव ब्रह्मभावानुगमात्तस्य दूसंज्ञा । अत्र दृष्टान्तः 'वामदेववत्' वामदेवस्येव, 'अहं मनुरभवं सूर्य्यश्च' इति श्रुतिर्वामदेवस्य यथा ब्रह्मभावमुपदिदेश, तथा इयमपि दूर्नामेति श्रुतिः प्राणस्य ब्रह्मभावमुपादिक्षत् । कार्य्यस्य कारणानुगमदृष्टिस्तु श्रुत्यैव समर्थ्यत इति भावः । १।१।३० ॥

ननु तुरीयं पदं सौरं तेजो मा भूत् जीवरूपसूर्य्यदेवता भविष्यति, तदधिदेवताकचक्षुषो बलत्वेन प्राणो मुख्यप्राणो न ब्रह्म इत्याक्षेपगर्भं तत्समाधानसूत्रमाह—

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् । १।१।३१ ॥**

'जीवमुख्यप्राणलिङ्गात्'जीवस्य देवतारूपजीव-विशेषस्य मुख्यप्राणस्य च यल्लिङ्गं ज्ञापकं तस्मात्, तुरीयं पदं प्राणश्च 'न' न ब्रह्मेति

शेषः, तुरीयं पदं प्राणश्चेत्युद्देश्यवाचकपदद्वयम् अध्याहार्य्यम् । तथाच तुरीयं पदं न ब्रह्म जीवलिङ्गात्, प्राणश्च न ब्रह्म मुख्यप्राणलिङ्गादित्यर्थः । आद्ये लिङ्गन्तु 'परोरजा इति सर्व्वमु ह्येवैष रज उपर्य्युपरि तपति' इति श्रुतिः । सर्व्वं लोकमुपर्य्युपरि तपतीति उपर्य्युपरिगृहं पताकेतिवत् सर्व्वलोकस्य सन्निकृष्टोर्द्धं तपतीत्यर्थे सन्निकृष्टोद्ध्र्वदेशावच्छिन्नत्वं तद्देशमात्रवृत्तित्वं वा नात्ववच्छिन्नस्य विभुनो ब्रह्मणः सम्भवति, तपतीति कृत्यर्थाख्यातयोगाच्च अचेतनं तेजोमात्रं न भवत्येव, तस्माद् देवतारूपः सूर्य्योऽयं सर्व्वलोकादूर्द्धं तिष्ठन्नपि सन्निकृष्ट इव प्रतीयते इति हि तदर्थनिष्कर्षः । 'तत् प्राणे प्रतिष्ठितं तस्मादाहुर्बलं सत्यादोगीयः' इत्यस्यार्थस्तु, सत्यपदार्थश्चक्षुर्बलपदार्थे प्राणे प्रतिष्ठितमिति हेतोः बलं सत्यादोजस्तरम् इति; सा श्रुतिर्मुख्यप्राणलिङ्गम्, यतः प्राणश्चेदत्र ब्रह्म स्यात् तस्य चक्षुष ओजीयस्त्वकथनमयुक्तं सर्व्वातिशायित्वाद् ब्रह्मणः । इति पूर्व्वपक्षः, इति चेदित्यनेन ज्ञापितः, तस्योत्तरमाह— नेत्यादिना । 'उपासात्रैविध्यात्' उपासा=उपासना यया क्रियया पारमेश्वरसान्निध्यलाभो भवति सा; आशयस्तु—मातुर्दूरस्थस्य शिशोरिव भीतिचकितस्य साधकस्य आसा स्थितिर्यया क्रियया उप=मातुरन्तिके सम्पाद्यते सा, सामीप्यश्च सामान्यविशेषतरतमभावेन भ्रूणाभावेनावस्थितिपर्य्यन्तं ज्ञेयमिति तस्याः त्रैविध्यम्, ग्राह्यालम्बनत्वेन ग्रहणालम्बनत्वेन ग्रहीत्रालम्बनत्वेन च ;—ग्राह्यं हि स्थूलं बाह्यतेजोरूपम्, मन्त्रमयशब्दात्मकञ्च, ग्रहणं चक्षुरादीन्द्रियं, ग्रहीता जीवः, साकारं निराकारं ब्रह्म च । तस्मात् उपास-

नात्रैविध्यात्' = उपासनात्रैविध्योपदेशादित्यर्थः । नन्वयुक्तमिदं त्रैवि-ध्यम्, मुख्यप्राणालम्बनोपासनायाः कथितत्रिविधानन्तर्गतत्वात् । नहि मुख्यः प्राणः स्थूलः, न च गृह्यते ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानसाधनमिन्द्रियं, नापि ग्रहीता जीवभिन्नत्वात्तत्त्रैविध्योपपादकं हेतुमाह—'आश्रितत्वात्' चक्षुरादीनामिन्द्रियाणां मुख्यप्राणाश्रित-त्वात् ग्रहणमध्य एव तन्निवेशादित्यर्थतः प्राप्तम्, तथाच मुख्यप्राणं प्रकृत्याम्नातम्—'सोऽभिमानादूर्ध्वमुत्क्रमत इव तस्मिन्नुत्क्रामत्यथेतरे सर्व्वे एवोत्क्रामन्ते, तस्मिन् प्रतिष्ठमाने सर्व्वे एव प्रतिष्ठन्ते तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्व्वे एवोत्क्रामन्ते एवमस्मिंश्च प्रतिष्ठमाने सर्व्वे एव प्रतिष्ठन्त एवं वाङ्मनश्चक्षुः श्रोत्रञ्च' इति ( प्रश्न० २ प्र० ) तदर्थस्तु—मुख्यः प्राण इन्द्रियाणां दर्पेण जाताभिमान उत्क्रमणाय प्रवृत्तः,तदैव वागादीनां कर्म्मेन्द्रिय-ज्ञानेन्द्रियाणां स्वत एव उत्क्रमणमारब्धम् । भवन्तिहि सरघा-चक्रस्थिता मक्षिकाः सर्व्वा एव एकस्याः प्रधानमक्षिकाया अनुसरणशीलाः । सरघाचक्रं बह्वीभिर्मक्षिकाभिराचितं, तत्रैका प्रधानभूता वर्त्तते, सा मधुकृतां मक्षिकाणां राजेति श्रुतावुक्तम्, सर्व्वा एव मक्षिकाः यथा तदधीनास्तथा सर्व्वाणीन्द्रियाणि मुख्यप्राणाधीनानीति भावः। मातृभावे-नोपासनायां त्रिविधोपासना च—तृतीयवर्षात् पञ्चमाब्दपर्य्यन्ते वयसि वर्त्तमानस्य कुमारस्येव या भक्तस्योपासना सा ग्राह्यालम्बना । ग्राह्यं हि काम्यं वस्तु भोज्यपेयपरिच्छदादिरूपं—तदालम्ब्य मातृसान्निध्यस्याकाङ्क्षितत्वात् काम्यलाभोपायश्च वागेव तत्तदेहि

मातरिति शब्दमयी। ग्राह्यस्योद्देश्यतया साधनतया च विषयत्वात्। जन्मनश्च परं द्वितीयवर्षपर्य्यन्तं प्रायेण स्तनन्धयत्वं—स्तनन्धयो हि मातरं पश्यति, मातरं सर्वतस्त्राणकर्त्रीति च मन्यते, भीतो मातरमाश्रयति सर्व्वथा स्पृहयति च मातुरङ्काय, ईदृशभावापत्तिः साधकस्य ग्रहणालम्बनोपासना, दर्शनमननाकाङ्क्षाणां ग्रहणपदार्थेन्द्रियमनोबुद्ध्याश्रितानां विषयत्वात्। पृथगविभाव्यमानस्य मातृगर्भस्थस्येव शिशोरनन्यदृष्टेर्मातृमात्राश्रयत्वाद् यावस्था भक्तस्य सा ग्रहीत्रालम्बना। ग्रहीत्री चिदचिद्रूपा माता सैव तत्रालम्बनभूता। मातृत्वेनाविषयोऽपि स्वरूपेण विषय इत्यालम्बनत्वम्। सुरथः प्रथमोक्तोपासनासिद्धः, प्रार्थितभोग्यलाभात्। समाधिर्द्वितीयोपासनासिद्धः, कामनान्तरविरहितपरमनिर्व्वृतिहेतौ मातुरङ्क इव ज्ञानमात्रेऽनुरागात् तृतीयश्च महर्षिर्वामदेवः, भ्रूणवत्तस्य दर्शितत्वात्। 'गर्भे नु सन् नन्वेषामवेदमहम्' इति ( ऐ० उप० २ अ० ) भ्रूणवन्मातृशरणतयानन्यदर्शनेन चोपासीनो ब्रह्मापरोक्षज्ञानमलभतेत्यर्थस्य गर्भे नुसन्नित्येव ज्ञापकम्। यच्च पुनः ग्राह्यग्रहणग्रहीत्रालम्बनोपासनायाः प्रत्येकं त्रैविध्यमैश्वर्य्येण दुहितृतया मातृतया च तदपीह्रोपासात्रैविध्यादित्यनेन सूचितं तदुपरिष्टाद् विवरिष्यते। 'इह' अस्मिन् गायत्रीब्राह्मणे 'तद्योगात्' तासां त्रिविधोपासनानां 'योगात्' उपायवत्त्वात् प्रतिपादकत्वसम्बन्धेनेत्यादिः, उपायप्रतिपादकत्वादित्यर्थः। गायत्रीमन्त्रो वचनरूपतया 'ग्राह्यः' बहिरिन्द्रियविषयत्वात्, ब्रह्मप्रतिपादकश्चेति तदाश्रयेण ब्रह्मण

उपासनमिति प्राणालम्बनोपासनोपायप्रतिपादनम्, प्रतिपादिता च चक्षुराश्रयेण प्राणाश्रयेण च ब्रह्मालम्बनोपासना, चक्षुरिन्द्रियस्य सूर्य्याधिपतिकत्वात् देवतारूपस्याधिपते र्ब्रह्मणोऽनन्यत्वविचारेण, मुख्यस्य प्राणस्य कारणानुगमाद् ब्रह्मस्वरूपविचारेण चेति। साक्षात् परमात्मधर्म्मं मननिदिध्यासनरूपोपासनोपयोगिनं श्रावयति—'य एष तपति' इति। यदि वा देवतारूपसूर्य्यस्तप्तृतया विवक्षितः स्यात्तथापि तदालम्बननेन ब्रह्मोपासना युज्यत एव, देवताया अपि शास्त्रदृष्ट्या ब्रह्मणोऽनन्यत्वात्। अत एव जनकोपदेशे अग्निस्वरूपत्वकीर्त्तनमित्युक्तमधस्तात्; इति महीत्रालम्बनोपासना प्रतिपादिता। ननु आसन्नोदूर्ध्वदेशे लोकानां प्रतप्तृत्वं कथंनाम परमेश्वरस्य स्यादुपर्य्युपरिशब्दस्य तदर्थकत्वादिति चेन्न अत्रोपर्य्युपरिशब्दस्य न रूढिलभ्योऽर्थः, किन्तूर्द्ध्वोर्द्ध्वमिति योगार्थकत्वात् तथा च 'उपर्य्युपरि तपति' इत्यनेन सर्व्वलोकेषु लोकाद् बहिश्च प्रतप्तृत्वमुक्तं तच्च सर्व्वत्राधिपत्यं परमेश्वरस्यैव युक्तम्, 'सर्वस्येशानः सर्वाधिपतिः' इति (बृ०४।४।२२) श्रुतेः, सूर्य्यस्य प्रतप्तृत्वं च सौरजगत्येव न तु तद्बहिः। तद्बहिरपि प्रतप्तृत्वं ब्रह्मण एवेति भावः। एवमेव शरीरके भगवदाचार्य्यचरणाः। सर्व्वाधिपतेः श्रीरामस्यायोध्यापतित्वनिर्देशवत्, सर्व्वौजः प्रधानस्य ब्रह्मणश्चक्षुरपेक्षयौजस्तरत्वनिर्देशो यद्यपि नानुपपन्नस्तथाप्येवमुपदेशस्य जनकबुडिलसंवादमयाख्यायिकास्थस्य विदधात्वर्थोपासनार्थत्वात् तदवबोधनाय सूत्रमिदमुपन्यस्तम्। अस्यागमसम्मतरहस्यार्थस्तु—इह ब्रह्मण एवोपासनात्रैविध्यं

प्रदर्शितम्—दिव्यवीरपशुभावभेदात्, 'उपर्य्युपरि तपति' इत्यनेन दिव्यभावः सूचितः, चक्षुरित्यनेन पशुभावः, बाह्यदर्शनप्रधानत्वात् पशूनां, बलमित्यनेन वीरभावः। उपासनाप्रकारश्चाकराच्छ्रीगुरुवचनाच्चावगन्तव्यः। निर्विशेषब्रह्मोपासनाया अपि नादानुसन्धानमनननिदिध्यासनैस्त्रैविध्यं बोध्यम्।

श्रीचक्रपक्षे तु—प्राणस्य यन्त्राराधनालम्बनत्वं श्रुत्या प्रदर्श्यते—तत्र जीव एवालम्बनः, अतएव सुन्दर्य्यास्तरुण्या वराङ्गमेव श्रीचक्रम्, तत्र श्रीत्रिपुरासुन्दर्य्याराधनविधानार्थेयम् उद्गीथब्राह्मणस्था प्राणाख्यायिकेत्याशङ्कापर्य्यवसायिपूर्व्वपक्षतत्समाधानसूत्रमाह— जीवेति। 'जीवमुख्यप्राणलिङ्गात्'=मुख्यप्राणो लिङ्गं मुख्यप्राणलिङ्गं जीवस्य मुख्यप्राणलिङ्गं जीवमुख्यप्राणलिङ्गं तस्मात्। 'न'=प्राणालम्बनत्वं न युक्तम्। अयं भावः, यद्यपि मुख्यप्राणः प्रक्रान्तः, अध्यात्मसम्बन्धभूमा च तस्मिंस्तथापि स जीवस्यैव लिङ्गं—स्वातन्त्र्येण तस्यानधिष्ठानात् प्राणस्य प्राणिधर्म्मत्वात्। अतः प्राण्येव आलम्बनतयात्र प्रतिपाद्यते—न तु प्राणः, प्राणिन आलम्बनत्वन्तु सुन्दर्य्यास्तरुण्या वराङ्गस्यैव श्रीचक्रत्वात्। समयिमतमाश्रित्यैतन्निरस्यति इति चेत्, न, 'उपासात्रैविध्यात्' श्रीचक्रोपासनायास्त्रिविधत्वात्, पूर्व्वकौलोत्तरकौलसमयिभेदात्; 'आश्रितत्वात्' प्राणाश्रितत्वात् यद्वा आश्रितत्वात् शास्त्रस्येति शेषः, शास्त्रदृष्ट्येतिप्रकृतत्वात्; शास्त्रं वेदः, शुभागमपञ्चकं, तदविरुद्धं तान्त्रिकश्रुतिवचनं च। 'इह' समयिषु 'तद्योगात्' तस्य प्राणालम्बनस्य योगात्=युक्तत्वात्। अथवा योगात् मेलनात्

ऐक्यसाधनाद् इत्यर्थः, चतुर्व्विधस्य षड्विधस्य वा प्रागुक्तस्य ऐक्यस्यानुसन्धानादिति यावत् तदालम्बनेन सहस्रदलकमले संयोगाद्वा। एतेनैतदुक्तं भवति, मुख्यप्राणो जीवस्य लिङ्गं भवतु, किन्तु तेन तस्य न स्वार्थबाधः। प्रत्युत स्वार्थद्वारैव तस्य जीवलिङ्गत्वमेव भवेत् तदपहानेन कयानुपपत्त्या लक्षणा स्वीक्रियते ? मुख्यप्राणे आराधना न सम्भवतीति चेत्, माभूत् आराधनप्रकार-भेदाश्रयिणां कौलानाम्, समयिनां तु, तत्राराधनं प्रधानतयैव युज्यते, श्रूयते हि 'यत् कुमारी मन्द्रयते, यद्योषिद् यत् पतिव्रता। अरिष्टं यत् किञ्च क्रियते अग्निस्तमनुवेधति।' इति, सनत्कुमार-संहितायाम् 'कुलयोषित् कुलं त्यक्त्वा राति विष्णोः प्रभेदने' इति योगरूपत्वात्तदाराधनस्य। वामकेश्वरमहातन्त्रे च 'भुजङ्गाकाररूपेण मूलकन्दं समाश्रिता। शक्तिः कुण्डलिनी नाम बिसतन्तुनिभाशुभा॥ पद्मासनगतः स्वस्थो गुदमाकुञ्च्य साधकः। वायुमूर्द्ध्वगतिं कुर्व्वन् कुम्भकाविष्टमानसः॥ वाय्वाघातवशादग्निः स्वाधिष्ठान-गतो ज्वलन्। ज्वलनाघातपवनाघातैरुन्निद्रितोऽहिराट्। रुद्रग्रन्थिं ततो भित्त्वा विष्णुग्रन्थिं भिनत्त्यतः॥ ब्रह्मग्रन्थिं च भित्त्वैव कम-लानि भिनत्ति षट्। सहस्रकमले शक्तिः शिवेन सह मोदते। सा चावस्था परा ज्ञेया सैव निर्व्वृतिकारणम्' इत्युक्तम्। प्रागुपदर्शित-श्रुतौ 'कुमारी' 'पतिव्रता' 'योषित्' इतिपदत्रयं कुण्डलिन्या अवस्था-त्रयबोधनाय संज्ञाभेदः। तदर्थस्तु वामकेश्वरमहातन्त्रवचनेन स्पष्टी-कृतः। मातृकाचक्रस्य प्राणाधीनोत्पत्तिस्थितिकत्वात् प्रागुक्तैक्यानु-सन्धानेऽपि प्राणस्योपयोगात् समयिनामाराधने प्राणालम्बनताया

आवश्यकत्वम्। परं तन्मते उत्तमाधिकारिणां बाह्याराधनाभावात् बाह्यश्रीचक्रमेव नास्ति। निम्नाधिकारिणां तत्सत्त्वन्तु यथास्थानमुपपादितमिति संक्षेपः।

शुद्धविद्या चिदाकारा चिदानन्देन सङ्गता।
षड्विंशतत्त्वतां धत्ते एषा समयिनां स्थितिः॥
प्रकृतिः शुद्धविद्या स्यात् सत्त्वांशेन चिदाकृतिः।
अन्यांशेनाचिदप्येवं नयश्चेत् तत्समा वयम्॥
तथापि तत्र श्रीचक्रोपासनायां विशिष्टता।
यास्ति सा दर्शिता पादे प्रथमेऽस्मिन् समासतः॥
द्वितीयपादमारभ्य यावद्ग्रन्थसमापनम्।
सर्व्वशाक्तोचिता व्याख्या समयिभ्योऽपि रोचताम्॥
उमा दुर्गा हैमवती त्रिपुरा चाद्रिजा सती।
अभिन्नरूपा भिन्ना वा स्वरूपान्नैव भिद्यते॥
यच्छ्रीचक्रं तदेव स्यात् त्रिपुराम्बा महेश्वरी।
पुरुषप्रकृतिद्वन्द्वमेलनात्मा वपुष्मती॥
इमं सिद्धान्तमाधाय हृदये जगदम्बिकाम्।
बुध्यध्वं सूत्रजातेन शक्तिभाष्यसमाश्रयात्॥१।१।३१॥

इति प्रथमे निरूपणाध्याये साकारनिराकारब्रह्मनिरूपणं नाम प्रथमः पादः।



## प्रथमेऽध्याये—द्वितीयः पादः ।

संक्षेपेण उमोपासनं यदुक्तं तत्राक्षेपपरिहाराय—श्रुत्यन्तर-प्रमाणानुगततद्विस्ताराय च द्वितीयः पादः प्रारभ्यते ।

ननूमाया उपासनविधिस्तु न साक्षात् श्रूयते, श्रूयते पुनः 'मनो ब्रह्मेत्युपासीत' 'सर्व्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्यादिः, नच दहराद्युपासनविधिरस्ति सचोमोपासनाविधितयापि पर्य्यवस्यतीतिवाच्यं, तस्य परम्परारूपेण ग्राह्यत्वात् । तस्मादुमो-पासनं साक्षाद् विधिशून्यतया त्रिविधोपासानन्तर्गतमित्याशङ्का-समाधानाय सूत्रमाह—

( उमाधिकरणम्—१ । )

**सर्व्वत्र प्रसिद्धोपदेशात् । १।२।१ ॥**

सर्व्वत्र श्रुतिषु स्मृतिषु च 'प्रसिद्धस्य' प्रकृष्टं निर्णीतस्य 'अ—उ—म' इति वर्णत्रयस्य य 'उपदेशः' तदर्थाश्रितोपासनविधि-स्तस्मात् अ—उ—म इति वर्णत्रयं प्रणवभावमापन्नं ब्रह्मणो बोधकम् । 'ॐ खं ब्रह्म' 'तत् ते पदं संग्रहेण ब्रवीम्योम्' इत्या-दिश्रुतेः, 'ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति स्मृतेश्च। उमेत्यभिधानञ्च समुदितेन तेनैव वर्णत्रयेण । केवलं व्यत्यस्तेनेति विशेषः, ब्रह्म च उमा चैकशब्दार्थः । तत्प्रत्येकवर्णार्थावलम्बनेन दर्शितं, तज्जलानिति तद्रूपेणसाक्षाद् यद् ब्रह्मोपासनविधानं तेनैवो-मोपासनस्य स्पष्टं लाभात् प्रतिवादिनामाशङ्का न युक्तेति भावः ।

ननु तज्जलानित्यनेन कथमुमोपासनस्य लाभ इति चेदुच्यते—'अकारो भगवान् विष्णुरुकारश्च पितामहः। मकारश्च स्वयं रुद्रो विज्ञेयो ध्यानतत्परैः।' ( शिव–पु० सनत्कुमार० ३२ अ०८ ) इति वर्णार्थविवरणे स्थिते 'ब्रह्मा वै वामपार्श्वे तु दक्षपार्श्वे तु केशवः। उभाभ्यां मध्यतो रुद्रस्तिष्ठति ह्येकविग्रहः।' इति च ( शि० स० ३२।३ ) स्मृत्या अधिदैवतविचारे आदौ उकारात्मकस्य सृष्टिकर्तुर्ब्रह्मणः, अन्ते अकारात्मकस्य पालनकर्तुर्विष्णोर्मध्ये मकारात्मकस्य प्रलयकर्त्तु रुद्रस्य निर्देशात् प्रणवस्यैव वर्णव्यत्यासेनोमाकारवर्णक्रमेण ध्यानं गम्यते। सृष्टिसंहारस्थितिकर्त्तृदेवत्रयस्वरूपवर्णस्य यथा उमासंज्ञायां क्रमेण स्थितिः, तथैव तज्जलानित्यत्र 'ज' शब्देन तस्य जननापादानत्वं लशब्देन लयकर्त्तृत्वं अन्शब्देन जीवनाख्यपालनकर्त्तृत्वञ्चेति क्रमेण निर्दिष्टमित्यविशेषात्। तज्जलानिति ब्रह्मोपासनविधिरुमोपासनविधिरेव। ब्रह्म प्रकृत्य तत्रोक्ततद्वाचकोमाशब्दघटकवर्णत्रयं प्रातिलोम्येन तदर्थं विवृण्वती श्रुतिराह "तस्यैष आदेशो यदेतद् विद्युतो व्यद्युतदू आ ३ इतीन्यमीमिषदा ३ इत्यधिदैवतम्; अथाध्यात्मम्, यदेतद्गच्छतीव मनोऽनेन चैतद् उपस्मरत्यभीक्ष्णं सङ्कल्पः, तद्ध तद्वनं नाम तद्वनमित्युपासितव्यम्" इति। ( केन० ४।४–६ ) एतदनुव्याख्यानम्—तस्य = प्रक्रान्तस्य उमाकारेण प्रादुर्भूतस्य ब्रह्मणः, आदेशः = उपासनोपदेशः, एषः = वक्ष्यमाणरूपः, यत् = यथा, एतद् ब्रह्म, 'विद्युतो व्यद्युतत्' = विद्युतो यथा विद्योतन्ते तथा व्यद्युतत् = विद्युद्वत् स्फुरितमभूत्-प्रचकाशे—अयं क्षणिकप्रकाशो

जाग्रत्–सृष्टिः तदवच्छिन्नो जीवः आ३ इत्यस्यार्थः, प्रकरणाद् आवर्णोऽयमुमाशब्दघटकः, ननु कथमुमाशब्दान्तिमवर्णार्थवर्णनपरमिदमित्युपपद्यते, क्रमबाधेनान्तिमस्य प्रथमं विवरीतुमयुक्तत्वादितिचेन्न, शाब्दक्रमादार्थक्रमस्य बलवत्ताया मीमांसकसम्मतत्वादार्थक्रममाहृत्य तथोपपादनात् । तथाह्यनन्तरं श्रुतिवाक्यम् "इतीन्न्यमीमिषत् आ३" इति ; इति = उक्तार्थकः, आ३ = आकारः इत् = एव, न्यमीमिषत् = विरामं प्रापितवान् ।—एतेनास्यान्तिमवर्णत्वं स्पष्टीकृतम् । प्रणवे अकारस्य ह्रस्वत्वमिव नात्र तथात्वमित्यावेदयितुं प्लुतनिर्देशः अत्वेन पुनरेकत्वमित्यर्थानुगमः प्रातिलोम्याश्रयश्च प्रथमोपदेशेन प्रणवसाम्यसूचनार्थः, माण्डूक्योपनिषदि ओङ्कारव्याख्याने तथा दर्शनात्—'जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा' इति ( मा० ६ ) तस्य च आकाराद्यरत्वमपि तत्राम्नातम् हेतुवन्निगदेन 'आप्तेरादिमत्त्वाद् वा' इत्यादिना । यत्रास्य आकारस्यान्तिमवर्णत्वं स ह्युमाशब्दः, तद्वाच्यस्य ब्रह्मण इन्द्रमधिकृत्य प्रादुर्भावात्, अधिदैवतरूपेण तन्निर्देशः । अथ च, बहु शोभमानामिति प्रागुक्तोमाविशेषणमेतेन व्याख्यातम्, विद्युतः प्रकाशोऽपि तदीयैव शोभा, तन्निमेषणं च तदिच्छयैवेति विद्युदालम्बनेन तदुपासनार्थोऽयमर्थवादः । 'विद्युद्ब्रह्म' इत्यन्यत्रापि ( बृ० ५।७ ) श्रूयते । प्रकाशत्वादधिदैवतमित्युक्तिरपि तत्रोपपद्यते । आकारं निरुच्य तत्पूर्वस्थमकारमाह "यदेतद्गच्छतीव च मनः" इति ; मनः एतद् ब्रह्म गच्छतीव प्राप्नोतीव । एवंच, सुषुप्त्यवस्थो जीवो मकारार्थः ।

'स्वमपीतो भवति' इति ( छा० ६।८ ) श्रुत्या ब्रह्मणि तस्य लय उक्तः, तदीयं व्याख्यानमिदं गच्छतीवेति,—नायं वास्तवो लयो ब्रह्मप्राप्तिर्वा, किन्तु तत्सदृशः, वास्तवलये पुनरावृत्त्यभावप्रसङ्गात्। मनःशब्दो जीवार्थः, 'कतरः स आत्मा येन वा पश्यति येन वा शृणोति' इत्युपक्रान्तप्रश्ने 'यदेतद्धृदयं मनश्चैतत्' इति प्रतिवचनश्रुतेः ( ऐ० ३।१।२ ) मकारस्य सुषुप्त्यवस्थजीवार्थकत्वं माण्डूक्ये श्रूयते 'सुषुप्तस्थानः प्राज्ञो मकारः' इति। मन इत्यस्य मकारो उमा शब्दस्य प्रातिलोम्येनापि द्वितीयः, तथा तदर्थे उपदिष्टः। प्रातिलोम्येन तृतीयम् उकारमाह 'उपस्मरत्यभीक्ष्णं संकल्पः' इति, सङ्कल्पः सङ्कल्पात्मा अभीक्ष्णं पुनः पुनः 'उपस्मरति' स्मरणत्वेनाननुभूयमानत्वमुपशब्देन द्योतितम्, उपस्मरणं च स्वप्नः, तदवच्छिन्नो जीव उकारार्थो भवति। 'अनेन चैतत्' अनेन=मनसा मनोवच्छिन्नतया एतद्=ब्रह्म गच्छतीवेति चकारार्थः, ब्रह्मणश्चलनाभावेऽपि उपाधेर्मनसः क्रियावत्तया दर्पणचलने प्रतिबिम्बसूर्य्यचलनवदेतच्चलतीव। ततश्चायमेव सङ्कल्पः। स हि जीवादभिन्न इति श्रुतिराह "स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति सर्वाण्येतानि प्रज्ञानस्य नामधेयानि भवन्ति" इति ( ऐ० उ० ३।२ ) 'प्रज्ञानं ब्रह्म' इति च। मनउपाधिकं ब्रह्म जीवस्तस्यैव प्रज्ञानमिति सङ्कल्प इति च नाम, धर्म्मधर्म्मिणोरभेदात्। तथा च माण्डूक्योपनिषदि प्रणवस्य यथा वर्णविवरणमुमाशब्देऽपि तथा। प्रातिलोम्येनोमाशब्दघटकवर्णत्रयं विवृत्य प्रकृतं रूपमाह 'तद्ध तद् वनं नाम' इति,

तत्=ब्रह्म 'ह' इति प्रसिद्धौ तत्=तस्मात् वर्णत्रय-समावेशात्, वनं नाम=उमानाम ; ननु वनमित्यस्य कथमुमारूपत्वम् इति चेद् रहस्यमिदमप्युच्यते—उश्च अनम् च इति समाहारद्वन्द्वेन वनमिति । 'अनम्' इति तु अन्तम् अवसानं करोतीति णिचि क्विप्प्रत्यये संयोगान्तलोपाद् 'अन्'=अवसानकारी अवर्णो यस्य सः 'म्' मकारः, अत्र मकारोऽस्वरो निर्दिष्टः पूर्वस्वराश्रयेण तस्याप्युच्चारणे बाधाभावात्, तथा च उकारश्च अवर्णावसानं मस्वरूपं व्यञ्जनमात्रं चेतिमिलितमुमापदं तत् प्रतिपाद्यमिति फलितम् । तद्=ब्रह्म 'उपासितव्यम्' । इति व्यक्त उमोपासनाविधिः । 'तद् वनमिति' इति कारेण प्रतिपाद्यवस्तुलाभात्, ननु माण्डूक्योपनिषत्प्रमाणेन कथमेतद् घटते तत्र अकारोकारमकाराणां क्रमोक्तेः, इति चेन्न, मातृभावेनोपासनाया अत्रैव विशेषात् । माण्डूक्योपनिषदि सन्न्यासिध्येयत्वेन तथोपन्यासात् । तथाहि पूर्व्वस्मिन् जन्मनि मरणसमये "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्" इति श्रीगीतया प्राणत्यागसमयस्य स्मृतिविशेषसंवलितत्वकथनेन स्वप्नतुल्यत्वं सूचितम् । ततश्च या अभिलाषोपनीतसुखस्वरूपस्वर्गभोगात् बहिरिन्द्रियव्यापाररहितत्वेन स्वप्नायमानात् सम्प्राप्तमारभ्य मातृगर्भे चेतनसञ्चार प्राक्क्षणपर्य्यन्तं समप्रलया सुषुप्तिस्तदनन्तरं मातृगर्भान्निःसरणं यावदर्द्धलया, जागराद्यक्षणश्च मातृगर्भान्निःसरणक्षणः, एतदवस्थात्रयमध्यात्मविचारे चोमाशब्दघटकवर्णत्रयेण प्रतिपाद्यते । एतदवस्थात्रयं बुध्यमानस्य मातृत्वेन परब्रह्मोपासीनस्य लब्धसिद्धेस्तुरीयलाभो भवति

नत्वत्राभमान्तरापेक्षेति तदेव तुरीयं प्लुतस्वरमात्राविशेष-व्यपदेशेन सङ्केतितम्। यस्य "शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते" इति माण्डूक्ये व्याख्या। ततश्च प्रणवोचितकलापञ्चकवत्त्वमपि उ म अ ३ स्वरूपतया लभ्यते। न च जाग्रदवस्थोत्तरमेव तुरीय-निर्देशोऽयुक्तः, माण्डूक्यश्रुतिविरुद्धश्च इतिवाच्यम्, अवस्थात्र-यस्य मिथोभेदात् तृतीयपर्य्यन्ते विशेषसत्त्वेन सर्वानुगते निर्विशेषे ब्रह्मणि तदसत्त्वमिति बोधयितुं तथा निर्देशात्, माण्डूक्यश्रुतेः सन्न्यासिनां ध्यानोपदेशपरत्वस्योक्तत्वाच्च। प्लुतस्वरस्य सप्रयोजनत्वादेव 'उम' इत्यस्यैव 'ॐ' इति प्रणवव्यत्यासरूपत्वेऽपि उमा इत्याकारान्तनिर्देशः। एतदभिप्रे-त्योक्तम् 'अकारश्च उकारश्च मकारश्चेति हि त्रयः। एकैकशस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः।' इति ( शि० सन० ३२ अ० २७ श्लोके ) 'ॐ' इत्येकाक्षरे मन्त्रे स्थितः सर्व्वगतः शिवः। यदस्ति वस्तु तत् सर्व्वं गुणप्राधान्ययोगतः। समस्तं व्यस्तमपि च प्रणवार्थं प्रचक्षते' इति च ( शिव० कैलास० सं० ३ अ० ४।५ ) स्मृतौ, 'समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम्' इति च महिम्नःस्तोत्रे। तथा चोमाप्रणवयोरेकवर्णावयवत्वमेकार्थत्वं च, उपासनविधिश्च तथैवेति परमार्थः। १।२।१ ॥

ननु 'मनो ब्रह्मेत्युपासीत' इति वत् ब्रह्मभिन्ने कस्मिंश्चिज्जीवे ब्रह्मत्वादिकमारोप्योपासनविधिरयमित्याशङ्कायामाह—

**विवक्षितगुणोपपत्तेश्च ।१।२।२ ॥**

भगवत्या श्रुत्या विवक्षिता ये ब्रह्मणो गुणास्तेऽस्मिन् उपास-

नाविधिबोधिते उपास्ये उपपद्यते यतः, अतः 'तज्जलानिति शान्त उपासीत' इति विधिबोधितमुपास्यमुमाख्यं ब्रह्मैव । 'प्राणशरीरो भारूपः सत्यसङ्कल्पः' इति 'सर्व्वकर्म्मा सर्व्वगन्धः सर्व्वरस इति च ( छा० ३।२४ ) गुणा विवक्षितास्तेहि न जीवे कथिदपि सम्भवन्ति, सम्भवन्ति तु चिदचिदात्मकब्रह्मणि, यत्र सतीयमिति निरुक्तिप्रतिपाद्यत्वमस्ति । अन्वयिमात्रहेतुनिर्देशसमाप्तिसूचक-श्चकारः । १।२।२ ॥

व्यतिरेकिहेतुमाह—

## अनुपपत्तेस्तु न शारीरः ।१।२।३ ॥

'शारीरः' शरीराभिमानी देवताविशेषो 'न' उपास्यतया विधिबोधितो 'न' इत्यर्थः । तत्र हेतुः 'अनुपपत्तेः' विवक्षितगुणानां प्राणशरीरत्वादीनां तत्रायोगादित्यर्थः ।१।१।३ ॥

ननूमाया अपि शरीरश्रुत्या शारीरत्वं स्यादित्याशङ्कां छलतः परिहरन् व्यतिरेकिहेत्वन्तरमाह—

## कर्म्मकर्तृव्यपदेशात् १।२।४ ॥

कर्म्म च कर्त्ता चेति 'व्यपदेशः',=श्रुतिवचनं तस्मात् न शारीर इत्यनुकृष्यते । स च व्यपदेशः 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति (कठ० १।२।२२) नहि जीवविशेषस्य प्रव-चनाद्यलभ्यत्वं नापि तदेकमात्रकर्तृकं स्वतनुविवरणं तस्यापि ईश्वर-

तन्त्रत्वात्। अयं भावः, सत्यपि उमारूपब्रह्मणः शरीरसम्बन्धे न तत्र शारीरत्वं वर्त्तते शरीराभिमानिन एव शारीरत्वादनादिशरीरप्रवाहसम्बन्धित्वाच्च। उमायाः शरीरं साधकदम्पत्योर्हिमालयमेनकयोरदृष्टवैभवेन तस्या एव कृपया सम्पादितम्, नापि उमायास्तस्मिन् परिच्छिन्न एवाहमस्मीत्यभिमानः 'मया सोऽन्नमत्ति यो विपश्यति यः प्राणिति' इति मन्त्रवर्णात् 'एकैवाहं जगत्यत्र द्वितीया का ममापरा' इति स्मृतेश्च ॥ १।२।४ ॥

ननु भवतु प्रणव एवोमा तदर्थानुगमेन च ब्रह्मोपासनविधिर्नैतावता तु मातृभावेनोपासनं लभ्यते तत् कथं तस्य वैधत्वमित्याशङ्कायामाह—

शब्दविशेषात् ।१।२।५ ।

'शब्दविशेषः'—शब्दाः श्रुतिवाक्यानि तेषां 'विशेषः' इतस्ततःस्थितानामेकार्थपरत्वं तस्मात् मातृभावेनोपासनं गम्यते इति वाक्यशेषः। तथाहि 'तज्जलानिति शान्त उपासीत' इति सामान्यविधिवाक्यानन्तरं कथमित्याकाङ्क्षायां क्रतुं कुर्वीतेति विध्यन्तरम्; अत्र क्रतुर्यदि अविचलः प्रत्ययो यदि वा प्रसिद्धार्थो यज्ञः, उभयथैव प्राणाग्निहोत्रमपि लभ्यते, तस्याविचलप्रत्ययसम्पाद्यत्वात् यज्ञरूपत्वेनोक्तत्वाच्च तद् यजनमपि ब्रह्मण उपासनं तथाभाववतां भवति, तस्यार्थस्य वैश्वानराधिकरणे प्रतिपादयिष्यमाणत्वात्। अत्र श्रुतिराह—'यथेह क्षुधिता बाला मातरं पर्य्युपासते। तथा सर्व्वाणि भूतान्यग्निहोत्रमुपासते इति ( छा० ५।२४ खण्डे ५ )' 'सर्व्वाणि भूतानि' इति 'वनस्पतयः सत्रमासते सर्पाः सत्रमासते'

( पूर्व्वमीमांसादर्शने १ अ० वेदाप्रामाण्याक्षेपाधिकरणे शाबरभाष्यधृतश्रुतिः ) इति वद् अर्थवादः, तथाच मातृभावेनाग्निहोत्रोपासनं यदि सर्व्वभूतसाधारणं तदा द्विजानां तेषु च ब्राह्मणानां तदवश्यमेव कर्त्तव्यमिति भावः । तथा चात्रैव विधिः, नतु तस्य सर्वभूतसाधारण्याय इति बोध्यम् । उपासकस्य क्षुधितबालतुल्यत्वमुपास्यस्य मातृतुल्यत्वमनेन ज्ञापितम् । ईदृग्भावमाश्रित्योपासनं मातृभावेनोपासनमुच्यते । एवं हि तज्जलानित्युपासनविधिर्मातृभावेनोपासनविधितया पर्य्यवस्यति । न च जगत् सर्व्वं विद्वद्भोजनेन तृप्तं भवतीत्यर्थकोऽयं मन्त्र इति वाच्यम्, तस्यापि स्तुत्यर्थवादरूपत्वस्याभ्युपगन्तव्यतया प्रधानस्यैव तद्रूपताया अभ्युपगन्तुं युक्तत्वात् । प्रधानञ्चात्र वैश्वानरोपासनं तस्य प्रक्रमात् । वैश्वानरश्च ब्रह्मैवेति हि सूत्रेणोपपादयिष्यते । अथवा न शारीर इत्यनुवर्त्तते, तत्र हेत्वन्तरं शब्दविशेषादिति । शब्दविशेषस्तान्त्रिकी श्रुतिः, उमादेवीत्युपक्रम्य 'एवं स्थितासि देवि त्वं त्रैलोक्यरक्षणात्मिके । रक्ष मां सर्व्वगात्रेषु दुर्गे देवि नमोऽस्तु ते' इति कुब्जिकातन्त्रवचनम्, ब्रह्मणो लिङ्गं हि त्रैलोक्यरक्षणम्, 'सर्व्वस्य शरणं बृहत्' इति ( श्वेता० ३।२७ ) 'सर्व्वस्याधिपतिः·········एष भूताधिपतिरेष भूतपाल इत्यादि ( बृ० ४।४ ) श्रुतेः । तथा च तान्त्रिकश्रुत्या तत्स्वभावत्वस्य दुर्गायां बोधनात् न शारीर इत्युक्तम् । १।२।५ ॥

विशेषाभिधित्सया सूत्रान्तरमाह—

स्मृतेश्च । १।२।६ ।

'च' किञ्च स्मृतिवचनात् मातृभावेनोपासनं गम्यते । 'सन्द-

र्शनार्थमम्बाया नदीपुलिनसंस्थितः, इति 'प्रसीद मातर्जगतोऽखिलस्य' इति 'या देवी सर्व्वभूतेषु मातृरूपेण संस्थिता' इति च सप्तशतीस्मृतेः। यदि पूर्व्वसूत्रे 'न शारीरः' इत्यस्यानुवृत्तिपक्ष आद्रियते, तदास्य तदनुगतोऽर्थः स्वीकार्य्यः। स च 'एकैवाहं जगत्यत्र द्वितीया का ममापरा' इति 'सैव सर्व्वेश्वरेश्वरी' इति च सप्तशतीस्मृतेः। 'शिवोमा परमा शक्तिरनन्ता निष्कलाऽमला। शान्ता माहेश्वरी नित्या शाश्वती परमा' इत्युपक्रम्य 'प्रधानपुरुषेश्वरी' इति कौर्म्मस्मरणाच्च (पूर्व्वभा० १९ अ०) न शारीरा भवितुमर्हतीति। १।२।६॥

ननु प्रागुक्तस्मृतिवचनं देवताविशेषात्मकजीवस्यैव स्तुतिरूपम्, यतः स्मृतेरेव उमाया जीवत्वं सिध्यतीति शङ्कागर्भं समाधानसूत्रमाह—

**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न, निचाय्यत्वादेवं व्योमवच्च। १।२।७।**

'अर्भकौकस्त्वात्'—शिशुदेहाश्रितत्वात्, 'तद्व्यपदेशात्' तस्मात् शिशुशरीराश्रितत्वाद् यो व्यपदेशः=विरुद्धोपदेशः मातुर्निषेधवचनं तस्माच्च यद्वा व्यपदेशः=उमेति संज्ञा तस्माच्च 'न' उमाया ब्रह्मत्वं न, अपि तु जीवत्वम्, तथाच मात्स्ये स्मर्य्यते 'उमेति चपले पुत्रि! नक्षमं तावकं वपुः। सोढुं क्लेशस्वभावस्य तपसः सौम्यदर्शने।' चपले इति बाल्यबोधकं सम्बोधनं, तपः सहनासामर्थ्यवचनञ्च तत्समर्थकम्। तेनोमाया अर्भकौकस्त्व-

मवगम्यते। नन्वत्र अर्भकत्वे वक्तव्ये कथमर्भकौकस्त्वमुक्तमिति चेत्, नैतदपार्थम्; अर्भकत्वस्य देहवृत्तितया जीवे तद्बाधात्तद्देहाश्रितत्वस्य तु जीवे बाधाभावात्। 'उ'=भो 'मा' तपः कार्षीरित्यर्थकमुमेति तां प्रति मातुर्व्वचनम्, यतस्तावकं वपुः क्लेशासहभावस्य तपसः सोढुं न क्षममित्यपि वचनं मात्स्यवियुक्तमनुश्रूते तत्र भवान् कालिदासः,—'उमेति मात्रा तपसे निषिद्धा पश्चादुमाख्यां सुमुखी जगाम' इति। हैमवतीमिति श्रुतिरपि हिमवद्गिरि-दुहितृत्वबोधिका, न खलूमाया ब्रह्मत्वे तद् घटते—तस्मादुमा न ब्रह्म अपि तु जीव एव ब्रह्मणि बाल्याद्यसम्भवात् सर्व्वशक्तिभूते तस्मिन् तपःसहनासामर्थ्यमाकलय्य मातृप्रतिषेधस्यायुक्तत्वाच्च, 'इति चेत्' इति यद्युच्येत तत्रोत्तरं 'न' इत्यादिकम्, 'निवाच्यत्वात्'=दृश्यत्वात् 'एवम्'=अर्भकौकस्त्वम्,—न तु तद्ब्रह्मत्वम्। स्मर्य्यते हि कौर्म्मे "पश्य बालामिमां राजन् राजीवसदृशाननाम्। हिताय सर्व्वभूतानां जाताश्च तपसावयोः' इति हिमालयं प्रति मेनाया अर्भकौकस्त्वेन दृश्यत्ववचनम्, ननु भवतु तेन प्रकर्षस्तस्याः, ब्रह्मत्वन्तु न सिध्यतीत्यत आह 'व्योमवच्च' इति। न च केवलमेतावत् स्मृतिवचनं किन्तु 'व्योमवत्' व्योमशब्दविशिष्टं वचनं 'च' अपि अस्तीति शेषः, यथा तत्रैव "व्योमसंज्ञा पराकाष्ठा सेयं हैमवती मता। शिवा सर्व्वगतानन्ता गुणातीतातिनिष्कला। एकानेकविभागस्था ज्ञानरूपा' इति, अत्र हैमवत्या ब्रह्मत्वं स्पष्टं व्योमेति ब्रह्मणः संज्ञा, 'व्योम्नि प्रतिष्ठितः' 'आकाशात्मा' 'खं ब्रह्म, 'आकाश आनन्दः' इत्यादौ व्योमशब्दस्य तद्वाचक-

शब्दस्य च ब्रह्मणि प्रयोगात्। परा काष्ठा इत्यपि ब्रह्मैव 'सा काष्ठा सा परा गतिः' इति श्रवणात्, सर्व्वगतं च ब्रह्म, 'सर्व्वगतश्च नित्यः' इति श्रवणात्। 'अनन्ता'—अनन्तं 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुत्युक्तं ब्रह्मस्वरूपम्; ब्रह्म गुणातीतम्, 'निर्गुणश्च' इति श्रुतेः; निष्कलम्, 'एषोऽकलोऽमृतः' इति ( प्रश्न० ६।५ ) श्रुतेः, ज्ञानस्वरूपश्च ब्रह्मैवेति 'सत्यं ज्ञानम्' इति श्रुतेः; एकादि-विशेषणान्यपि ब्रह्मरूपतामेव तस्या गमयन्ति। व्योमवदिति उपमानपदं वा 'व्योमसंज्ञा' इत्यस्यैव व्योम इव संज्ञा स्मृतिवि-षयत्वं यस्याः सा व्योमतुल्या इत्यर्थकत्वात्, साधर्म्यञ्च सर्व्वगतत्वमनन्तत्वञ्च 'आकाशवत् सर्व्वगतश्च नित्यः' इति मन्त्रवर्णात् अकलेत्यादिवचनेन श्रौतं ब्रह्मस्वरूपान्तरं लक्षणीयम्। अस्य विवरणं महाभागवतोपपुराणपञ्चदशा-ध्याये श्रीभगवतीगीतायां स्मर्य्यते—"त्रैलोक्यजननी दुर्गा ब्रह्मरूपा सनातनी। प्रार्थिता गिरिराजेन तत्पत्न्या मेनयापि च। महोग्रतपसा पुत्रीभावेन मुनिपुङ्गव। प्रार्थिता च महेशेन सतीविरहदुःखिना। प्रयथौ मेनकागर्भे पूर्णब्रह्ममयी स्वयम्।' इति। स्वलीलया पूर्णभावेनावतीर्णायां ब्रह्मस्वरूपायां शक्तौ—यदेतत्तपोनिषेधादिकं मातुस्तदृवात्सस्याख्यप्रेमप्रयुक्तम्। एतत्प्रपञ्चस्तु दुहितृभावेन ब्रह्मोपासनस्वरूपज्ञापनार्थः। तस्मात् सिद्धमुमायाः शिशुदेहाव-च्छिन्नत्वेऽपि ब्रह्मत्वमिति संक्षेपः। १।२।७॥

ननु 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति

श्रुतेर्ब्रह्मणः शरीरसम्बन्धे अभ्यासेन सुखदुःखसाक्षात्कारात्मकसंभोगापत्तिरित्याशङ्कातत्समाधानगर्भं सूत्रमाह—

संभोगप्राप्तिरिति चेन्न वैशेष्यात् । १।२।८ ।

'संभोगप्राप्तिः' संभोगापत्तिः—संभोगः सम्यग्भोगः, सुखदुःखयोः पर्य्यायेण साक्षात्कारः, सुखी हि शरीरी दुःखं द्विषन्, दुःखहेतुभूतं प्राणिनं हिनस्ति, तत्कर्म्मजाहृष्टेनागामिजन्मनि दुःखभोगः, दुःखी च सुखं प्रार्थयमानस्तद्धेतुभूतं धर्म्ममनुतिष्ठति तेन चागामिजन्मनि सुखभोगः, एवं पूर्व्वत्रापि धर्म्मादिकमैहिकसुखादिलिङ्गकमनुमेयं तत्पूर्व्वं च सुखादिकमिति पर्य्यायेण सुखदुःखभोगं शरीरी प्राप्नोति, ब्रह्मणः शरीरित्वे तस्याप्येवं स्याद् इति पूर्व्वपक्षः 'इति चेत्' उच्यत इत्यर्थात् 'न'—तन्न युक्तमित्यर्थः, अत्र हेतुः—'वैशेष्यात्' = जीवशरीरात् ब्रह्मशरीरस्य विशेषवत्त्वात्, न ह वै सशरीरस्येति प्रागुदाहृतश्रुतौ यच्छरीरम्, 'उमां हैमवतीम्' 'विवृणुते तनूं स्वाम्' इत्यादिषु श्रुतिषु च यच्छरीरम्, न खलु तयोरेकजातीयत्वमपितु विशेषो भेद एव वैशेष्यमिति स्वार्थिकप्रत्ययात्; कर्त्तरि निष्पन्नो वा विशेषशब्दः, तस्य भावो वैशेष्यमिति, तस्मात्। जीवशरीरं हि, यस्य शरीरं तदहृष्टसहकृतया भूतमात्रया जन्यते; ब्रह्मण उमायाः शरीरन्तु नैवम्, किं तर्हि भक्ताहृष्टसमुन्मीलितया स्वेच्छया कृपारूपया परिगृहीतमभौतिकं भूतबीजस्थतच्छायोपेतमतो, 'न ह वै सशरीरस्य' इति प्रमाणकः सम्भोगो नापद्यते । तच्छ्रुतौ शरीरशब्दो

यादृशार्थबोधक उमाशरीरं न तादृशम्। अतएव विनैव लक्षणां 'विवृणुते तनूं स्वाम्' इति श्रुतिरपाणिपादो जवनो ग्रहीतेत्यादि मन्त्रवर्णश्चोपपद्यते। नैव-पाणिपादादिकं न खलु स्वेच्छागृहीते उमाब्रह्मशरीरे वर्त्तते, नैवं पाण्यादिकं नियतव्यापारम्, आदा-नमात्र-व्यापारः पाणिर्विहरणमात्रव्यापारश्च पाद इत्येवंरूपत्वात्, ब्रह्मणः शरीरे त्वनियतव्यापारन्तत्, भवति चात्र मन्त्रवर्णः 'सं बाहुभ्यां धमति' इति, संध्मानं नाम संशब्दनं जीवानां वागिन्द्रिय-कार्य्यमपि बाहुभ्यामाचरतीति ; तथाच पाणिपादादिशब्दा यत्रार्थे लोके समाख्याताः तच्छून्यत्वेनापाणिपादाचक्षुरित्यादिरूपत्वं साका-रस्यापि ब्रह्मणो नानुपपन्नम्, तेन जवनो ग्रहीतेत्यादेरपि नानुप-पत्तिः। इममेवार्थं स्पष्टमाह श्रुतिः 'विश्वतश्चक्षुरुत विश्वतोमुखः' इत्यादिना प्रतिपादयन्ती सर्व्वैरिन्द्रियैरवयवैर्व्वा चाक्षुषादिसंशब्द-नादिसर्व्वकार्य्यसामर्थ्यं शरीरावच्छिन्नस्यापि ब्रह्मणः इति। तस्मात् संगृहीताभौतिकशरीरस्य ब्रह्मणो देवतादितृणान्तजीववत् न सम्भो-गप्राप्तिः, अदृष्टाभावादिति भावः। एतत्पादप्रथमसूत्रमारभ्यै-तदन्तमुमाधिकरणं, यस्य सर्व्वत्र प्रसिद्ध्यधिकरणमिति भगव-दाचार्य्यसम्मता संज्ञा। तस्याधिकरणस्य स्वरूपादिकं वैशद्याय विशेषतो विमृश्यते। तथाह्यत्र पञ्चाङ्गानि—उमां हैमवतीमिति विचारार्हवाक्यम्, अत्र संशयः—अत्र उमाशब्दो हिमवद्दु-हितृजीवविशेषपरो ब्रह्मपरो वा, जीवविशेषपर इति पूर्व्वपक्षः, हैमवतीशब्दनिर्व्वचनसामर्थ्यात्, न हि परमात्मा कस्यचिद्दुहिता भवति 'पर आकाशादज आत्मा महान् परः' इति 'नित्या नित्या-

नाम्' इति 'न जायते म्रियते वा विपश्चित्' इति च श्रूयते । अत्रोत्तरम्, ब्रह्मपर एव सर्व्वत्र प्रसिद्धोपदेशात् । ओङ्कारो ब्रह्मेति सर्व्वत्र श्रुतौ प्रसिद्धं, तत्र ये वर्णास्तैरेव विपर्य्यस्तैरुमाशब्दो निष्पन्न उपदिष्टश्च श्रुतौ प्रणवघटक–प्रत्येकवर्णार्थः, स च आगरितस्थानादि चैतन्यलक्षणः, स ह्यत्रापि वर्त्तते, परमत्र उपासनविशेषाभिप्रायेण वर्णविन्यासविपर्य्ययाद् विशेषः । यच्च तुरीयममात्रम्, अस्त्यत्रापि दीर्घस्वरोच्चारणविरामरूपतया तत् सम्बन्धः, जीवपरत्वे विवक्षितगुणानुपपत्तिः; हैमवतीशब्दव्यपदेशस्तु हिमवद्गृहाविर्भूतशिशुदेहसम्बन्धप्रयुक्तः, न तु वास्तवजन्मप्रयुक्तो व्योमवत्, यथाहि घटोदरच्छिद्रादिनाम्ना उत्पन्नतया व्यपदिष्टमपि व्योम वस्तुतो नोत्पद्यते न वा साक्षात्कारविषयत्वमापद्यते तथा हैमवत्युमापि, तादृशशब्दप्रयोगश्च दुहितृभावेनोपास्यताज्ञापनार्थः ।

न च शरीरसम्बन्धात् सम्भोगापत्तिः, भोगावच्छेदकशरीरादुमाशरीरस्य वैशेष्यात् तस्मादुमाशब्दो ब्रह्मपर इति निर्णयः । इदं हि अर्भकौकस्त्वादिति सूत्रस्य द्वितीयवर्णकानुगतमधिकरणम्, प्रथमवर्णके तु व्योमवदित्यस्य दृष्टान्तविधया प्रवेशो नास्ति किं तर्हि निर्णयोपयोगितया विरुद्धस्मृत्याक्षेपपरिहाराय स्मृतिप्रमाणोपन्यासपर इत्यवधेयम् । १।२।८ ।

दुहितृभावेनोपासनमावेद्य मातृभावेन तद्वक्तुमत्ताधिकरणमारभते—

( अत्राधिकरणम्–२ )

## अत्ता चराचरग्रहणात् । १।२।९ ।

'आत्यस्त्वं प्राणैकऋषिरत्ता विश्वस्य सत्पतिः । वयमाद्यस्य दातारः पिता त्वं मातरिश्वनः' इति (प्रश्न०२।११) मन्त्रे अत्तेति पदमत्तृशब्दप्रकृतिकम्, अदा अन्नेन त्रायते पालयति या सा इति करणोपपदत्रायधातोः, पश्चात्तृतीयासमासकस्य केवल-त्रायधातोर्वा, क्विप्प्रत्ययनिष्पन्नयोगरूढमातृवाचकात्ताशब्द-प्रकृतिकं वा ? इति, तदर्थश्च प्राणो वा ब्रह्म वा ? इति च संशयः । अत्र पूर्व्वपक्षः, अत्तृशब्दप्रकृतिकम्, वयमाद्यस्य दातार इत्यस्यान्वयात् अत्यन्तरे चान्नस्य निरूपणात्, तदर्थश्च प्राणः, उपक्रमोपसंहारादिना प्राणस्यैवावगमात्, अत्र मन्त्रे प्राणशब्दप्रयोगात् 'कुत एष प्राणो जायते' इत्यनन्तरप्रश्नाच्चेति, अत्रोत्तरम्—नैतदेवम्, किन्तु अत्तेति पदं मातृवाचकात्ताशब्दप्रकृतिकं तदर्थश्च ब्रह्मेति, कुतः "चराचरग्रहणात्" 'अत्ता विश्वस्येति विश्वपदेन चराणामचराणाञ्च सर्वेषां ग्रहणात्, न हि प्राणश्चराणामचराणाञ्च भोक्ता, चराचरशब्देन प्राणस्यापि प्राप्त्या स्वस्य स्वभोक्तृत्वासम्भवात् । न च माभूत् प्राणः, ब्रह्मैव 'अत्तृ=भोक्तृ भवतु ; तथात्वेऽपि वयमाद्यस्येति वाक्यशेषो नोपपद्येत, न हि अस्मच्छब्दप्रतिपाद्या आकाशादय आद्यस्वरूपेण प्राप्तस्य विश्वस्य दातारो भवन्ति तेषामपि विश्वान्तर्गतत्वात्, यद्धि विश्वस्यात्तृ तस्य विश्वमेवादनीयं तद्दातारस्तु नाकाशादयो भवन्ति, तेषामप्याद्यत्वात्, वयमाद्या इत्येव वक्तुं युक्तत्वात् ।

न च विश्वस्येत्यनेन सत्पतिरित्यस्यान्वयः, अत्तेति पदं पृथ-गेवेति वाच्यम्, अदनीयवस्त्वनभिधाने स्तोत्ररूपत्वेनोपक्रान्त-स्यास्य मन्त्रस्य तद्रूपताबाधात् सर्व्वस्यैव च प्राणिनो यत्किञ्चि-दत्तृत्वेन विशेषानिर्णयात्। सत्पतिरित्यत्र सत्पदस्य वैयर्थ्याच, न ह्यसन् पतिर्भवति, अस्मन्मते तु सत्पतिरित्यत्र सतां पतिः सत्पतिरिति षष्ठीसमाससम्भवेन वैयर्थ्याभावात्, न च प्राणस्तो-त्रमिदम्, प्राणस्य विश्वमातृत्वं तु न घटते प्राणस्यापि विश्वान्तर्गतत्वात् यथाश्रुतार्थानुपपत्त्या अत्तेति पृथगेव, अस्मदु-पहृतवस्तुभोक्तृत्वादस्मत्तः श्रैष्ठ्यं भवत इति स्तोत्ररूपत्वमव्याहत-मिति वाच्यम्, यतः प्राणार्थकत्वे विश्वपतित्वमपि तत्र व्याहन्येत, न हि प्राणो विश्वपतिः प्राणस्यापि विश्वान्तर्गतत्वादस्मिन् भवतोऽप्यविवादात् न च विश्वपदं प्राणाधीनचराचरपरमिति वक्तव्यम्, सति गत्यन्तरे सङ्कोचस्यायुक्तत्वात्, ननु नास्ति गत्यन्तरमिति मैवं राजपुत्रस्य राजोपचारवत् प्राणे ब्रह्मोपचारेण तथा स्तवनस्य युक्तत्वात्, तथा चात्तापदं मातृपरम्, पूर्व्वमन्त्रे च लभ्यते, 'यदात्वमभिवर्षस्यथेमाः प्राण ते प्रजाः। आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यति' इति ( प्रश्न० २।१० ) मन्त्रे ब्रह्मानुगमात् प्राणस्य सूर्य्यत्वम्। 'ते प्रजा' इति मातृभाव-व्यञ्जकं राजभावव्यञ्जकञ्च। अन्नलाभाशया प्रजानामानन्दाभि-धानञ्च अदा तायत इति अदा ता इति वात्ताशब्दनिरुक्तिमनुब-ध्नाति। न च सूर्य्यस्य प्राणित्वादेव प्राणस्य सूर्य्यत्वं न तु ब्रह्मा-नुगमादिति वाच्यम् 'एषोऽग्निस्तपत्येष सूर्य्यः' इति प्राक्तनमन्त्रे

'सदसच्चामृतञ्च यत्' इत्युक्त्या ब्रह्मानुगमस्य प्रक्रान्तत्वात् ब्रह्म तावद् विश्वस्य जननात् अन्नेन पोषणात् नाडीद्वारकान्नरसेन भ्रूणस्यापि प्राणनाच्च प्राणादेरपि माता भवति, भवति च सतां सर्व्वेषां पतिः=राजा, असंभेद-निवारकत्वात्, राज्ञः प्रजा इव, आकाशादयः सर्व्वे वयं कर-प्रदातारः, भोग्यसम्पादकाः, एवं हि प्राणस्तुतिरुपपद्यते। ऐश्वर्य्येणोपासनध्यानेन सूचितम्। तस्माद् विश्वपदस्य चराचरसा-मान्यपरत्वेनास्मिन् ग्रन्थे ग्रहणात् तत्र प्राणस्यापि प्रवेशेन तन्मातृत्वं ब्रह्मण एव, 'एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि च। खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी' इति 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति' इति च श्रुतेः। 'पिताहमस्य जगतो माता धाता पितामहः' इति स्मृतेश्च। अन्यथा विश्वस्य कार्यस्य मातृत्वं प्राणस्यानुपपन्नं कथङ्कार-मुच्येत, न खलु प्रमाणबाधितं वस्तु वाङ्मात्रेण साधयितुं शक्यते; अत्तृत्वपक्षे अत्तृत्वमपि नोपपद्येत। तस्मात् प्राणालम्बनद्वारेण मातृभावेन ब्रह्मोपासनमत्रोपदिष्टमिति भावः। अत एव प्राण इति (१।१।२३) सूत्रेण प्राणालम्बनेन मन्त्रजपद्वारोपासनमुक्तमिह तु मातृभावेनेति विशेष इत्येवमन्यत्राप्यनुक्तस्थले प्रकारविशेषः सुधीभिरूह्येयः॥ १।२।९॥

ननु यदि प्राणस्य स्तुतिरियं ब्रह्मभावानुगमेनेत्युच्यते तदा अत्तेतिपदमत्तृशब्दप्रकृतिकमेवास्तु यस्य 'ब्रह्म च क्षत्रञ्चोभे भवत ओदन' इति श्रुतेरित्यत आह—

प्रकरणाच्च १।२।१०॥

'भगवन् कत्येव देवाः प्रजा विधारयन्ते' इति प्रकृतम्, प्रजा-विधारणं मातृत्वद्योतकं प्रकरणोपसंहारस्य 'मातेव पुत्रान् रक्षस्व' इति। एवं मातृभावद्योतकप्रकरणे कस्यचित् पदस्य मातृप-रत्वं संहर्त्तृपरत्वं वेति सन्देहे मातृपरत्वपक्षस्यैव युक्तत्वात्। तत्र च तावदस्ति 'एषोऽग्निस्तपत्येष सूर्य्यः' इत्युपक्रम्य 'एष पृथिवी रयिर्देवः सदसच्चामृतञ्च यत्' इति प्रकृतम्, तदपि ब्रह्मभा-वानुगमेन। स्वतः प्राणस्यामृतत्वाभावात्। तस्मात् प्रकर-णादेवमवसीयते यत् प्राणस्य स्तोत्रमिदं ब्रह्मभावानुगमेन, तत्र च मातृभावः प्राधान्येन समाश्रित इति। ब्रह्मसंस्थं हि विश्व-मातृभावं प्राणस्थितव्यष्टिमातृभावेनैकं कुर्व्वन् तेन ब्रह्मोपा-सीतेति विधानार्थोऽयमर्थवादः; व्यष्टिमातृभावस्य प्राणधर्म्म-त्वात्; श्रूयते हि—'प्राणो माता प्राणो भ्राता प्राणः स्वसा' इति। तुल्यन्यायात् 'प्राणे सर्वं समर्पितम्' इति श्रुतेश्च, दुहितृ-भावोऽपि प्राणधर्म्मः। अत्रेदं बोध्यम्, मातृभावस्य प्राणधर्म्म-त्ववद् ब्रह्मधर्म्मत्वमपीत्युपासकाधिकार-भेदात् मातृभावेनो-पासनमनेकधा भवति, प्राणधर्म्मव्यष्टि-मातृभावाश्रयेण, तदा-श्रयमपहाय ब्रह्मधर्म्मविश्वमातृभावाश्रयेण चेति। अत्राद्यं पुन-र्द्विधा-सापेक्षनिरपेक्षभेदात्, विश्वमातृभाव-व्यष्टिमातृभावयो-रेकीकरणेन सापेक्षं भवति, विश्वमातृभाव-नैरपेक्ष्येण च निरपेक्षमिति भेदात्। मातृभावे साधकस्य कुमारस्तन-न्धयभ्रूणभावभेदात्त्रैविध्यं यदुक्तं, तदुभयत्रैव योजनीयम्।

दुहितृभावस्य तु केवलप्राणधर्म्मत्वेन तद्भावेनोपासनमेकरूपमेवेति । १।२।१०।

ननूपासनमेवासिद्धमुपास्योपासकभेदाभावात्, 'नान्योऽतोऽस्ति द्रष्टा, नान्योऽतोऽस्ति श्रोता' इत्यादि श्रुतेः, इत्याशङ्कायाः परिहरन्नाह—

( गुहाप्रविष्टाधिकरणम्—३ । )

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् १।२।११।।

'अणोरणीयान् महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् । तमक्रतुः पश्यति वीतशोको धातुप्रसादान्महिमानमात्मनः' इति (कठ० १।२।२०) मन्त्रपदे गुहानिहितत्वं किमेकस्मिन्नात्मनि विवक्षितमुत द्वयोः ? इत्यत्राह एकस्मिन्नेव, प्रथमैकवचनसामर्थ्यात्, तमित्युत्तरार्द्धे प्रयोगाच्च; इति प्राप्ते ब्रूमः, द्वावेवात्मानौ गुहायां निहिताविति, सूत्रे तद्दर्शनञ्च गुहां प्रविष्टावात्मानाविति । अत्र हेतुः 'तद्दर्शनात्' तस्यात्मनो दर्शनश्रुतेः—'तमक्रतुः पश्यति' इति द्रष्टृदृश्यभावश्रुत्या द्वौ आत्मानौ गुहां प्रविष्टाविति निश्चीयते; न हि गुहायां निहितं वस्तु बहिःस्थेन केनचित् द्रष्टुं शक्यं व्यवहितत्वात् । किन्तर्हि गुहाप्रविष्टेन व्यापारान्तरं वा सङ्कल्पान्तरं वापहाय तत्र युक्तदृष्टिनैव । अतो व्यापारान्तरेण सङ्कल्पान्तरेण वा रहितो द्रष्टेति व्यक्तमस्ति । अन्यथा द्रष्टुरपि गुहाप्रविष्टत्वमन्यथा दर्शनानुपपत्तिः, अतः सुष्ठूक्तम् 'आत्मानौ तद्दर्शनात्' इति । तद्दर्शनान्यथानुपपत्त्या द्रष्टुरात्मनो दृश्यस्यात्म-

नश्च गुहागतत्वम् दर्शनक्रियायां कर्तृत्वात् कर्मत्वाच्चान्योन्यभेदः सिद्धः। श्वेताश्वतरमन्त्रोऽपि प्रायेणैवं ब्रूते विशेषस्तूत्तरार्द्धे, 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्' इति। स च यो महीयानात्मा गुहायां निहितः, महिमानं = महीयांसं तमीशं पश्यतीति दर्शयति, महिमानमिति पृथगुपादानं दृशिकर्मभूतस्याणीयस्त्वव्यावर्त्तकम् अन्यथा निरर्थकं स्यात्। न च अणोरणीयस्त्वं दुर्विज्ञेयत्वेनोपचरितमिति वाच्यम्, उपचारस्य गत्यन्तराभाव एवाभ्युपगमात्। 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः' इति मन्त्रस्तु छायातपशब्दात् चिदचितौ निर्दिशति, न तु जीवपरमात्मानौ, छायातपवद् जीवपरमात्मनोरत्यन्तवैलक्षण्याभावात्, परमात्मन ऋतपानाभावाच्च। न च छत्रिन्यायेन एकस्मिन्नृतपानाभाववत्यपि परस्य ऋतपानवत्त्वात्। 'ऋतं पिबन्तौ' इति प्रयोग इति युक्तं छत्रवदृतपानस्य लक्षयितुमशक्यत्वात् तेन व्यपदेशानौचित्यात्, ऋतपानाभाववतः परमात्मनः प्राधान्येन प्रधानेन व्यपदेशा भवन्तीति न्यायात् तद्गतधर्मेणैव व्यपदेशस्यौचित्यात्, छायातपाविति विशेष्यनिर्देशेन छत्रिन्यायानवकाशाच्च। अन्यथा यदि छत्री चैत्रः छत्रहीनश्च मैत्रः स्यात्, तदापि स्यात् छत्रिणौ चैत्रमैत्रौ गच्छत इति प्रयोगः। अपि च ऋतपानस्य देहस्य जलपानवदुपपत्तये, चिदचित्सम्बन्धमन्तरेण पानादेरसम्भवादुभयत्रैव तदुपपत्तेः

प्रसिद्धः, गौरः पिबति विद्वान् पिबतीति व्यपदेशद्वयस्य सत्त्वात् । तस्मात् 'अणोरणीयान्' इति दर्शितमन्त्रपदमेवात्र विचारार्हवाक्यं न ऋतं पिबन्तावित्यादिकमिति सिद्धम् । १।२।११ ।

नन्वेवं 'तमक्रतुः' इति प्रक्रान्तवाचितच्छब्देन द्वयोरात्मनः परामर्शः स्यादित्याशङ्कायामुत्तरं सूत्रमाह—

विशेषणाच्च १।२।१२॥

'विशेषणम्' = अणोरणीयान् महतो महीयानिति द्वयम् । अत्र महतो महीयस आत्मनोऽणोरणीयानिति विशेषणं नोपपद्यते, अणोरणीयसो वा महतो महीयानिति विशेषणम्, तादृक्पदार्थासिद्धेः । तस्मात् एकैकं विशेषणमन्तर्भाव्य विशेष्यभेदाभ्युपगमेन पूर्वार्द्धार्थ इत्थं भवति—अणोरणीयानात्मा अस्य जन्तोर्गुहायां निहितः । तथाच श्रूयते—'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः' इति (कठ० २।६) मन्त्रवर्णाः, 'बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः' इति च श्वेताश्वतरमन्त्रवर्णाः ( ६।८ ) । महतो महीयानात्माचास्य जन्तोर्गुहायां निहितः 'अनाद्यनन्तं कलिलस्य मध्ये विश्वस्य स्रष्टारमचिन्त्यरूपम् । विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः' इति मन्त्रान्तरात् । विशेषणसङ्गत्यर्थमेवंवाक्यद्वयात् 'आत्मानौ गुहां प्रविष्टौ' इति सिद्धम् । 'तमात्मनो महिमानं महान्तमात्मानं पश्यति' इत्यन्वयेन तत्पदस्य प्रक्रान्तयोरेकतरव्यावृत्त्यान्यतरपरताया युक्तत्वान्नाशङ्कावसरः । तथा चाणो द्रष्टा परश्च दृश्यः ।

यो द्रष्टा स उपासकः, यश्च दृश्यः स उपास्यः । एवञ्च यदसिद्धिमाशङ्क्य श्रीमतोपासनस्यासिद्धिरावादिता स चोपास्योपासकभेदोऽणीयस्त्वमहीयस्त्वाभ्यां सिद्धश्चेत् कथं तावदापाद्यस्यात्मलाभः ? न चैवं 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता' इति श्रुतिर्विरुध्यत इति वाच्यम् एतदपेक्षयाधिकं द्रष्टृत्वादिकमन्यस्य नास्तीत्यर्थकत्वोपगमात्, विलक्षणदृष्ट्यादिमत्त्वमतोऽन्यत्र नास्तीत्यस्य वा तदर्थत्वाभ्युपगमे तद्विरोधशङ्काया अनवतारात् । अतएव 'धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्दधीत । आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि' इति ( मु० २।२।३ ) मन्त्रवर्णान्तरेणोपास्योपासकभावो नियोज्याक्षरयोः सूपपाद्यत इति दिक् । १।२।१२ ।

ननु 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिरुपदर्शिता श्रुतिरन्तर्यामिब्राह्मणीया, तद्ब्राह्मणस्यैकात्म्यार्थकत्वेन तस्या निरुक्तार्थकत्वं नोपपद्यते प्रकरणाद्विवरणात् समन्वयाच्च । अणोरणीयस्त्वञ्चौपाधिकमतो नात्मद्वयसिद्धिः एवञ्चोपास्योपासकभेदविरहादुपासन-विधिर्नोपपद्येतेत्याक्षेपं परिहरन्नन्तर्याम्यधिकरणमारभते—

( अन्तर्याम्यधिकरणम्—४ । )

## अन्तर उपपत्तेः १।२।१३॥

'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिव्या अन्तरो यमयति' इति ( बृह०

३।७।३। ) श्रुतिः, अत्र, योऽन्तरः स जीवादन्यो न वा ? इति संशयः नान्यः इति पूर्वपक्षः 'एष त आत्मा अन्तर्य्याम्यमृतः' इति प्रतिपदमुपसंहारात्। अस्योत्तरम् 'अन्तरः' अन्तरत्वेन यः श्रुतः स जीवादन्यः, कुतः ? 'उपपत्तेः', समभिव्याहृतवाक्यार्थस्तथैव उपपद्यते युज्यते इति तस्मात्। कथम्? 'यं पृथिवी न वेद' इति वेदनप्रसक्तिः पृथिवीदेवतायाः, तस्या एव 'यं न वेद' इति प्रतिषेधः। न तु दृश्यमानाया भूतात्मकपृथिव्याः, तस्या जडत्वेन वेदनस्य सामान्याभाववत्तया प्रसक्त्यभावाद् यमिति विशेषविषयकनिषेधस्यायुक्तत्वाच्च। पृथिवीशरीरो यद्यन्तरो जीवादन्यो न स्यात् पृथिवीदेवतैव स्वमिव तं विद्यात्; अन्तरस्य परमात्मत्वेन जीवादन्यत्वे तु पृथिवी न वेदेत्युक्तिरुपपद्यत एव; यथा स हि भगवान् अस्माकमन्तर्य्याम्यपि नास्माभिर्विद्यते तथा पृथिव्या अन्तर्य्याम्यपि पृथिवीदेवतया न विद्यत इति युक्तम् १।२।१३।

नन्वन्तरस्य जीवादनन्यत्वेऽपि निर्गुणचिन्मात्रत्वेन 'यं पृथिवी न वेद' इत्युक्तिरुपपद्यते, अहमस्मीति वेदनं न निर्गुणचिन्मात्रगोचरम्, अतस्तदनन्यापि पृथिवीदेवता तं स्वरूपतो न वेत्ति; यथा वयं स्वमात्मानम् इति शङ्कानिरासकं हेत्वन्तरमाह—

स्थानादिव्यपदेशाच्च १।२।१४॥

स्थानम्, शरीरं कर्म्म चेति स्थानादि। 'पृथिव्यां तिष्ठन्' इत्यादिना स्थानव्यपदेशः, 'पृथिवीशरीरम्' इत्यादिना शरीरव्यपदेशः, 'पृथिवीमन्तरो यमयति' पृथिवीं प्रवृत्तिनिवृत्तिमतीं करो-

तीति कर्म्मव्यपदेशः; चिन्मात्रस्य अन्तरत्वे ईदृग्व्यपदेशो न स्यात्, तस्य स्थानशरीरगुणसम्बन्धाभावात्। चिदचिदुभयात्मकब्रह्मणस्तु स्थानादिव्यपदेशो युज्यते, उपादानकारणं हि कार्य्ये स्वात्मना तिष्ठति हाटकमिव किरीटादौ, अचिदंशो ब्रह्मणि न स्यादुपादानत्वं तस्य व्याहन्येत, एकान्तपरिणामरहितस्य चिन्मात्रस्योपादानत्वायोगात्, न च विवर्त्तोपादानत्वम्, तस्यावास्तवत्वेन प्रागेव निराकृतत्वात्। एवञ्च स्थानव्यपदेशः सिद्धः, अचिदंश एव स्वपरिणामेन पृथिव्यादिकं भवतीति चिदचिदात्मकब्रह्मणस्तत्सम्बन्धो न विरुध्यत इति शरीरव्यपदेशः, चिन्मात्रस्य तु तत्सम्बन्धो विरुध्यते चिन्मात्रत्वव्याघातात्; नापि चिन्मात्रस्यान्तर्य्यमणं कर्म्म, कर्म्मणः कृतिसाध्यत्वात् निर्गुणस्य च कृत्यभावात्। चिदचिदुभयात्मके त्वस्ति कर्म्मसम्बन्धः, अचित्सम्बन्धादिति। तथाच अन्तरो न चिन्मात्ररूपः, किन्तु चिदचिदुभयात्मको जीवादन्यः परमात्मा १।२।१४।

चिन्मात्रान्यत्वे जीवादन्यत्वे च सावधारणं हेत्वन्तरमाह—

**सुखविशिष्टाभिधानादेव च। १।२।१५॥**

सुखेन विशिष्टः विशेषवान्, उत्कृष्टसुखाश्रयः, प्रचुरसुखरूप इत्यर्थो वा। तदभिधानं श्रौतं तस्मात्। तथाहि अन्तर्य्यामिब्राह्मणे यथा अन्तरस्य सर्व्वान्तरत्वमुक्तं तथा तैत्तिरीयोपनिषदि आनन्दमयाधिकारे आनन्दमयस्य सर्वान्तरत्वमुक्तमन्यत्र तथाविधवदन्तरत्वानभिधानात्। एवञ्च योऽयमन्तर्य्यामिब्राह्मणीयोऽन्तरः स एवानन्दमयाधिकारीयः। स चान्तरः

सुखविशिष्ट इत्युक्तम् 'आनन्दं ब्रह्मणो विद्वान्' इत्यत्र; ब्रह्मण इति षष्ठ्या भेदार्थकत्वपक्षोऽभेदार्थकत्वपक्षश्च विचारितपूर्वो द्रष्टव्यः। परं नात्र चिन्मात्रमन्तरतया प्रदर्शितम्, नापि जीवः, जीवस्यानन्दप्राचुर्य्याभावात्। निरतिशयानन्दो ह्यानन्दप्राचुर्य्यमन्यथातिप्रसङ्गात्। सूत्रे ह्येवकारो हेत्वन्तरनैरपेक्ष्यज्ञापनाय; केवलमेतस्माद्धेतोः सर्वान्तरे जीवादन्यत्वस्य चिदचिदुभयात्मकत्वस्य च सिद्धेः। चकारः पक्षसाध्यानुकर्षार्थः। १।२।१५।

ननु अन्तर्यामिब्राह्मणे यस्य अन्तर इति निर्देशः स नानन्दमयवत् सर्वान्तरः किन्तु तैत्तिरीयपठितप्राणमयादिवत् आपेक्षिकान्तर इति आनन्दमयशब्देन नासौ सुखविशिष्टतयाभिधीयते इत्याक्षेपं परिहरति—

श्रुतोपनिषत्क-गत्यभिधानाच्च १।२।१६।।

'श्रुतोपनिषत्कः' = आरुणिरुद्दालकः, तस्मै 'गतिः' = ज्ञानम् अन्तर्यामिविषयं स्वस्य ज्ञानम्, अथवा 'गतिः' = अवस्था पृथिव्यादिविज्ञानात्मरेतोऽन्तानामन्तर्यमणकर्म्मरूपा; चलनावस्था भोजनावस्थेत्यादिप्रयोगात्, तदभिधानं याज्ञवल्क्येन तत्कथनं तस्मात्। उद्दालको नाम गौतमगोत्र आरुणिर्याज्ञवल्क्यमुक्तवान्, वयं हि काप्यात् पतञ्चलाद् यज्ञविद्यामधीयाना मद्रानध्यवसाम, आसीच्च तदा तस्य जाया गन्धर्वाविष्टा। तदावेशमनुभवन्तो वयमपृच्छाम कोऽसीति, सोऽब्रवीत् कबन्ध आथर्वण इति, ततः काप्यं निमित्तीकृत्य स

तत्रैवानपृच्छत्......अपि जानासि काप्य! तत् सूत्रं येन लोक-द्वयं भूतानि च सन्दृब्धानि ? न जानामीति काप्येन प्रत्युक्तः पुनरपृच्छत्-वेत्थ नु त्वं काप्य ! तमन्तर्यामिणं य इमञ्च लोकं परञ्च लोकं सर्वाणि भूतानि च योऽन्तरो यमयतीति ? सोऽब्र-वीत् पतञ्चलः काप्यो नाहं तं भगवन् वेदेति। सोऽब्रवीत् पतञ्चलं काप्यं याज्ञिकांश्च, यो वैतत् सूत्रं विद्यात्तञ्चान्तर्या-मिणं स ब्रह्मवित् स लोकवित् स वेदवित् स भूतवित् स सर्व्वविदित्युक्त्वा तत् सूत्रं तञ्चान्तर्यामिणं सकाप्येभ्यः सर्व्वे-भ्योऽस्मभ्यमुपनिषत्पदार्थतत्त्वरहस्यभूतमुपदिदेश। तत्र सूत्रं सूक्ष्मवायुः, न तद्ब्रह्म, न तज्ज्ञानेन ब्रह्मविद् भवति, नाप्यात्म-विद् अतएव न सर्व्ववित्, तस्मात् पारिशेष्यात्तदन्तर्यामिज्ञानेन ब्रह्मविदात्मवित् सर्व्वविच्च भवतीति गम्यते। एवं गन्धर्व्वादाथ-र्वण-कबन्धात् श्रुतोपनिषत्क उद्दालक आरुणिर्याज्ञवल्क्यमवोचत् तदहं वेद, त्वञ्च तद्द्वयमविद्वान् यदि ब्रह्मकथां ब्रवीषि मूर्द्धा विपतिष्यतीति। अज्ञं प्रत्यभिशापवचनमिदं ज्ञातरि निष्फलमिति निर्भयो याज्ञवल्क्य उद्दालकं सम्बोध्य सूत्रमुक्त्वा 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद' इत्यादिना चान्तर्या-मिणं कथयामास। तत्कथासमाप्तौ च उद्दालकः प्राप्तसदुत्तरस्तू-ष्णीमासीत् इतीयं बृहदारण्यकश्रुत्यर्थसंक्षिप्तिः। अन्तर्यामी यदि सर्वान्तरो न स्यात्, न स्याच्च परं ब्रह्म, एवं चान्तर्यामिवि-दुषोऽपि परब्रह्माविद्वत्तया न सर्व्ववित्त्वम्। तस्माद् यादृशा-न्तर्यामिज्ञानं सर्व्ववित्त्वसम्पादकं भवेत् त्वीयं तज्ज्ञानं याज्ञ-

वल्क्य उद्दालकसमीपे वाचा प्रकाशयामासेति प्रतीयते तच्च सर्वान्तरगोचरं नत्वापेक्षिकान्तरगोचरम् । अथ च याज्ञवल्क्य-स्तस्य गतिं सर्वान्तर्यमणां तथा प्रत्यपादयद् यथा सा सर्वान्त-रस्य ब्रह्मण एव सम्भवेत् । यदस्तु, तथैव तस्य च सर्व्वान्तर-स्यानन्दमयत्वं सिद्धमिति स्वल्पानन्दाज्जीवात्तस्य भेदो निर्व्वाध इति भावः १।२।१६।

अत्र पूर्वपक्षी आक्षिपति—

**अनवस्थितेरसम्भवाच्च नेतरः १।२।१७ ॥**

अणोरणीयान्–जीवः, स उपासकः, महतो महीयान्–पर-मात्मा, स उपास्य इत्यात्मद्वैविध्यमुक्तान्तर्यामिणो जीवेतरत्वेन साध्यते किन्तु स 'नेतरः' = अन्तर्यामी जीवादितरो न भवितुमर्हति कुतः ? वैधर्म्म्येण हेतुमाह—'अनवस्थितेः' यो हि जीवादितरः परमात्मा तस्यानवस्थितेः महतो महीयसः सर्व्वाश्रयस्य परमा-त्मन आधारविशेषे अनवस्थानात्, यो हि कश्चिदाश्रितः स परि-च्छिन्नस्तदाश्रितश्च भवति, अन्तर्य्यामी च 'पृथिव्यां तिष्ठन्' इत्यादिना तथैव प्रतिपाद्यते स कथं परमात्मा भवेत् ? न च परमात्मनः स्वमहिमप्रतिष्ठितत्वश्रवणात् पृथिव्यादीनाञ्च स्वम-हिमान्तर्गतत्वात् तत्रावस्थानं सम्भवतीति वाच्यम्, 'स्वे महिम्नि' इति श्रुतेः स्वस्य महत्त्वे अपरिच्छिन्ने आत्मनीत्यर्थक-तया परिच्छिन्नपृथिव्यादौ तदवस्थानस्यासम्भवात् । ननु 'तदन्तरस्य सर्व्वस्य तदु सर्व्वस्यास्य बाह्यतः' इति श्रुतेर्नभसः कर्णशष्कुल्यामिवांशकल्पनया परममहतोऽन्तर्य्यामिणोऽपि अव-

त्यवस्थितिव्यपदेशः पृथिव्यादौ इत्यतो हेत्वन्तरमाह—'असम्भवाच्च' इति । 'असम्भवात् एष त आत्मा अन्तर्यामीत्युक्तः' इत्यनया श्रुत्या असम्भवः = जीवाद् भेदासम्भवो ज्ञाप्यते यतः, अतोऽपि बाधात् नान्तर्यामी जीवादितरः । उद्दालकं प्रति यद् याज्ञवल्क्यवचनं—तत्र ते इत्यस्य उद्दालकस्येत्यर्थः, आत्मा जीवात्मविशेषः, 'एष त आत्मान्तर्यामी' इति श्रुतिर्भेदमभिदधाति, अतोऽन्तर्यामिणि जीवादितरत्वस्य बाधः, बाधाच्च नैतरत्वसिद्धिः, वह्नेरिव ह्रदादौ, एवञ्च तत्रावस्थितिरपि युज्यते जीवत्वात् ।१।२।१७।

आक्षेपं परिहरति—

अन्तर्याम्यधिदेवादिषु तद्धर्म्मव्यपदेशात् ।१।२।१८॥

'तद्धर्म्मस्य' = परमात्मनो धर्म्मस्य चिदचिदुभयात्मकत्वस्य व्यपदेशात्, 'व्यपदेशं' = विशिष्टकथनमाश्रित्य 'अधिदैवतादिषु' = 'यः पृथिव्यां तिष्ठन्' इत्यादिषु श्रुतिषु 'अन्तर्यामी' जीव उक्त इति वाक्यशेषः । आदिपदात् अधिभूताध्यात्मयोः परिग्रहः । 'यो भूतेषु तिष्ठन्' इति श्रुतिरधिभूतं' 'यः प्राणे तिष्ठन्' इत्यादिश्रुतिरध्यात्मम् । तथाच यथा पय आमिक्षा चेति भेदो लोकप्रसिद्धस्तथा अन्तर्यामिजीवयोरपि, यथा च 'पय एव घनीभूतमामिक्षेत्यभिधीयते'। इत्यामिक्षायाः स्वरूपप्रबोधनाय पय एवेति व्यपदेशस्तथा जीवस्वरूपबोधनाय स्वरूपजिज्ञासुं प्रति अन्तर्यामीति व्यपदेशविशिष्टकथनम् । दधिपयसी आमिक्षा-

पयसी इतिवद् बिम्बप्रतिबिम्बाविति वद् वा जीवात्मपरमात्मानौ वा आत्मानौ वेति प्रसिद्धो भेदो नानुपपन्नः, यथा आमिक्षायाः पयःस्वरूपत्वेऽपि तदधीनत्वं, न त्वामिक्षाधीनत्वं पयसः, यथा प्रतिबिम्बस्य बिम्बातिरिक्तत्वेऽपि बिम्बाधीनत्व' न तु बिम्बस्य प्रतिबिम्बाधीनत्वम्, एवं जीवस्य अन्तर्य्यामिस्वरूपानतिरिक्तत्वेऽपि अन्तर्य्याम्यधीनत्वं न तु तदधीनत्वमन्तर्य्यामिणः परमात्मनः, प्रसिद्धश्चाधीनस्योपासकत्वमित्युपास्योपासकभावसिद्धिरप्रत्यूहेति ध्येयम् ।१।२।१८।

नन्वहमात्मा गुडाकेश सर्व्वभूताशयस्थित इति गीतावचने अहमिति व्यपदिष्टेन परमात्मना जीवस्यानन्यत्वं प्रतिपादितं कुतस्तावदुपास्योपासकभावसिद्धिरिति भेदप्रतिपादनाय प्रयतमानस्य सिद्धान्तिनो विवक्षितसमाप्तेः पूर्व्वमान्तरालिकपूर्व्वपक्षिकृताक्षेपतत्परिहारसूत्रमाह—

न च स्मार्तमतस्तद्धर्म्माभिलापात् ।१।२।१९।।

चः हेतौ 'स्मार्त्तम्' स्मृतेर्गीताया इदं वचनम् 'अहमात्मा गुडाकेश' इत्यादिकम्, यतः गीतावचनं तस्मादित्यर्थः, नेतर इति एकान्तरितसूत्रस्थमपि पूर्व्वपक्षिमतमिति कृत्वानुषक्तम् । 'नेतरः' परमात्मनोऽभिन्न एव जीवात्मा, अथवा च इत्यनेन 'नेतरः' इति प्रागुक्तवाक्यम् इतरभिन्नत्वमनुकृष्यते, 'स्मार्त्तम्'= स्मृत्युक्तम्, स्मृत्या 'अहमात्मा गुडाकेश' इतिवचनेनोक्तमित्यर्थः । तथाच जीवस्य परमात्मेतरभिन्नत्वं स्मृतिवचनोक्तमिति पर्य्यवसितम् । तस्मादुपास्योपासकभावो नास्तीति मतम्, तद् दूषयति

'न' इति नेतरो न—इतर एवेत्यर्थः। 'अतद्धर्म्माभिलापात्' = तस्य जीवस्य धर्म्मस्तद्धर्म्मस्तस्य अनभिलापात् 'अहमात्मा गुडाकेश सर्व्वभूताशयस्थितः' इति वचनेऽनुक्तत्वात्। 'यो भूतेषु तिष्ठन्' इत्यादिश्रुतिवदत्रापि परमात्मनोऽन्तर्यामित्वस्यैव वचनात् जीवे परमात्मनोऽन्यत्वप्रतिपादनात्। न च सर्व्वभूताशय-स्थित इत्याशयस्थितत्वं जीवधर्म्मः इति वाच्यम्, 'ईश्वरः सर्व्व-भूतानां हृद्देशेऽर्जुन तिष्ठति' इति गीतावचनेन समार्थकतया-न्तर्य्यामिरूपेश्वरपरतायां युक्तत्वात्। न चैतद्वचनेऽपि ईश्वरस्य जीवादनन्यत्वं विवक्षितमस्तीति वाच्यम्, 'भ्रामयन् सर्व्व-भूतानि यन्त्रारूढानि मायये'ति परार्द्धेन, भ्रामणकर्त्तृत्वकर्म्म-त्वाभ्यामीश्वरजीवयोर्भेदस्यैव प्रतिपादनात्। एतेन 'अहमात्मा गुडाकेश' इति वचने आत्मपदस्य जीवात्मपरत्वेऽपि अभेदाशङ्का निरस्ता। 'ईश्वरः सर्व्वभूतानाम्' इति वचनेन 'अतद्धर्म्मस्य' ईश्वरावृत्तिधर्म्मस्य भ्रामणकर्म्मत्वस्य जीवे अभिलापात्, जीवा-वृत्तिधर्म्मस्य कर्त्तृत्वस्य ईश्वरेऽभिलापाद्वा भेदस्य प्रतिपादनात्। 'अहमात्मा गुडाकेश' इति वचनस्यापि 'अश्वत्थः सर्व्ववृक्षाणाम्' इति वद् विभिन्नरूपत्वेन जगद्व्यापकत्वबोधनतात्पर्य्यकतयाऽभेदपरत्वमिति भावः। १।२।१६।

सिद्धान्ती स्वविवक्षितं समापयति—

**शारीरश्चोभयेऽपि हि भेदेनैनमधीयते। १।२।२०॥**

एकान्तरितपूर्व्वसूत्रे जीवः अन्तर्य्यामी उक्तः, अत्र चकार-स्तदपेक्षया; शारीरश्च उक्त इति शेषः। न केवलमन्तर्य्यामी

किन्तु शारीरश्च। नन्वेतेन किमायातम्? एकस्य हि वस्तुनो नामधेयभेदस्य प्रसिद्धत्वादित्याशङ्क्याह—'उभये' याजुषतैत्तिरीयशाखिनः, आथर्व्वणाश्च 'एनं' शारीरं 'भेदेन' =परमात्मनो भिन्नत्वेन 'अधीयते'=पठन्ति। तथा हि कृष्णयजुर्व्वेदीयतैत्तिरीयोपनिषदि—'तस्यैष एव शारीर आत्मा यः पूर्व्वस्य' इति प्राणमयमात्मानमुपक्रम्यानन्दमयान्तप्रकरणे पठ्यते; अयञ्च शारीर आत्मा प्राणमयादात्मनो भिद्यते षष्ठीनिर्द्देशात्। न चात्र राहोः शिर इतिवदभेदे षष्ठीति युक्तं प्राणमयप्रकरणे 'यः पूर्व्वस्य' इति कथनात् तत्र पूर्व्वस्येति षष्ठ्या अभेदार्थकत्वासम्भवेन, तत्सहचरितस्य तस्येति षष्ठ्यन्तरस्याभेदार्थकत्वकल्पनाया अन्याय्यत्वात्, वाक्याकारसाम्यात् तत्प्रवाहपतितत्वाच्चोत्तरत्रापि षष्ठ्यास्तथाविधार्थकताया युक्तत्वाच्च। अतएवानन्दमयसम्बन्धिन एवात्मनः शारीरत्वं नत्वानन्दमयस्येत्यर्थः। न च तत्राप्यभेद एवार्थः, अन्नमयाख्यस्थूलशरीरेण शारीरस्याभेदासम्भवात्। तज्ज्ञानञ्च स्थूलोऽहं जानामि, गौरोऽहं जानामीत्यादिरूपेण भवति, 'यतो वा इमानि भूतानि जायन्ते' इत्यादि श्रुतिमार्गेण चान्तर्यामिज्ञानं ततस्तयोर्भेदज्ञानं च नानुपपन्नमिति। तथा प्रश्नोपनिषदि 'एतस्मिन् शरीरे एतत् सुखं भवति' इत्युपक्रम्य 'एष हि द्रष्टा स्प्रष्टा' इत्यादिकं पठित्वा 'स परेऽक्षरे संप्रतिष्ठते' इति शारीरात्मनो द्रष्टृत्वादिधर्म्मकस्य पराक्षरे परमात्मनि संप्रतिष्ठानमुक्तं तच्च द्वयोर्भेदमन्तरेण न भवति; तथा चास्ति द्वयोर्भेदेन पठनम्।

तस्माद् भेदश्रुतिरभेदश्रुतिश्च उद्देश्यभेदोपासनभेदरूपज्ञानयो-र्भेदादधिकारभेदाच्चोपपादनीया न त्वेकतरत्यागात: तथात्वे सर्व्वत्राप्रामाण्यशङ्कासम्भवः स्यात्। एवञ्चोपास्योपासक-भावसिद्धावुपासनसिद्धिरप्रत्यूहैवेति। १।२।२०।

नन्विदमयुक्तं ब्रह्मण उपास्यत्वासम्भवात् अदृश्यादिस्वभा-वस्य ब्रह्मणः साकारत्वायोगात् निराकारस्यादृश्यस्याग्राह्यस्योपा-सनाविषयत्वाभावाच्च श्रूयते हि 'अक्षरं ब्रह्म' प्रकृत्य 'यत्तदद्रे-श्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्व्वगतं सुसूक्ष्मं तद्भूतयोनिं परिपश्यन्ति धीराः' इति (मुण्डक १।१।५) अद्रेश्यमिति छान्दसमदृश्यस्थानीय-रूपम्। न हि यददृश्यादिस्वभावं तद्दृश्यादिरूपं भवति स्वभाव-स्यान्यथाभावाभावात्। न चेदमौपाधिकम् नित्यादिसमभिव्या-हारेणाभेदेन निर्देशात्। यद्यदृश्यत्वं तस्य कदाचिद् व्याहन्येत नित्यत्वमपि तथा व्याहन्यताम्। न च स्वाप्ययाधिकरणादौ प्रथमे पादे उमाधिकरणे द्वितीये च श्रुत्या साक्षिकमेव सरूपो-पासनमिति वाच्यं श्रुत्यैव तदसम्भवप्रतिपादनेन प्रागुपदर्शित-श्रुतीनामब्रह्मकाचेतन-देवताक-यज्ञमात्र-परत्वात्, न चाचेतन-मपि ब्रह्मैव, तस्य सर्व्वात्मकत्वादिति वाच्यं अतस्य मृत्तिका-देरप्युपास्यत्वप्रसङ्गात्, न चेष्टापत्तिः गायत्रीमन्त्रादिवत्; 'यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इत्यादिश्रुत्या उपासनाविषयस्य ब्रह्मत्व-प्रतिषेधात्। इति शङ्कायामुत्तरं पठति—

( अदृश्यत्वाधिकरणम्—५ । )

## अदृश्यत्वादिगुणको धर्म्मोक्तेः ।१।२।२१ ॥

अदृश्यत्वादयो गुणा यस्य सः, आदिपदेनाग्राह्यत्वादिग्रहणम् । गुणो इति स्वभावस्वरूपताव्यावर्त्तनाय । विद्या देवदत्तस्य गुणो न तु स्वभावः । अन्तर्य्यामीति प्रकृतं स ब्रह्मसमानार्थकः पुंलिङ्गशब्दः, तदपेक्षयात्र पुंलिङ्गप्रयोगः । अत्र हेतुः 'धर्म्मोक्तेः' धर्म्माणां = धर्म्मविशेषाणां श्रुतिष्वभिधानात् । धर्म्मविशेषश्च दृश्यत्वं ग्राह्यत्वं शरीरवत्त्वञ्चैवमादयः तथाहि 'यत्तदद्रेश्यम्' इति श्रुतावेव 'परिपश्यन्ति धीराः' इति दृश्यत्वमुक्तम् । 'भूतयोनिम्' इति ग्रहणलिङ्गञ्च । 'तज्जलान्' इत्युपासनाविधायकश्रुतौ 'यतो वा इमानि भूतानि जायन्ते' इत्यादि श्रुतौ च जगत्कर्त्तृत्वादिना ब्रह्मणो ग्रहणमुक्तम् । 'विवृणुते तनूं स्वाम्' इत्यादौ शरीरवत्त्वञ्चेति । एवञ्च यथारणौ स्थितोऽप्यग्निर्मन्थनमन्तरेण न दृश्यते, तथा सर्व्वत्रस्थितमपि ब्रह्म विहितसाधनमन्तरेण न दृश्यते; इत्यदृश्यत्वमेवंविधाश्चान्ये केचिद्गुणा ब्रह्मणि वर्त्तन्ते, मन्थनेनाग्नाविव साधनविशेषेण तत्रापि दृश्यत्वं घटते इति तात्पर्य्यम् । न चैवं 'नेदं यदिदमुपासते' इत्युपासननिषेधश्रुतिव्याकोप इति वाच्यम्, 'नेदं यदिदमुपासते' इति श्रुत्या ब्रह्मण उपासनविषयत्वसामान्यस्यानिषेधात्, किन्तर्हि इदं = दृषत्पाषाणादिकं परिदृश्यमानं वस्तु यत् उपासते मूढा इति शेषः, ब्रह्मणि तदन्यत्वस्यैव प्रतिपादनात् । अत्र तु 'शान्त उपासीत' इत्यनेन उपासकस्य मूढवैलक्षण्यमपि दर्शितम् । तस्माद् ब्रह्मव

उपासनमुपपद्यत एवेति नैपुणोन्नेयैषा सरणिः । १ । २ । २१ ।

ननु अदृश्यत्वादिगुणकस्य निराकारस्य कथमुपास्यत्वं तदाह सूत्राभ्याम् तत्राद्यम्—

विशेषणभेदव्यपदेशाभ्यां नेतरौ । १।२।२२॥

अदृश्यत्वादिगुणकास्त्रयो भवन्ति चिन्मात्रलक्षण आत्मा, त्रिगुणा प्रकृतिरचिन्मात्रस्वरूपा प्रधानापराख्या, नित्यसम्बद्धचिदचिदुभयात्मकः परमात्मा चेति तत्र इतरौ तृतीयादन्यौ उपासनाविधिविषयौ न भवतः, कुतः 'विशेषणभेदव्यपदेशाभ्याम्', उपासनाविधिवाक्ये 'तज्जलान्' इति विशेषणमस्ति, न च तच्चिन्मात्र उपपद्यते निर्विकारस्य चिन्मात्रस्य जन्मलयस्थानत्वासम्भवात्; न च तत्रत्यं सत्यसङ्कल्प इति विशेषणं मूलप्रकृतावुपपद्यते, अचित्स्वरूपायाः सङ्कल्पासम्भवात्; तथा भेदव्यपदेशः प्रत्येकभेदद्योतकशब्दप्रयोगः स न तयोः प्रत्येकं युज्यते, तथाहि 'सर्व्वं खल्विदं ब्रह्म' इति, उपासनाविधिवाक्यपूर्व्वांशस्तत्र चिदचिद्द्वयमेव सर्व्वान्तर्गतं यदि चिन्मात्रं ब्रह्मात्र गृह्यते, तत्राचितोऽप्रवेशेन सर्व्वात्मकं तत् न स्यात् । यदि वा मूलप्रकृतिः, चिन्मात्रांशस्यानुपादानात् सर्वात्मकत्वं तत्र न स्यात्; तथा च सर्व्वम् इति व्यपदेश एव प्रत्येकं भेदद्योतकः । तथाच पारिशेष्यात् तृतीयश्चिदचिद्द्वात्मकपरमात्मैवोपासनाविधिविषय इति स्थितम् । तदुपासनञ्च श्रवणोत्तरं जगत्कर्त्तृत्वादिना मननं मन्त्र-प्राण-हृदयाद्यन्यतमालम्बनेन एकाग्रीकृतस्य मनसो निर्ध्या-

पारतयावस्थापनञ्च यन्निदिध्यासनमाख्यायते । न चेदृगुपासनमदृश्यत्वादिगुणकेऽसम्भवत्स्वरूपं भवति । १।२।२२।

नन्वेवं साकारोपासनमनुपपन्नम्, 'न च विवृणुते तनुं स्वाम्' इत्यनेन, प्राणाधिकरणादिदर्शितदिशा च तत्प्राप्तिरिति वाच्यम्, 'तनुम्' इत्यस्य स्वरूपमात्रपरत्वेन अन्यत्रापि तद्रूपेणैव समाधानात्, प्रमाणान्तरस्य वैदिकश्रुत्यपेक्षया दुर्बलत्वाच्च 'तज्जलान्' इत्यनेन भारूप इत्यस्य प्रकाशस्वरूपपरतया च निराकारब्रह्मण एवोपास्यत्वोपदेशात् स्वरूपञ्च ब्रह्मणश्चिन्मात्रं वा चिदचिदात्मकं वेत्याशङ्कायामदृश्यत्वादिगुणकस्यापि नैकान्ततो निराकारत्वमित्याशयेन द्वितीयमुपन्यस्यति—

रूपोपन्यासाच्च । १।२।२३ ।।

उपासनविशेषात्मकमन्त्रे मन्त्रान्तरे च रूपवत्तया परमात्मनः कथनात् अदृश्यत्वादिगुणकः कदाचित् साकारोऽपि सन्नुपासनविधिविषयो भवति । ते च मन्त्रा यथा 'य एकोऽवर्णो बहुधा शक्तियोगाद् वर्णाननेकान् निहितार्थो दधाति विचैति चान्ते विश्वमादौ स देवः स नो बुद्ध्या शुभया संयुनक्तु' इति 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति । 'तस्मिन् छुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितञ्च । एष पन्था ब्रह्मणो हानुवित्तस्तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्च' ( बृ० ४।४।९ ) इति च । एषु प्रथमः प्रार्थनरूपतयोपासनस्य लिङ्गं भवति—द्वितीयश्च स्तुतिरूपः;

'अनादिमत्त्वं विभुत्वेन वर्त्तसे यतो जातानि भुवनानि विश्वा' इति स्तुतिमन्त्रानन्तरमेव तस्य व्याख्यानरूपत्वात्, उपक्रमे 'बुद्ध्या शुभया संयुनक्तु' इति, पुनस्तस्य मन्त्रकतिपयैः स्वरूपव्याख्यानानन्तरं 'बुद्ध्या शुभया संयुनक्तु' (श्वे० ४।१२) इति प्रार्थनं ततश्च हविषा विधेमेत्युपासनाविशेषप्रकारबोधनेनान्तरालिकमन्त्राणामुपासनारूपतया तद्विधेराक्षेपात्। सामान्यविधिश्च 'तज्जलान्' इति 'शान्त उपासीत' इति चैवमादिः—तत्प्रकारश्च 'क्रतुं कुर्वीत' इत्यादि विवृतया प्रकाशितः। क्रतोः प्रकारभेदश्च 'अग्निहोत्रमुपासत' इतिवत् श्वेताश्वतरमन्त्राभ्यामपि दर्शितः। तृतीयस्तु चिदचिदात्मकब्रह्मोपासनफलस्तुतिरूपस्तदुपासनमाक्षिपति। एवञ्चोपासनाविधिपर्य्यवसायिषु मन्त्रेषूपास्यस्य रूपोपन्यासात् साकारस्योपासना लभ्यते। ननु चिदचिदात्मकब्रह्मोपासनफलस्तुतिरूपत्वं कथं तृतीयस्येति चेदत्र ब्रूमः, ब्रह्मविदो गतिमुक्त्वा 'अन्धं तमः प्रविशन्ति येऽविद्यामुपासते। ततो भूय इव ते तमो य उ विद्यायां रताः' इति मन्त्रेणाविद्यापदवाच्याचिन्मात्रोपासकस्य विद्यापदवाच्यचिन्मात्रोपासकस्य च निन्दितत्वात् तदुभयात्मकब्रह्मोपासकस्य ब्रह्मप्राप्तेरर्थतो लाभात्। ईशोपनिषदि एतन्मन्त्रानन्तरं 'विद्याञ्चाविद्याञ्च यस्तद् वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' इति चिदचिदात्मकब्रह्मवेदनरूपोपासनस्य मुक्तिफलकत्वकीर्त्तनाच्च। न च 'अजामेकाम्' इति मन्त्रो मूलप्रकृतिमात्रपरः, 'सृजमानाम्' इति कर्त्तृव्यपदेशात् न हि चैतन्यविनाकृता कर्तिरिष्यते, तस्मा-

च्चिदचिदात्मिका शक्तिरेवात्र प्रतिपादिता, न तु जडा प्रकृतिः। यं हि जीवम् इय समर्थं नावगच्छति तं तावन्मातेव बालमपत्यं स्वाङ्क एव भोगेन निरुध्य स्थापयति। यञ्च समर्थं मन्यते तं भोगान्मोचयति; तत्कर्त्तृकं जीवस्य यद् भोगमोचनं तदेव मुक्तत्वव्यपदेशाय भोगोपधानहानमिति गीतं भवति। अनुपदमर्थान्तरं च वक्ष्यामः। इदञ्च रूपं न चिन्मात्रस्थं भवत्यसम्भवात् 'अवर्णम्' इति श्रुतेश्च, नापि मूलप्रकृतिस्थं तत्र रूपानभिव्यक्तेः, 'अरूपमव्ययं महतः परम्' इति श्रुतेः, उभयात्मके ह्यन्यादृशरूपस्य साधकादृष्टविशेषसहकृतस्वेच्छोपकल्पितस्य अनभिव्यक्तस्य भूतबीजमूलप्रकृतिवृत्तेः सम्भवात्। अतएव 'अवर्णम्' इति श्रुतिः 'तच्छुभ्रं ज्योतिषां ज्योतिः' इति श्रुतिः, 'य एकोऽवर्णः' इत्यादिश्रुतिश्च न विरुध्यन्ते स्वतन्त्रत्वात् परमात्मनः, चिन्मात्रस्य त्विच्छाविरहेण कथमपि रूपसम्बन्धाभावात्, यदि च चिन्मात्रस्य तादृशशक्तिः स्वीक्रियेत तदायातं मार्गेण, शक्तिरियं तस्माद् भिद्यते न वा? भिद्यते चेद् गतं चिन्मात्रवादेन; न भिद्यते चेत् चिच्छक्तिश्च इच्छाशक्तिश्च नित्यसम्बद्धेति मतमस्माकमाश्रीयते चिदिच्छयोरेकान्तेनाभेदासम्भवात्। ऐक्यव्यपदेशस्तु नीरक्षीरवदित्युक्तम्। चः समुच्चये। ननु तृतीयप्रमाणमन्त्रोक्तं 'शुक्लम्' इत्यादिरूपं नाडीनामेव आहारविशेषनिबन्धनमिति चेत्, न, आदित्यरश्मिकृतमिति छान्दोग्येऽभिधानात् आदित्यरश्मीनाञ्च ब्रह्मसम्बन्धितायाः प्राक्प्रतिपादितत्वात्। अत्र 'एष पन्था ब्रह्मणोऽनुवित्त' इति स्पष्ट-

मुक्तत्वाच्च । नन्वेवं साकारमेव ब्रह्म स्यापद्यते इति चेन्न वस्वादिदेवविशेषाणामुमाद्युपासकानां सुखार्थं तत्तद्रूपेणादित्यमण्डलेऽधिष्ठानं विभुनोऽपि ब्रह्मणः, यथा सर्व्वगतस्याप्याकाशस्य घटाकाशसूचीरन्ध्रादिरूपेण स्थितिः श्रोत्रेन्द्रियरूपेण वा तैर्थिकान्तरस्य, तद्वत् । ननु तथाप्यनुपपत्तिर्नाडीखण्डस्य । नाडीनां रूपवत्त्वस्योपासकानुपासकसाधारण्यप्रतिपादनाद् इति चेन्न नाडीनां रूपं वस्तुसदपि नानुपासकेन दृश्यते, यश्च द्रष्टा स तावदुपासनासिद्ध एव, 'तस्य च विदुषः' इत्यनेन श्रवणादिरहितस्य चाविदुष इत्यनेन, गतिभेदस्य बोधनान्न काचिदनुपपत्तिः । या ब्रह्मनाडी सुषुम्नाख्या, सैवोपास्यरूपभेदेन विभिन्नवर्णा भवति तद्रूपापन्नब्रह्माधिष्ठितत्वात्, तथा चोत्क्रान्तिः । श्रुत्यन्तरे नाड्य इति बहुत्वनिर्देशस्तु तदुपासनसिद्धानां सर्वासु नाडीषु तद्रूपेण ब्रह्मणोऽधिष्ठानद्योतकः । उत्क्रान्तिस्तु सुषुम्नयैव, तयोर्द्ध्वमायन्निति श्रुतेः । तस्माद् रूपमिदं ब्रह्मण एवेति ब्रूमहे । तच्च साधकाधिकारभेदेन शुक्लमिति शिवसरस्वतीविशालाक्ष्यादिमूर्त्तिषु, नीलमिति कालीताराकृष्णरामादिमूर्त्तिषु, रुद्रमूर्त्तिभेदे पिङ्गलमिति 'बभ्रुः सुमङ्गलः' इति 'पुरुषं कृष्णपिङ्गलम्'इति च श्रुतेः, हरितमिति मरकतप्रख्ये दुर्गामूर्त्तिविशेषे, लोहितमिति जगद्धात्रीत्रिपुरसुन्दर्य्यादिमूर्त्तिषु, रूपं ज्योतिर्म्मयं वेदितव्यम् । तत्र कालीप्रभृतिदेवीनां रूपं मूलप्रकृतावनागतावस्थं यत् तदेव, शिवस्य तु त्रिगुणायास्तस्याः प्रकृतेस्तमोंऽशो यदनागतावस्थं तदेव, कृष्णरामादिविष्णुमूर्तीनाञ्च महत्तत्त्वे यदना-

गतवस्थं तदेव। अनागतावस्थत्वमेवानभिव्यक्तिः। तेज आदि-भूतानामुपादानपारम्पर्य्येण तत्र तत्र वर्त्तमानत्वात् तेषामना-गतावस्थतयैव रूपाणामनागतावस्थत्वं वेदितव्यम्। साधका-दृष्टाद् यथा तद्रूपं परमात्मनोपादीयते तत्प्रकारः प्रपञ्चित-पूर्व्वः। एतेन रूपाणां गुणप्रधानभाव उन्नेय इति रहस्यम्। न च श्वेताश्वतरमन्त्रे 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः' इत्यादिकथनेन प्रतिषिद्धस्तावदाकारो ब्रह्मणः, इति वाच्यम्, 'रुद्र यत्ते दक्षिणं मुखं तेन पाहि नित्यम्'इति 'या ते रुद्र शिवा तनूः' इति 'यामिषुं गिरिशन्त हस्ते बिभर्षि' इति च तत्रैवाकारप्रति-पादनात् साकारनिराकारत्वयोरविरोधस्य व्यवस्थापितत्वाच्च। न चात्र 'रुद्र, इत्यादिना' शिव एवोक्तः, न ब्रह्म न वा शक्तिरिति वाच्यम्, 'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः। हिरण्यगर्भं जनयामास पूर्व्वम्' इत्यनेन मन्त्रेण जन्माद्यस्य यत इति ब्रह्मलक्षणस्य रुद्रे समन्वयात्, तस्य ब्रह्मत्वसिद्धेः। न चैवं शक्तिर्ब्रह्मेति व्याहतम्, तस्यैव शक्तित्वात्, 'स्वाभाविकी ज्ञानबलक्रिया च' इति शक्तिस्वरूपतया तस्य प्रतिपादनात्। 'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्' इत्यत्राचितः प्रकृतेर्मायात्वं तन्नित्यसम्बन्धवत्याश्चितश्च महेश्वरत्वकथनेन चिदचिदात्मतयैव तस्य पर्य्यवसानात्। न चैवमुमारूपं ब्रह्मेति यदुक्तं तस्य का गतिरिति चेत्, अचोद्यमेतदिति ब्रूमः। वर्णाननेकान् निहितार्थो दधातीति प्रथमप्रदर्शितमन्त्रेण तद्वि-वरणात्, —यः साधको यादृशस्तस्यार्थमनुरुध्य परमात्मनो वर्ण-

विशेषधारणात्। वर्णविशेषेत्यनेन मूर्त्तिभेदस्य लाभात्। तथाच मातृभावेन दुहितृभावेन वोपासकानामर्थाबोमादिरूपं पितृरूपेण गुरुरूपेण चोपासकानां शिवादिरूपम्, सख्यकान्तत्वादिभावेनोपासकानां श्रीकृष्णादिरूपं पारमैश्वर्य्येणोपासकानान्तु कुलमन्त्रादिभेदादन्यतमरूपं भवति, एतेन सौरादीनामुपासनमपि गृहीतं वेदितव्यम्। एषु मातृभावेनोपासकानां सिद्धिलाभो झटिति भवतीत्यतस्तस्य प्राशस्त्यमुच्यते। 'बाल्येन तिष्ठासेत्' इत्यादिश्रुतेः। एतदग्रे स्फुटीभविष्यति। तादृशरूपवत्त्वं च वास्तवमिति प्रदर्शितमन्त्रैरावेदितम्। यादृशं रूपमस्तु, तदवच्छिन्नापि नित्यसम्बद्धचिदचिदुभयात्मिका शक्तिरेवादृश्यत्वादिगुणकं ब्रह्मेति शाक्तत्वं फलतः सर्वेषामेवेति बोध्यम्। साधकविशेषेण पुनरधिकारभेदादन्यतमं रूपमुपास्यते। पञ्च वा रूपाण्युपास्यन्ते इत्याद्यन्यदेतत्।

नन्वेवं ये नीरूपोपासकास्तेषां ब्रह्मप्राप्तिः कथं भवेत्? उपास्यरूपेण तेषामुत्क्रमणनाड्या अनुरञ्जितत्वासम्भवादिति चेन्नैवम्, यस्तावत् चिदचिदात्मकब्रह्म विदित्वा रूपविशेषवज्ज्योतिर्म्मयमूर्त्तिमालम्ब्य तदुपासनया पुण्यकृत् स तैजसः, तस्यायं मार्गः, नतु सर्व्वेषामित्यस्य श्रुत्या प्रतिपादितत्वात्। नीरूपोपासकस्य ब्रह्मसाक्षात्कारवत उत्क्रमणमेव न भवति 'न तस्य प्राणा उत्क्रामन्ति' इति श्रुतेः। तस्मान्न साकारोपासनमप्यनुपपन्नमिति पुष्कलम्। १।२।२३।

एतावता सूत्रजातेन चिदचिदात्मकब्रह्मणा उपासनविधिविषयत्वमुपपादितम् । हवनयजनादिकमप्युपासनविशेषः, तदपि यथा ब्रह्मपरतया युज्यते तदुपपादयितुम् 'एकोऽवर्णो' इति श्वेताश्वतरीय-रूप-मन्त्रादनन्तरं 'तदेवाग्निः' इति मन्त्रसत्त्वात् तत्क्रमानुरोधेन,—रूपसूत्रानन्तरं वैश्वानराधिकरणापराख्यमग्न्यधिकरणमारभते—

( वैश्वानराधिकरणम्—अग्न्यधिकरणं वा—६ । )

## वैश्वानरः साधारणशब्दविशेषात् ।१।२।२४।।

'वैश्वानरः'=वैश्वानरशब्दोपस्थाप्यो वा अग्निप्रभृतिशब्दोपस्थाप्यो वा उपासनाविशेषविषयतया प्रतिपाद्यमानोऽग्निरित्यर्थः 'द्युभ्वाद्यायतनं स्वशब्दात्' ( ब्र० सू० १।३।१ ) इत्यादौ भूशब्दार्थग्रहणवत् अत्रापि वैश्वानरशब्दार्थग्रहणात् इत्याशयः, ब्रह्म वेति शेषः, कुतः 'साधारणशब्दविशेषात्'=साधारणशब्देषु नानार्थबोधकशब्देषु यो विशेष एकमात्रबोधकधर्म्मसम्बन्धस्तस्मात्, उदाहरणभूतमेकं 'अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम' इति (बृ० ५।१५) अत्र अग्न इति तेजोभूतमग्निः, अग्निदेवता, ब्रह्म वा सम्बोध्यते ? इति संशयः; प्रसिद्धत्वात् तेजोभूतमग्निरेव सम्बोध्यते, इत्याह; न च तत्र विद्वान् इत्यनुपपन्नम्, देवदत्तो जानातीतिवत् अग्निदेवतासमवेतवेदनस्यावच्छेदकतयाश्रयत्वेन तदुपपत्तेः । सुपथा नयनस्यापि अन्त्येष्टि-

साधनतया तत्प्रार्थनं नासङ्गतम्, दाहेन शरीरशुद्धिहेतुतया पापनाशप्रार्थनमपि नायुक्तम्। अथवा अग्निदेवतैवास्तु—विद्वत्त्वादीनां तत्र निसर्गादेव वृत्तेः। शक्त्युत्कर्षेण तत्तत्प्रार्थनायास्तत्रैव युक्तत्वात्, इति प्राप्ते—सिद्धान्तो वैश्वानर इति सूत्रेणोक्तः। प्रकृते, अग्निपदोपस्थाप्योऽर्थो ब्रह्मैव, तेजोभूतदेवताब्रह्मसाधारणस्याग्निशब्दस्य तेजोभूतदेवतेतरब्रह्ममात्रबोधकधर्म्मसम्बन्धात्। स च धर्म्मः प्रकरणविशेषोत्तरत्वादिः, अत्र च 'तस्या अग्निरेव मुखम्' इत्यनेन अग्नेर्ब्रह्मत्वं पूर्व्वब्राह्मणे प्रकृतम्, तद्यतिक्रमात्, 'योसावसौ पुरुषः सोऽहमस्मि' इति ब्रह्मज्ञस्य प्रार्थनाप्रणाममन्त्रत्वाच्च युक्तः; न हि ब्रह्मज्ञोऽन्यां देवतामुपास्ते, 'अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवतानाम्' इति (बृ० १।४) इति निन्दाश्रवणात्। न चैवमभेदबुद्धौ प्रार्थनप्रणाममन्त्रौ न युक्ताविति शङ्क्यम् 'सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्। सामुद्रोऽपि तरङ्गः क्वचन समुद्रो न तारङ्गः' इति न्यायात्। तस्माद् ब्रह्मैवात्र सम्बोध्यम्—तस्यैव प्रणामरूपोपासनात्र दर्शिता ।१।२।२४।

ननु एतन्मन्त्राऽव्यवहितपूर्व्वनिगदे 'ॐ क्रतो स्मर कृतं स्मर' इति सत्त्वात् अत्र 'अग्ने' इत्यनेन अग्निदेवता वा तेजोभूतं वा संबोध्यते इत्येव युक्तम्, क्रत्वङ्गत्वात् क्रतूपकारकत्वाद् वा तत्र क्रतुशब्दप्रयोगस्य अग्नित्वसम्पादकपूर्व्वकल्पकृतकर्म्मस्मरणप्रार्थनस्य च युक्तत्वात्, अव्यवहितप्रक्रमादेतन्मन्त्रेऽपि तस्यैव

संबोध्यत्वं न तु व्यवहितप्रकरणीयस्य ब्रह्मण इत्याशङ्कां निरसितुमाह—

स्मर्य्यमाणमनुमानं स्यादिति ।१।२।२५।।

स्मर्य्यमाणं=स्मृतिस्थितं वचनम्, अनुमानम्=श्रुत्यनुमापकं स्यात्=भवतु, इति शब्दो हेत्वर्थः। 'अहं क्रतुरहं यज्ञः' इति 'स्मृतिर्मेधा धृतिः क्षमा' इत्यनयोर्गीतावचनयोः क्रतोः स्मृतेश्च ब्रह्मस्वरूपत्वकीर्त्तनात् विनैव लक्षणां क्रतो इति सम्बोधनस्य ब्रह्मणि युक्तत्वात्; स्मृतिवचनमपि प्रमाणं श्रुतेरनुमापकत्वात्। सूत्रे इतिशब्दो हेतुवचनः। तस्मात् क्रतो इति सम्बोधनं ब्रह्मण एव युक्तम्, तेन ओमिति विशेष्यपदं साक्षाद्ब्रह्मवाचकमुपपद्यते। तस्य स्मृतितद्धेतुमेधारूपत्वात् तद्भावप्रार्थनञ्च नानुपपन्नम्। हे क्रतुरूप ब्रह्मन् त्वमेव स्मृतिरूपं स्मृतिमच भव, नतु त्वदतिरिक्तं किञ्चिन्मे प्रतिभासेतेत्यस्य तदर्थत्वात् ।१।२।२५।

ननु क्रतो स्मरेत्यत्र क्रतुपदं न क्रत्वङ्गपरं क्रतूपकारकपरं वा किन्त्वध्यवसायपरम्, अध्यवसायात्मा च जीवः 'अथ खलु क्रतुमयः पुरुषः' इति श्रुतेः, तथाच हे अग्निदेव! यादृगध्यवसायवान् पूर्व्वकल्पकृतकर्म्मणा त्वयमग्निरभवस्तत्स्मर, सुपथनयनं खलु ते तत्कर्म्मफलमिति स्मृत्वा च मां सुपथा नय— 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म' इति स्मरणादिति भावः। अध्यवसायो निश्चयः तस्य चान्तःकरणधर्म्मत्वं कामः सङ्कल्पो विचिकित्सा

अद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्व्वं मन एव' इति श्रुतेः (बृ० १।५।३) मन एव मनस्येवेत्यर्थः, धीः ज्ञानं निश्चया-दयश्च ज्ञानविशेषाः। एवञ्च जीवस्यैवान्तःकरणवत्त्वात् 'अग्ने' इत्यनेन देवतारूपजीवविशेष एव सम्बोध्यते, न ब्रह्म इति शङ्कागर्भतत्समाधानसूत्रमाह—

**शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेत्, न, तथा दृष्ट्युप-देशादसम्भवात् पुरुषमपि चैनमधीयते १।२।२६॥**

'शब्दादिभ्यः' शब्दः = श्रुतिः आदिपदात् स्मृत्यादिपरिग्रहः, श्रुत्याः स्मृत्याः तदनुगतानुमानप्रमाणाच्चेत्यर्थः 'अन्तः-प्रतिष्ठानात्' अन्तःकरणधर्म्मवत्त्वात अन्तःकरणावच्छिन्नत्वाद्वा अत्रापि शब्दादिरेव प्रमाणमिति भावः तस्मात् कथितमन्त्रे 'अग्ने' इति पदेन जीव एव सम्बोध्यते न ब्रह्म, परिच्छिन्न-स्य जीवस्यापरिच्छिन्नब्रह्मत्वाभावादित्याशयः। 'इति चेत्' इति यद्युच्यते—तन्निराकरोति 'न'—तत्र—'क्रतो' इति सम्बो-धनेन अग्नौ 'तथादृष्ट्युपदेशात्' = तथा—ब्रह्मरूपतया दर्शनस्यो-पदेशात् ज्ञापनात् तथाहि श्रूयते 'संज्ञानमाज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति सर्व्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति' इत्यनन्तरं 'प्रज्ञानं ब्रह्म' इति (ऐ० ३।२-३)। क्रतोः प्रज्ञानरूपतया प्रज्ञानस्य ब्रह्मरूपतया च प्रदर्शितश्रुत्यन्तरेण क्रतुशब्दस्य व्याख्या-नात्, अत्र तस्यैव शब्दस्य प्रयोगेण तदर्थस्याग्निपदार्थभेदात् तत्र ब्रह्मदृष्टौ पर्य्यवसानात्। 'असम्भवात्' = क्रतुशब्दस्यार्थान्तरास-

म्भवात्। क्रतुर्यदि यज्ञो यदि वा सङ्कल्पोऽध्यवसायो वा तस्य नात्र सम्भवः, स्मरणासम्भवात् क्रत्वङ्गरूपार्थस्तु लाक्षणिकः, अध्यवसायार्थत्वेऽपि तस्य जीवरूपत्वासम्भवात् 'क्रतुमयः पुरुषः' इति श्रुतिस्तु अन्नमयो यज्ञ इतिवत् अध्यवसायप्रधानत्वं जीवस्याह, न तु तदभेदः, 'संज्ञानमाज्ञानम्' इत्याद्युपदर्शितश्रुतिविरोधात्, यदि श्रुतावपि प्रज्ञानशब्द एव जीवपरस्तत्र ब्रह्मत्वोपदेशश्च तत्त्वावबोधार्थ इत्युच्यते तदात्राप्यग्निदेवताया जीवस्वरूपायास्तत्त्वतो ब्रह्मत्वम् 'अग्ने' इत्यनेन ब्रह्मण एव सम्बोध्यत्वं तत्र ब्रह्मदृष्ट्यर्थमित्युच्यमानेऽस्मिन् सिद्धान्ते बाधकाभावात्। यच्च जीवस्यान्तःप्रतिष्ठत्वेन परिच्छिन्नत्वात् अपरिच्छिन्नब्रह्मणस्तद्वाचकपदेनाभिधानमयुक्तमित्याशयेनोक्तं तदपि एतेन परिहृतम्। 'अपि च' किञ्च 'एनम्' अग्निं वैश्वानरशब्देनाप्युपस्थापितम् अन्तःप्रतिष्ठितत्वेन 'पुरुषम्' अधीयते शातपथाः इति शेषः। तथाहि 'स एषोऽग्निर्वैश्वानरो यत्पुरुषः, स यो हैतमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' ( शा० ब्रा० १०।६।१।११ ) इति अत्र प्रथमं पुरुषपदं तेन 'पूर्ण एषः' इति श्रौतनिरुक्तया ब्रह्मपरं, एतेनापरिच्छिन्नत्वं प्राप्तम्, पुरुषविधं प्रकरणाद् विराड्देहाकारम्, 'पुरुषे' जीवदेहे 'अन्तःप्रतिष्ठितम्'। एतेन यो ह्यपरिच्छिन्नोऽग्निपदवाच्यः स एवान्तःप्रतिष्ठित इति परिच्छिन्नरूप इति प्राप्तम्, किंतु नात्र विरोधः,—सर्वव्यापिनः अन्तःप्रतिष्ठितत्वे विरोधाभावात्। यथा चेदं—तथा एकान्तरितसूत्रात् क्रमिकसूत्रजातेनोपपादयिष्यते।१।२।२६।

ननु सर्व्वेषामेव ब्रह्मरूपतया, अग्निदेवतात्वेन तेजोभूतत्वेन वा यस्य ग्रहणं तदपि स्वरूपसद् ब्रह्मैवेति अतो इत्यादि सम्बोधनं यथाश्रुतमेव तत्रोपपद्यत इत्याशङ्कायामाह—

अतएव न देवता भूतञ्च ।१।२।२७।।

'अतएव' = ब्रह्मदृष्ट्युपदेशादेव,—'देवता' = अग्निः 'भूतं' = तेजःस्वरूपम्, 'च' = वा 'न' = न संबोध्यत इति शेषः। न अग्निदेवतात्वादिना स्वरूपसतो ब्रह्मणो दृष्टिर्ब्रह्मदृष्टिः, यत्र दृष्टौ ब्रह्मत्वेन विषयता सैव ब्रह्मदृष्टिः, सा च विषयता उद्देश्यतावच्छेदकत्वरूपा वा विधेयत्वरूपा वा। तेनाग्निदेवतात्वादिना अग्निदेवतादिविषयकज्ञानस्य न ब्रह्मदृष्टित्वम्, एवञ्चात्र मन्त्रवर्णेऽग्निपदाद् यद्यग्निदेवतात्वादिना अग्निदेवतादेरुपस्थितिस्तदैवाग्निदेवतादेः सम्बोध्यत्वं भवति न त्वन्यथा, तादृश्यामुपस्थितौ तज्जन्यशाब्दबोधे वा न ब्रह्मत्वेन विषयता; अतः सा न ब्रह्मदृष्टिः, 'योऽसावसौ पुरुषः सोऽहमस्मि' इत्युपक्रम्य 'अग्ने नय' इति मन्त्रवर्णे 'अग्ने' इति सम्बोधनस्य क्रतुत्वेन तत्सम्बोधनस्य च ब्रह्मविषयकत्वे तु भवत्येवेयं ब्रह्मदृष्टिरतो नाग्निदेवता न वा तेजोभूतं सम्बोध्यत इति भावः ।१।२।२७।

नन्वेवमेकान्तरितपूर्व्वसूत्रे 'पुरुषमपि चैनमधीयते' इति प्रतीकस्य विवरणे शतपथब्राह्मणश्रुतौ यत् पूर्णत्वं विराड्देहत्वमन्तःप्रतिष्ठत्वञ्चाग्नेरुक्तं तत्र यो विरोधोऽनुभूयते सर्व्वव्यापित्वेन तत्परिहारः कृतः, स न युज्यते; साक्षात् प्रयुक्तं

यदन्त:प्रतिष्ठितमिति पदं तदर्थविवक्षणे विरोधस्य दुष्परिहर-त्वात् अविवक्षणे तत्पदस्य वैयर्थ्यमिति शङ्कासमाधानाय प्रथमं जैमिनिमतमाह—

साक्षादप्यविरोधं जैमिनिः ।१।२।२८॥

'साक्षादपि' = 'अन्त:प्रतिष्ठितम्' इति पदस्य विवक्षि-तार्थस्य प्रत्यक्षत्वेऽपि, अविरोधं जैमिनिः आचार्य्यो मन्यते। तदर्थस्तु 'अन्त:' = अन्त:करणस्य 'प्रतिष्ठितं' = प्रतिष्ठा निय-मनं यस्मादिति व्युत्पत्तिलभ्योऽन्तर्य्यामिरूप:। 'पुरुषे' पुरुष-वृत्ति:, जीवात्मनि तिष्ठन्नित्यर्थ:, 'य आत्मनि तिष्ठन्' इति वाजसनेयश्रुते: ( ब्र० सू० १।२।२० शारीरकभाष्ये )। पूर्णत्व-मन्तर्य्यामित्वञ्च न विरुद्धमिति जैमिनिमुनेर्मतम्। यद्यपीदं वाजसनेयिनामन्तर्य्यामिब्राह्मणे उक्तं तथापि न तदग्निमधि-कृत्येति पुनरत्रोपात्तमित्यवधेयम् ।१।२।२८।

अत्र मतान्तरमाह—

अभिव्यक्तेरित्याश्मरथ्यः ॥ १।२।२९ ॥

'अन्त:' हृदयप्रदेशे 'अभिव्यक्ते:' प्रकाशात्, यथा गव्यपयसो गोशरीरव्यापित्वेऽपि ऊधस्यभिव्यक्तिस्तथा ब्रह्मस्व-रूपस्याग्ने: विश्वव्यापित्वेऽपि ज्ञानाकारेण प्रकाशो हृदय एवेत्यन्त:प्रतिष्ठितत्वं नातो विरोध इत्याश्मरथ्याचार्य्यो मन्यते नात्रान्त:प्रतिष्ठितमित्यत्र बहुव्रीहिसमासापेक्षेति स्व-रस: । १।२।२६ ।

आचार्य्यान्तरमतमाह—

अनुस्मृतेर्वादरिः ।१।२।३०॥

'अनुस्मृते:' = लिङ्गदर्शनव्याप्तिस्मरणाभ्यामनु पश्चात् भवतीति अनुस्मृतिः, अनुमानं मननमित्यर्थः; 'श्रोतव्यो मन्तव्यः' इति 'चेतसा वेदितव्यः' इति च श्रुतेः, तद्धेतुकमिदमन्तःप्रतिष्ठितत्ववचनं सर्व्वव्यापिनोऽपि ब्रह्मण इति बादरिराचार्य्यो मन्यते । १।२।३०।

ननु शातपथब्राह्मणे प्रादेशमात्रत्वमपि अग्न्यादिपदवाच्यस्य दर्शितम्—अन्तःप्रतिष्ठितशब्दस्यान्तर्य्याम्यर्थकत्वेऽपि पूर्णत्वप्रादेशमात्रत्वयोरस्त्येव विरोध इति जैमिनिमतं न समीचीनमित्याक्षेपस्य तन्मतेन परिहारमाह—

सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ।१।२।३१॥

'सम्पत्ते:' = सम्पत्तिहेतुका, प्रादेशमात्रत्वश्रुतिरित्यर्थादाक्षिप्यते । अपरिच्छिन्नस्य परिच्छिन्नत्वसम्पादनमत्र सम्पत्तिः अन्तर्भूतण्यर्थोऽयं प्रयोगः । तन्निमित्ता चेयं श्रुतिरुपदेशपरा, अत्र प्रमाणमाह 'तथा हि दर्शयति' इति । दर्शयति वाजसनेयिब्राह्मणमिति शेषः 'प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसम्पन्नाः तथा नु त एतान् वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामीति । स होवाच मूर्द्धानमुपदिशन्नुवाच एष वा अतिष्ठा वैश्वानर इति चक्षुषी उपदिशन्नुवाचैष वै सुतेजा वैश्वानरः' इति कायप्रदेशमभिनिर्द्दिश्य उपदिष्टं तेनाध्या-

त्ममूर्द्धाभेदेनाधिदेवमूर्द्धा सम्पाद्य ध्येय इत्यर्थः। तथाच अग्निवैश्वानरशब्दयोर्योगवृत्त्येश्वरपरत्वं, स एव विराट् स्वीयकायप्रदेशकल्पितद्युमूर्द्धत्वादिनोपास्य इति नास्ति कश्चिद् विरोध इत्याचार्य्यो जैमिनिराहेति समुदितार्थः एवमेव शारीरकभाष्य उक्तम् ।१।२।३१।

एतावता मतान्तरमुक्त्वा सिद्धान्तमाह—

आमनन्ति चैनमस्मिन् ।१।२।३२ ॥

चस्त्वर्थः। 'अस्मिन्' प्रकृते अग्निवैश्वानरादिशब्दार्थे 'एनम्'=परमात्मानं 'आमनन्ति' अभ्यासेन कथयन्ति श्रुतय इति शेषः। वैश्वानरं ब्रह्मत्वेन बोधयन्ति पुनः पुनः श्रुतय इत्यर्थः। तत्र ब्रह्म मूर्त्यवच्छिन्नं तदनवच्छिन्नञ्चेति द्वैरूप्यात् प्रादेशमात्रत्वाविमानत्वयोर्नास्ति कश्चिद् विरोधः। प्राणाग्निहोत्राभिप्रायेण चान्तःप्रतिष्ठितत्ववचनं तत्र यथा मातृभावेन ब्रह्मदृष्टिस्तदुपपादितपूर्व्वम्। श्रुतयश्च यथा—'यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने' इत्युपक्रम्य 'काली कराली च मनोजवा च सुलोहिता चापि सुधूम्रवर्णा स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्तजिह्वाः। इति (१।२।२–६) मुण्डकोपनिषन्मन्त्रः। हव्यवाहनोऽग्निः, यदग्नौ दत्तं हव्यं देवेभ्य उपतिष्ठते, तत् कस्मात् हेतोः? अनुशासनादेव ब्रह्मणः—अतस्तस्यैव हव्यवाहनत्वम्; तस्यैव मूर्त्तिविशेषावच्छेदेन स्फुरणमर्च्चिरिति जिह्वा इति च व्यपदिश्यते।

जिह्वा यथा रसं गृह्णाति तथैता मूर्त्तयो भक्तानां रसं गृह्णन्तीति जिह्वाव्यपदेशः। ता हि मूर्त्तयः काल्यादिनाम्ना प्रदर्शिताः।

ननु व्याहतमिदं वचनम्, उपोद्घाते अग्निज्वालानामेव काल्यादिशब्दप्रतिपाद्यतायाः साधितत्वादिति चेत् सत्यमेतत्, तस्य, ब्रह्मज्ञानहीनानां कर्म्मरतानां पूर्व्वमीमांसासमयेन, प्रत्ययानुवादरूपतया, अस्य चोत्तरमीमांसासम्मतसिद्धान्ततयोपन्यासेन पर्य्यनुयोगाभावात्। पूर्व्वमीमांसा हि खण्डशक्तिप्रतिपादिका, सर्वनियन्तृमहाशक्तिप्रतिपादिका चोत्तरमीमांसेत्युक्तमेवाधस्तात्। न च तत्रोक्तं 'कारणभावानुगमे ब्रह्मस्वरूपस्य' इत्यग्निविशेषणमिति वाच्यम्, अग्न्याश्रितखण्डशक्तीनामपि वस्तुतो ब्रह्माश्रितत्वप्रदर्शनाय स्वरूपसतो ब्रह्मभावस्याप्रावुक्तत्वात्। न तु तत्र तथाज्ञानापेक्षापीति।

अस्त्वेवं तथापि कथं नामास्य हव्यवाहनस्य परमात्मत्वं प्रसाध्यते इति चेत् एतत्साध्यकर्म्मणोऽपि ब्रह्मज्ञानस्येव ब्रह्मलोकप्रापकतायास्तत्र श्रवणात्, यथा—सप्तजिह्वामन्त्रानन्तरमेव 'एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन्। तं नयन्त्येताः सूर्य्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः। एह्येहीति तमाहुतयः सुवर्च्चसः सूर्य्यस्य रश्मिभिर्यजमानं वहन्ति। प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः' इति। अत्र च 'अधिवासभूतो देवानामेकः पतिः परमात्मा', 'यो देवानामधिपो यस्मिन् लोका अधिश्रिताः' इति श्वेताश्वतरमन्त्रवर्णात्। सर्वलोकाश्रयत्वाच्च तस्यैवाधिवाससंज्ञा इति

युक्तम् । न च 'प्लवाह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति ।' इत्युत्तरमन्त्रेण यज्ञानां हेयत्ववचनात् सुकृतो ब्रह्मलोक इत्यस्य स्वर्गपरताया युक्तत्वेन यज्ञसाधनस्य वह्नेः ब्रह्मरूपत्वज्ञानस्य तत्रानपेक्षणीयत्वात् सत्यपि वा ब्रह्मज्ञाने यज्ञादिकर्म्मणो ब्रह्मलोकाधिगमाहेतुतायाः श्रुतिसम्मतत्वाच्च । अतएव 'कर्म्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः' इति श्रूयते इति वाच्यं—वरावरभेदेन कर्म्मद्वैविध्यस्य श्रुतिबोधिततया—उपादानहानयोर्व्यवस्थितत्वात् । ते तावत् यज्ञरूपाः प्लवा अदृढा भवन्ति यत्साधनं कर्म्म—अवरं=धनादिकामकर्त्तृकं ब्रह्मभावबोधशून्यञ्च; रागाद्यदूषितकर्त्तृकं ब्रह्मभावबोधयुक्तमुपासनास्वरूपं हि वरं श्रेष्ठम्, तदन्यद् अवरम् । य एतेषु भ्राजमानेष्विति मन्त्रद्वयो वरकर्म्मसाधितयज्ञसमुद्भाविब्रह्मलोकमाह, अवरकर्म्मसाधितानां यज्ञानां हेयत्वञ्च 'प्लवाः' इत्यादिर्मन्त्रः । तत्रावरमिति स्पष्टाभिधानात्; अन्यथा तस्य वैयर्थ्यं प्रसज्येत । श्रुत्यन्तरे च 'द्रविणमीहमाना' इति कर्त्तृविशेषेण कर्म्मणो वरत्वाभाव उक्तः न तु कर्म्मसामान्यस्य । जगन्मातुश्चरणमात्रमीहमाना हि कर्म्मणापि मृत्युं तरन्तीति तात्पर्यात् । न च 'न कर्म्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति 'परं कर्म्मभ्यो अमृतत्वमानशुः' इति चैवमादिश्रुतयः कर्म्मसामान्यमेव व्युदस्यन्तीति वाच्यं प्रथममन्त्रे त्यागेनेतिश्रवणात् विषयकामनावतां कर्म्मण एव व्युदासावगमात् । द्वितीयमन्त्रस्य पूर्वार्द्धे 'कर्म्मणा

मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः' इति श्रवणात् तथाविधकर्त्तृणां कर्म्मदोषप्रतिपादनात् । एवञ्चैतदेकवाक्यतयाऽन्यत्र सङ्कोचस्यावश्यकत्वात् । अतएव श्रुत्यन्तरमपि 'यो वा एतदक्षरं गार्ग्यविदित्वास्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि अन्तवदेवास्य तद्भवति' इति (बृ० ३।८।१०) ब्रह्मणो वेदनाभावे होमयजनादेरन्तवत्त्वाभिधानेन उपासनपर्य्यवसायि ब्रह्मवेदनवतां होमयजनादेरन्तवत्त्वविरहः सूचितः । श्रूयते च 'तमेतं ब्राह्मणा विविदिषन्ति यज्ञेन ।' यज्ञः खलु ब्राह्मणानां ब्रह्मोपासनासाधनमिति तदर्थः । अग्नौ ब्रह्मभावज्ञाने हि यज्ञस्य तदुपासनसाधनत्वं सुसम्पद्यते । न च प्रदर्शितमुण्डकमन्त्रवर्णस्य कथमपि ब्रह्मपरत्वं न युज्यते । 'द्वे विद्ये वेदितव्ये परा चैवापरा च' इति प्रक्रम्यापरविद्यायाः प्रयोजनमन्तवत्फलकं यज्ञमुक्त्वा तत्र निर्व्विण्णस्य यज्ञादिविरोधिनी ब्रह्मज्ञानफला पराविद्याश्रयणीयेति सिद्धान्तस्य तथा सन्दर्भस्य च बाधापत्तेरिति वाच्यम्, परायां विद्याया यज्ञविरोधित्वाभावेन त्वदीययुक्तेराभासरूपत्वात्; श्रूयते हि 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवति' ( छा० १।१।१ ) इति । अत्र विद्या ब्रह्मविद्यैव ऋग्वेदादिविद्यामन्तरेण आर्त्त्विज्यासम्भवात् । ब्रह्मविद्याविरहितेन वेदज्ञेन कृतमपि वीर्य्यवद् भवति, न तु वीर्य्यवत्तरम् वेदाविदुषा तु प्रस्तावादेरज्ञानेन तत् कर्त्तुमेवाशक्यं कथं नाम वीर्य्यवत् स्यात्, मुण्डकभाष्ये श्रीधरस्य काण्डमुल्लिखद्भिर्भगवद्भिराचार्य्यचरणैरप्यस्यार्थस्याभ्युपगतत्वात् । चिदचिदुभया-

त्मकनिर्व्विशेषब्रह्मसाक्षात्कारे निर्वृत्ते तु सर्व्वत्र समं पश्यतः साध्यसाधनभेदधीविलयात् मा भूत् कर्म्म,लब्धतद्विद्यस्य तत्साक्षात्कारमूलतत्कृपालाभाय यतमानस्य योगयज्ञादिकर्म्मभिरवश्यमेव भवितव्यम्,तानि कर्म्माणि वराणि,तदितराणि चावराणि; अवराणाञ्च हानमुपदिष्टं न तु वराणामिति सिद्धान्तसन्दर्भयोरव्याघातात्। ननु 'सुकृतो ब्रह्मलोक' इति कृतकत्वश्रवणात् 'नास्त्यकृतः कृतेन' इति श्रवणाच्च यज्ञसाधितब्रह्मलोकस्यान्तवत्त्वमेव पर्य्यवसन्नमिति वरावरकर्म्मणोः को विशेष इति चेच्छ्रूयताम्,— चिदचिदात्मकशक्तिस्वरूपब्रह्मतत्त्वोपदेशं प्राप्तवतोऽधिकारविशेषवतः कर्म्मश्रद्धातिरेकजनितयज्ञसिद्धिस्तदन्तःकरणे धर्म्माख्यं सात्त्विकवृत्तिविशेषमादधती तदुपादानभूतप्रकृतौ परिणामभेदमुपजनयति या हि चिदचिदात्मकशक्तिब्रह्मणः कृपेत्युच्यते, यथाहि शिशुकण्ठनिःसृतो ध्वनिभेदोऽन्यैरबुध्यमानोऽपि वायुमण्डले वृत्तिविशेषाधानेन तन्मातृश्रवणेन्द्रियगोचरस्तदन्तर्वृत्तिविशेषमुपजनयति तद्वत्। सा हि शक्तिकृपा अन्धतमसावृते गृहाभ्यन्तरे सद्यः प्रदीप्यमाना दीपशिखेव तामसावरणशक्तिं तिरस्कुर्व्वती ब्रह्मसाक्षात्कारायोपयुज्यते, स एव वा तत एव वाभिव्यज्यमानो निरवसानः परमानन्दो मुक्तिरित्याख्यायते। अत्र च कर्म्मादृष्टयोरिव ब्रह्मकृपा-यज्ञाद्युपासनयोरपि कार्य्यकारणभावस्य व्यक्तिविशेषविश्रान्ततया व्यभिचाराभावो वेदितव्यः। योगिनाञ्चाधिकारविशेषाद् यथा निर्व्विशेषापरिच्छिन्नब्रह्माभेदमात्मनि पश्यतां जन्मोच्छेदस्तदावेदितमधस्तात्। उच्छिन्नजन्मनश्च ब्रह्मा-

भेदमापद्यमानस्य निरतिशयानन्दरूपत्वमित्यतो द्वौ पन्थानौ मुण्डकोपनिषदा सूचितौ। स्वर्गशत्रुवधादिकामनादूषितहृदान्तु कर्म्म ब्रह्मोपासनरूपमपि न वरं भवति इति च तत्रोपपादितम्, 'यत् कर्म्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते' इत्यादिना। यच्चोक्तं 'सुकृतो ब्रह्मलोक' इति नाकृतस्य ब्रह्मलोकस्य स्वरूपमित्याशयेन, तदपि 'एष वः पुण्यः सुकृतो ब्रह्मलोकः' इत्यस्यार्थापरिज्ञानविजृम्भितम्, तथा हि वः युष्माकं कर्म्मिणामित्यर्थः निर्द्धारणे षष्ठी यः सुकृत्, त्वमिव ब्रह्मकृपामात्रार्थी रागद्वेषवर्ज्जितः शोभनं वरं कर्म्म करोति—तस्य 'एष पुण्यः निर्म्मलः ब्रह्मलोकः' इत्यस्यैव तदर्थत्वात्; सुकृत इत्यस्य षष्ठ्यन्ततया ब्रह्मलोकविशेषणत्वाभावात्। रागिषु कर्म्मिषु या शक्तेः कृपा सा तु नैवंविधा किन्तर्हि, तत्काम्यफलसम्पादनी, 'तं यथायथोपासते तदेव भवति' इति श्रुतेः (मुण्डकभाष्ये १।१।७) 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति स्मृतेश्च। तस्मादपरां विद्यामधिगतवतः परा विद्या, तया परिज्ञातशक्तिब्रह्मणस्तदेवापरिच्छिन्नं मातृभावादिनोपासीनस्य, पूर्व्वसंस्कारवशेन काल्यादिशरीरावच्छिन्नतदुपासकस्य तत्कृपामात्रार्थिनो वा, काल्यादिदृष्ट्या वैश्वानरे यदाहुतिदानं—ततो लब्धसिद्धेर्ब्रह्मलोको नाम मोक्षो भवतीति निर्गलितार्थः। काल्यादिव्यपदेशश्च ब्रह्मण एव—काली सर्व्वेषां कालस्वरूपा कृष्णवर्णा च; श्रूयते हि, 'ज्ञः कालकालो गुणी सर्व्वविद् यः' इति (श्वे० ६।२) 'अजामेकां लोहितशुक्लकृष्णाम्' इति 'तस्मिन्

च्छुक्लमुत नीलमाहुः' इति च। कालीत्यनेन कालीतारामूर्त्त्योः संग्रहः। कराली भीषणा—'भीषास्माद् वातः पवते' इति 'भयादस्याग्निस्तपति' इति 'महद्भयं वज्रमुद्यतम्' इति च मन्त्रात्; एतेन छिन्नमस्तामूर्त्तिसंग्रहः। मनोजवा–मनसः मानसात् जवो वेगो यस्याः सा—जववती—वेगवती, 'मनसो जवीयः' इति श्रुतेः, एतेन विद्युद्गौरीमूर्त्तिः सूचिता। सुलोहिता—'अजामेकां लोहितशुक्लकृष्णाम्'इति 'पिङ्गलं लोहितञ्च' इति च श्रुतेः, एतेन जगद्धात्रीत्रिपुरसुन्दरीभुवनेश्वरीमूर्त्तयोऽपि संगृहीताः। सुधूम्रवर्णा = 'उत बभ्रुः सुमङ्गलः' इति 'य एकोऽवर्णो बहुधा शक्तियोगाद् वर्णाननेकान् निहितार्थो दधाति' इति च श्रुतेः, अनेन धूमावतीमूर्त्तिः संगृहीता। स्फुलिङ्गिनी—स्फुलिङ्गसदृशभावनिचयवती—'तदेतत् सत्यम् यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाक्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' इति मन्त्रवर्णोविवृतसादृश्यलाभात्। विश्वरुची = विश्वदीप्तिकरी, 'तस्य भासा सर्व्वमिदं विभाति' इति श्रुतेः, अनेन मूर्त्यन्तराणामपि लाभः।

देवी इति काल्यादिभिः प्रत्येकमभिसम्बध्यते, तद् ग्रहणञ्च जिह्वानां भौतिकत्वशङ्कानिरासाय। लेलायमाना दीप्यमानाः, लेला दीप्तौ इति कण्ड्वादिपाठात् शक्तौ शीले वा शानच् नित्यप्रकाशा इत्यर्थः। न चैवमपि 'इष्टापूर्त्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः। नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा इमं लोकं हीनतरञ्चाविशन्ति।' इति मन्त्रश्रुत्या गार्हस्थ्यमेव

निन्दित्वा 'तपः श्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्य्यां चरन्तः। सूर्य्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा' इति संन्यासिनाम्मोक्षाधिकारकथनाद् यज्ञादीनामनुपादेयत्वं सिद्धमेवेति वाच्यं 'नान्यच्छ्रेयो वेदयन्ते प्रमूढाः' इत्यनेन ब्रह्मज्ञानाभावप्रतिपादनेन तादृशगृहिणां निन्दया, मातृभावादिना ब्रह्मोपासकानामनिन्द्यत्वस्यैव बोधितत्वात्। 'यत्र देवानां पतिरेकोऽधिवासः।' इति 'यत्रामृतः स पुरुषो ह्यव्ययात्मा' इति मन्त्राभ्यां वैश्वानरमेव ब्रह्मस्वरूपं यज्ञेनोपासीनानां गृहिणां तपःश्रद्धावतां सन्न्यासिनाञ्च गतिसाम्यप्रदर्शनाच्च। तस्माद् वैश्वानरादिशब्दास्तत्र तत्र ब्रह्मपरा एव। किञ्च वैश्वानरस्थाने आत्मानं स्थापयित्वा यदाम्नातं ततोऽपि वैश्वानरस्यात्मत्वसिद्धिः, मूर्द्धादिषु चुबुकान्तेषु वैश्वानरो वाजसनेयिब्राह्मणेऽनुशिष्यते, तथा जाबालाः परमात्मानं तत्रोपदिशन्ति 'य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठितः' इत्युपक्रम्य 'कतमच्चास्य स्थानं भवति इति भ्रुवो घ्राणस्य च यः सन्धिः स एष द्युलोकस्य परस्य च सन्धिर्भवति' इत्यन्तेन। अतो वैश्वानरस्थानभागित्वं प्रादेशमात्रत्वञ्च परमात्मनो वर्त्तत एवेति स्पष्टमवगम्यते, एवञ्च प्रादेशमात्रत्वासम्भवेन वैश्वानरस्य न परमात्मत्वं किन्त्वग्निदेवतात्वमिति प्रत्यवस्थानमयुक्तं; तस्मात् वैश्वानरविद्यायामपि वैश्वानरः परमात्मैवेति भावः।१।२।३२।

इति प्रथमे निरूपणाध्याये समन्वयोनाम द्वितीयः पादः।

## प्रथमेऽध्याये—तृतीयः पादः ।

फलावच्छेदतः प्रतिपत्तिरपि निरूपणफलमित्युक्तम्,—परोक्षस्यापरोक्षस्य च ज्ञानस्य फलमुपासनं भोगापवर्गौ च, प्रत्येकं तदवच्छेदः मिथो भेदो विजातीयव्यावृत्तिश्च, तद्रूपेण प्रतिपत्त्यर्थं कानिचिद् वेदान्तवाक्यान्युपासनार्थतया परमात्मनः, कानिचिदुपास्यस्वरूपावबोधनार्थतया विचारितानि, तेषु च प्रसक्तप्रतिषेधार्थान्यपि कानिचिद् भवन्ति यतः स्वरूपसन्देहविपर्ययौ व्युदस्येते, अन्यथा उपास्येतरव्यावृत्तिरसम्यग् गृह्येत । दिग्दर्शनाय प्रथमं तद्विचारः प्रस्तूयते । यानि चान्यान्युपासनाद्यवच्छेदार्थानि तानि च यथावसरं विचारयिष्यन्ते । वैश्वानराधिकरणन्यायाद् द्युभ्वायतनवाक्यानामपि ब्रह्मभावेनोपासनविधायकत्वं प्रसक्तं तन्निराकरणाय स्वरूपावबोधनाय च प्रथमस्य तृतीयपादः । तत्रादौ पूर्वपक्ष-सूत्रयोराद्यमाह,—

### ( द्युभ्वाद्यधिकरणम्—१ । )

### द्युभ्वाद्यायतनं स्वशब्दात् ।१।३।१।।

'पृथिव्येव यस्यायतनमग्निर्लोकः' इति ( बृ० ३ । ९ ) 'आकाश एव यस्यायतनम्' इत्यनयोः शाकल्यब्राह्मणश्रुत्योर्द्युभुवौ वर्त्तेते । आकाशो द्यौः पृथिवी च भूः, ननु 'आकाशे तिष्ठन्' 'दिवि तिष्ठन्' इति श्रुतिवाक्यद्वये आकाशदिवोः पृथग्ग्रहणादाकाशस्य कथं द्युशब्देनोपादानमिति चेन्न द्युशब्दो हि स्वर्ग-

माकाशश्च वक्ति, तथैव कोषात्, यत्राकाशदिवोः पृथगुपादानं तत्रास्य स्वर्गवचनत्वमङ्गीक्रियते, अन्यत्र तु आकाशवचनत्वमसति बाधे। यदि च श्रुतिवाक्ये प्रथमं 'पृथिवी' इत्यनेन भुवो निर्देशस्ततः 'आकाशः' इत्यनेन च दिवः, तथापि भूशब्दापेक्षया द्युशब्दस्य लघुस्वरघटितत्वात् उत्पत्तिक्रमेण पूर्व्वतयाभ्यर्हितत्वाद् वा द्वन्द्वसमासे पूर्व्वनिपातात् सूत्रे द्युभ्वादीति वैपरीत्येनाभिधानम्। आदिपदात् कामादीनां परिग्रहः 'यस्य काम एवायतनम्' इत्यादि ( वृ० ३।६।१० ) श्रुत्युक्तायतनानां ग्रहणम्। तान्यायतनानि यस्य, तद् ब्रह्म भवति न वा? इति संशयः। ब्रह्म वेति पूर्व्वपक्षः, कुतः? 'स्वशब्दात्'—यथा वैश्वानराधिकरणे द्युमूर्द्धादिना वैश्वानरे ब्रह्मभाव उक्तः, तथात्राऽपि द्युभ्वाद्यायतने ब्रह्मभावः 'स्वशब्दात्' = ब्रह्मवाचकशब्दात्। स च शब्दः 'पृथिव्येव यस्यायतनमग्निर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणं स वै वेदिता' इत्यादिः, अत्र पुरुषमिति 'सर्वस्यात्मनः परायणम्' इति च ब्रह्मवाचकशब्द इति ।१।३।१।

नन्विदं न ब्रह्मपरम् अत्रादिपदेनोपात्तेष्वायतनेषु रेतसः प्रवेशात् तत्र पुत्रमयपुरुषस्य प्रतिपादितत्वात्, तथाहि श्रूयते 'रेत एव यस्यायतनं हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात् स वै वेदिता स्यात् वेद वा अहं तं पुरुषं सर्व्वस्यात्मनः परायणं यमात्थ य एव पुत्रमयः पुरुषः स एव' इति। न च पुत्रमयः पुरुषो ब्रह्म; तस्योत्पत्तिमत्त्वात्, ब्रह्मणश्च तद्विरहात् 'अजः' इति

'न जायते' इति 'नित्यो नित्यानाम्' इति च श्रुतेः। इत्याशङ्कामपाकुर्व्वन् द्वितीयमाह—

## मुक्तसृप्योपदेशात् ।१।३।२।।

मुक्तः सर्व्वदिगात्मत्वेनावस्थितो जीवन्मुक्तो याज्ञवल्क्यः, तेन कर्त्रा 'सृप्योपदेशात्'=सृप्यं निर्गमनं सृपेर्भावे क्यप्प्रत्ययात् तस्योपदेशात् श्रुतौ सृपधातोः प्रयोगेण सूत्रे तन्निवेशः। श्रूयते हि 'कस्मिन्नापः प्रतिष्ठिताः इति रेतसीति कस्मिन्नु रेतः प्रतिष्ठितं हृदय इति तस्मादपि प्रतिरूपं जातमाहुः हृदयादिव सृप्तो हृदयादिव निर्मितः' इति प्रत्युक्तवान् याज्ञवल्क्यः स्ववचनं समर्थयितुमाह 'तस्माद् रेतसो हृदयप्रतिष्ठितत्वात् जातं प्रतिरूपं पुत्रं हृदयादिव सृप्तो निर्गतः हृदयादिव निर्मित इत्याहुः' इति अत्र याज्ञवल्क्यवचने सृप्त इत्युपदेशः पुत्रमयस्यापि पुरुषस्य जन्मनः प्रागपि स्थितिं दर्शयति, न हि प्रागसतो निर्गमनं सम्भवति। यद्धि सदपि प्राक् तिरोहितरूपं तव्याभिव्यक्तिर्निर्गमनं यथा गृहाभ्यन्तरमधितिष्ठतो देवदत्तस्य बहिरागमस्तद्वत्; एवं हि पुत्रमयपुरुषस्य जन्मव्यपदेशः न तु तद्वास्तवं जन्म येनानित्यत्वं स्यादजत्वञ्च न स्यात्। पुत्रमयपुरुषस्य नित्यत्वसाधनेन पुरुषान्तराणां नित्यत्वमर्थापत्त्या सिध्यतीति शाकल्यब्राह्मणीयं पुरुषान्तरमपहायान्तिमपुत्रमयपुरुषोपादानेन शङ्कासमाधाने कृते तथाच पुत्रमयः पुरुषोऽपि ब्रह्मैवेति पूर्व्वपक्षः ।१।३।२।

उत्तरयन् पूर्व्वपक्षं दूषयति—

नानुमानमतच्छब्दात् ।१।३।३॥

'अनुमानम्'=द्युभ्वाद्यायतनस्य ब्रह्मपरत्वानुमानं 'न'= न युज्यते 'अतच्छब्दात्'=तस्य ब्रह्मणो यः 'शब्दः' बोधकशब्दस्तदभावात् न प्रकृतसिद्धिः। ननु 'पुरुषम्' इति 'सर्व्वस्यात्मनः परायणम्' इति च श्रुतौ ब्रह्मणो द्वौ शब्दौ भवतः कथम् 'अतच्छब्दात्' इत्युच्यते ? इति चेत् सत्यमिमौ शब्दाववाधे हि ब्रह्म गमयतः, अत्र तु बाधात् शरीरादिकमेव गमयतः श्रूयते हि तत्रापि पुरुषशब्दः यथा 'मतः पुरुषात् केशलोमानीति पुरुषं गान्धारेभ्योऽपिनद्धाक्षम्' इति (छा० ६।१४।१) 'पुरुषं सोम्योपतापिनम्' इति (छा० ६।१६।१) चैवमादौ आत्मशब्दोऽपि शरीरादौ वर्त्तते, 'सर्व्वेष्वात्मस्वन्नमत्ति' इति (छा० ५।१८) अन्नमयादावात्मशब्दश्रुतेश्च 'सर्व्वस्यात्मनः' इति सर्व्वपदं च बह्वर्थकं न तु निरवशेषार्थकं सर्व्वः प्रत्येतीतिवत्। बहूनां शरीराद्यात्मनां भोगायतनत्वात् शरीरं परायणं भवति पोषकत्वाद्वा प्रेमास्पदत्वादेर्वा। तस्मात् आयतनश्रुतिस्थः पुरुषादिशब्दो न ब्रह्मबोधकः ।१।३।३।

सिद्धान्तमाह—

प्राणभृच्च ।१।३।४॥

चोऽवधारणे 'प्राणभृत्', जीवच्छरीरं शरीरावच्छिन्नचित्प्रतिबिम्बो वा, स एव द्युभ्वाद्यायतनं न ब्रह्म। न चात्रावधारणार्थ-

श्चकारो व्यर्थः, उभयोर्ब्रह्मप्राणभृतो द्युभ्वाद्यायतनत्वव्यावृत्त्यर्थकत्वात् । न च नानुमानमिति पूर्व्वतनसूत्रेणैव तद्व्यावृत्तिरिति वाच्यं केवले ब्रह्मणि द्युभ्वाद्यायतनत्वस्य व्यावृत्त्या तस्य सार्थकतया उभयत्वावच्छेदेन तथात्वस्य पृथगेव व्यावृत्तेरावश्यकत्वेनात्रावधारणस्य सार्थक्यात् । प्रत्येकमसतोऽपि धर्म्मस्य पर्य्याप्तिसम्बन्धेन द्वित्वाद्यवच्छेदेन वृत्तिताया अस्माभिरभ्युपगमात् ।१।३।४।

अत्र हेतुमाह—

भेदव्यपदेशात् ।१।३।५।।

'स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति एतान्यष्टावायतनानि अष्टौ लोका अष्टौ देवा अष्टौ पुरुषा यस्तान् पुरुषान्निरुह्य प्रत्युह्यात्यक्रामत्तं त्वौपनिषदं पुरुषं पृच्छामि' (बृ० ३।९।२६) इति याज्ञवल्क्यवचने, औपनिषदपुरुषस्य ब्रह्मणो द्युभ्वाद्यायतनपुरुषतो भेदप्रतिपादनात् ।१।३।५।

नन्वेतद्भेदप्रतिपादनं सगुणनिर्गुणतया, समाधेयमित्याशङ्क्याह—

प्रकरणात् ।१।३।६।।

किं तावत् प्रकरणं—अविदितब्रह्मतत्त्वस्य शाकल्यस्य विदितब्रह्मतत्त्वेन याज्ञवल्क्येन विचारः, तस्मिन्नधिकारे शाकल्यस्य सगुणब्रह्मप्रतिपत्तिरपि न सम्भवति अविदितचिन्मात्रस्य तस्य,

चिदचिदुभयात्मकब्रह्मप्रतिपत्त्यसम्भवात् केवलाचितः सगुणत्वेऽपि न तत्र जिज्ञासितब्रह्मत्वमिति प्रकरणे शाकल्यस्य याज्ञवल्क्याभिशापेन मूर्द्धपातः श्रूयते, येन तस्य ब्रह्मतत्त्वापरिज्ञानमवधार्य्यते। तस्मात् शाकल्यवचने 'पुरुषम्' इत्याद्युक्तिर्जीवपरैव न ब्रह्मपरेति ।१।३।६।

हेत्वन्तरमाह—

## स्थित्यदनाभ्याञ्च ।१।३।७।।

'पृथिव्येव यस्यायतनम्' इत्यत्रोक्तस्य शरीरात्मकपुरुषस्य स्थितिः हृदयस्थित्या प्रतिपाद्यते तदभावे श्वकर्त्तृकश्चादनम्, तथाहि श्रूयते 'कस्मिन्नु हृदयं प्रतिष्ठितम् इति अहल्लिकेति होवाच याज्ञवल्क्यो यत्रैतदन्यत्रास्मन्मन्यासै यद्ध्येतदन्यत्रास्मत् स्याच्छ्वानो वैनदद्युः' इति तस्मात्। यस्य हृदयस्थित्यैव स्थितिः तदभावे च श्वकर्त्तृकमदनं तद्धि न ब्रह्म भवितुमर्हति, चकारान्मनोज्योतिष्कत्वमुपात्तं, न हि ब्रह्म ज्योतिरन्तरमपेक्षते आत्मैवास्य ज्योतिर्भवतीति 'आत्मनैवायं ज्योतिषास्ते' इति 'तमेव भान्तमनुभाति सर्व्वम्' इति च श्रुतेः ।१।३।७।

ननु द्युभ्वाद्यायतनं यदीयं भवतु 'सर्व्वं खल्विदं ब्रह्म' इति 'एकमेवाद्वितीयं ब्रह्म' इति च श्रुतेः तदेव कथं न ब्रह्म स्यात्। कथञ्च ब्रह्मणि प्राणभृद्भेद इत्याशङ्कामपाकर्त्तुं भूमाधिकरणमाह—

( भूमाधिकरणम्—२ )

## भूमा संप्रसादादध्युपदेशात् ।१।३।८।।

'भूमा त्वेव विजिज्ञासितव्यः' ( छान्दोग्य० ७।२३।२४ ) इत्यादि श्रूयते। बहोर्भावो भूमा, बहुत्वम्, तच्चाधिक्यम्; यदपेक्षया यस्याधिक्यं तत्-सत्तोपपादकसत्ताकत्वं तस्य, यच्च यत्सत्तोपपाद्यसत्ताकं तत् तदपेक्षया अल्पम्,—नामारभ्य प्राणपर्य्यन्तमेवमाधिक्यं दर्शितम्, 'वाग् वाव नाम्नो भूयसी' इत्यादिना 'प्राणो वा आशाया भूयान्' इति प्राणखण्डान्तेन। तेनैव यथार्हमल्पतापि सूचिता। न तु यथाश्रुतं बहुत्वं भूमशब्दस्यार्थः, तथात्वे 'आकाशो वाव तेजसो भूयान्' इत्यनुपपन्नं स्यात्, तेजसो नानात्वात् आकाशस्यैकत्वाच्च। धर्म्मधर्म्मिणोरभेदेन,—अणिमाद्युपमानेन च भूमपदार्थस्तत्सत्तोपपादकसत्तावानिति स्थिते यद्यपि वागादेरपि भूमपदार्थत्वसम्भवः, नामादिभ्यो भूयस्त्वश्रुतेः, तथापि तत्र तत्र उत्तरोत्तरापेक्षया अल्पत्वात् 'नाल्पे सुखमस्ति' इत्युत्तरवाक्येन तेषां भूम्नां जिज्ञासाविषयत्वाभावेऽपि प्राणस्य भूम्नो जिज्ञासाविषयत्वं प्राप्नोत्येव तदपेक्षया क्वचिदपि भूयस्त्वानुपदेशात्, न तस्याल्पत्वमवगम्यते। 'यथा वा अरा नाभौ समर्पिता एव यस्मिन् प्राणे सर्व्वं समर्पितम्' ( छा० ७।१५ ) इति श्रुत्या सर्व्वसत्ताव्यापकसत्ताकत्वेन च भूमपदार्थत्वं प्राणस्य दृढीकृतम्। नारदस्य भूम-जिज्ञासायां भगवता सनत्कुमारेण यत् प्रतिवचनं दत्तं तेनापि प्राणस्यैव

भूमत्वं प्रतीयते—तथाहि 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा' (छा० ७।२४) इति सुषुप्त्यवस्थायां प्राणस्य सर्व्वकरणलयस्थानतया युज्यत एव दर्शनाद्यभावः, तथा-च प्राण एव भूमेति प्राप्ते उच्यते भूमा सम्प्रसादादध्युपदेशादिति। प्राणो न भूमा किन्तु ब्रह्मैव भूमा कुतः 'सम्प्रसादादधि' सम्प्र-सादः='य एष सम्प्रसादः' इत्युत्तरश्रुतिः, अधि=ऊर्द्ध्वम्, 'उपदेशात्'=उपदिश्यते प्रोच्यते यत् तस्मात्। अस्य हेतो-र्हेतुतावच्छेदकसम्बन्धश्च तद्बोधकखण्डादिप्रतिपाद्यत्वम्। सम्प्रसादश्रुतिश्च 'अथ य एष सम्प्रसादोऽस्मच्छरीरात् समु-त्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति एत-दूर्द्ध्वं 'एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्म तस्य वा एतस्य ब्रह्मणो नाम सत्यम्' इत्युपदेश आत्मपदार्थतया ब्रह्मणः। भूमो विवरणखण्डे च श्रूयते 'स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्व्वम्' इति अनन्तरञ्च 'आत्मैवाधस्तात् आत्मोपरिष्टात् आत्मा पश्चात् आत्मा पुरस्तात् आत्मा दक्षिणतः आत्मा उत्तरतः आत्मैवेदं सर्व्वम्' इति प्रथमं 'स एव' इत्यनेन भूम्नः परामर्शस्तस्यैवात्मत्वमाह 'आत्मैवाधस्तात्' इत्यादिना। एवं हि भूमात्मपदार्थयोरेकत्वात् आत्मपदार्थस्य सत्य-मिति समाख्यातनित्यसम्बद्धचिदचिदुभयस्वरूपब्रह्मतायाः संप्र-सादादूर्द्धमुक्तत्वाच्च, यथोक्तरूपं ब्रह्मैव भूमेति पर्य्यवस्यति। किञ्च आत्मतः प्राण आत्मत आशा आत्मतः स्मर आत्मत

आकाश आत्मतस्तेज आत्मत आप इत्यादिना आत्मनः प्राणादिसर्व्वसत्तोपपादकसत्ताकत्वमादर्शयन्ती श्रुतिः नामादिभ्य इव प्राणादप्यात्मन आधिक्यमाह। स चात्मा संप्रसादश्रुतेरूर्द्ध्वं ब्रह्मत्वेनोक्तः। एवञ्च यथा च ब्रह्मणो नामादिरूपत्वेऽपि स्वरूपेण नाल्पत्वं तथा ब्रह्मणो जीवादिस्वरूपत्वेऽपि न स्वरूपेण द्युभ्वाद्यायतनकत्वमिति भावः ।१।३।८।

ननु 'स एवाधस्तात्'-इत्यादिका 'आत्मैवाधस्तात्'-इत्यादिकाच श्रुतिर्भूमात्मनोर्नैक्यं प्रतिपादयति प्रत्युत भेदमन्यथा पौनरुक्त्यं स्यादित्यत आह—

## धर्म्मोपपत्तेश्च ।१।३।९।।

'धर्म्माणां'=धर्म्मविशेषाणां 'उपपत्तेः' = उपलब्धेः, ये धर्म्मविशेषा भूम्नि दर्शितास्ते ब्रह्मणि उपलभ्यन्ते; न तु प्राणे। ते च धर्म्मविशेषाः = अधऊर्द्ध्वप्रभृतिसर्वदिग्वृत्तित्वं सर्व्वात्मत्वं सुखरूपत्वं अनन्यदर्शनत्वञ्चेत्येवमादयः। 'अयमात्मा ब्रह्म','स आत्मा' इत्यादिश्रुतिषु स आत्मनो ब्रह्मत्वमुपदिष्टम्—'स एवाधस्तात्' इति 'आत्मैवाधस्तात्' इति श्रुत्योः प्रागुद्धृतयोर्भूम्नि आत्मनि च सर्व्वदिग्वृत्तितायाः सर्व्वात्मतायाश्चोपलब्धिः 'सर्व्वं खल्विदं ब्रह्म' इत्यपि श्रूयते। 'यो वै भूमा तत् सुखम्' इति भूम्नि सुखरूपत्वं 'कं ब्रह्म', 'विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतिषु ब्रह्मणि सुखरूपत्वमुपलभ्यते, 'यत्र नान्यत् पश्यति नान्यच्छृणोति' इत्यनन्यदर्शनत्वं भूम्न्युपदिष्टं—'यत्र त्वस्य

सर्व्वमात्मैवाभूत् तत् केन कं पश्येत्' ( बृ० ४।५।१५ ) इत्यनन्यदर्शनत्वं ब्रह्मण्युपलभ्यते । यत् खलु सुषुप्तौ प्राणग्रस्तेषु करणेषु दर्शनाद्यभाव इति 'यत्र नान्यत् पश्यति' इत्यादेः प्राणपरत्वमुपपादितं तन्न सम्यक्,—अन्यदित्यस्य वैयर्थ्यात्—न पश्यति न जिघ्रतीत्यादेरेव तत्र वक्तव्यत्वात्, अनन्यदर्शनत्वञ्च यस्मिन् स भूमा—तच्च ब्रह्मेति । यच्च पौनरुक्त्यमापाद्य 'स एवाधस्तात्,' 'आत्मैवाधस्तात्' इत्यादिश्रुतेर्विभिन्नविषयकत्वमुक्तं तदपि न युक्तम्, विवरणरूपत्वेन पौनरुक्त्याभावात् । भूमशब्दार्थसन्देहनिरासाय विवरणस्य युक्तत्वाच्च । न च यथा 'अरा नाभौ समर्पिताः एवं प्राणे सर्वं समर्पितम्' इति प्राणस्य सर्व्वात्मकत्वं श्रूयते इति वाच्यम्', उपमानबलेन प्राणस्य सर्व्वाभिसम्बन्धप्रत्ययेऽपि सर्व्वात्मकत्वानुपलम्भात् । न ह्यरा नाभौ समर्पिता इति अरात्मकत्वं नाभेर्भवति तस्माद् भूमा ब्रह्मैवेति सिद्धम् ।१।३।८।

ननु कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इति गार्गीप्रश्ने, 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' इत्यादिरूपं याज्ञवल्क्यप्रतिवचनं यच्छ्रूयते (बृ० ३।८।७-८) तत्र वर्णापरपर्य्यायस्य अक्षरस्य आकाशकार्य्यत्वात् आकाशेन तस्यान्वयव्यतिरेकानुविधानेनोतत्वप्रोतत्वसम्भवात्, तस्य चायतनमाकाश इति, स च वर्णो भवत्येव ब्रह्म, 'एतद्ध्येवाक्षरं ब्रह्म' (कठ० १।२।१३) इति श्रुत्यन्तरात् । एवञ्च द्युभ्वाद्यायतनकस्य निराकृतो ब्रह्मत्वपक्षः, मृतसञ्जीवनीविद्यया मृतकचवत् पुनरुत्तिष्ठते, तन्निराकरणाय अक्षराधिकरणमारभते—

( अक्षराधिकरणम्—३ । )

अक्षरमम्बरान्तधृतेः ।१।३।१०।।

यथोक्ते गार्गीप्रश्ने याज्ञवल्क्यप्रतिवचनं 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनणु अह्रस्वमदीर्घमलोहितमस्नेहमच्छायम् अतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरमबाह्यञ्च न तदश्नाति किञ्चन न तदश्नाति कश्चन' इति (बृ० ३।८।८) श्रूयते; अत्राक्षरमिति वर्णो वा तद्-विलक्षणं ब्रह्म वेति संशयः, समुदायशक्तेरवयवशक्तेश्च द्वयोरेव प्राप्तेः, समुदायशक्तेर्बलीयस्त्वात् वर्ण इति प्राप्तम्, न च अह्रस्वमदीर्घममात्रमित्येतद्विशेषणत्रयं वर्णपक्षे न घटते इति वाच्यम्, अस्थूलमनणु इत्येताभ्यां साहचर्य्यात् अह्रस्वमदीर्घमित्येताभ्यां तत्तत्परिमाणविरहप्रत्यायनात् अमात्रमित्यनेनापि परिमाणसामान्याभाववतोऽपि बोधयितुं शक्यत्वात् तत्तद्धर्म्माणां वर्णसाधारण्येन, संशयसामग्र्या अनपायात्। नन्वेवमनन्तरमबाह्यमित्यनुपपन्नम् इति नैवम्, वर्णात्मकमक्षरं हि परापश्यन्तीमध्यमावैखरीरूपैर्भेदान्नान्तरमात्रं नापि बाह्यमात्रमित्यत्र तात्पर्य्यात्। अत्रोच्यते अक्षरमम्बरान्तधृतेरिति । 'अक्षरम्' अक्षरपदार्थः ब्रह्म, न तु वर्णः, 'अम्बरान्तधृतेः'=आकाशपर्य्यन्तस्य धृतेर्धारणात्। पृथिव्यादेर्यत्राकाशे ओतप्रोतत्वम्=आयामविस्तारयोः प्रतिष्ठितत्वं तस्य तावत् सर्व्वधारकाकाशस्य यस्मिन् आयाम-

विस्तारयोः प्रतिष्ठितत्वं तद्ब्रह्मैव नान्यत्, यद्यप्यन्वयव्यतिरेकौ ओतप्रोतशब्देन गृह्येते, तथापि कार्य्यस्य कारण एव सावन्वयव्यतिरेकौ, नतु कारणस्य कार्य्ये, अन्यथा कारणस्य कार्य्यत्वं कार्य्यस्य कारणत्वमप्यापद्येत। तस्मादाकाशो न वर्णे ओतः प्रोतश्च, वर्ण एवाकाशे, तस्माद‌त्राक्षरं न वर्णः किन्तु तद्विलक्षणं ब्रह्मैव, सर्व्वस्यैव जगतस्तत्रोतप्रोतत्वात्। न च 'एतद्ध्येवाक्षरं ब्रह्म' इतिश्रुत्या प्रणवाक्षरस्य ब्रह्मत्वावगमात् तस्याम्बरान्तधृतिरुपपद्यत इति वाच्यम्, अत्राप्रक्रमात्, तस्य ब्रह्मत्वमभ्युपगम्याम्बरान्तधृतेरुक्तौ अक्षरपदस्य ब्रह्मपरत्वे पर्य्यवसानात्, विशेषस्तु गोपुरमपहाय पक्षद्वारेण नगरप्रवेशः, तच्छ्रुतावक्षरे ब्रह्मत्वप्रदर्शनस्योपासनार्थत्वाच्च। यद्यपि 'एतद्वैतदक्षरं गार्गि' इत्यनेन रहस्यमिति कृत्वा श्लिष्टतया दुर्गाबीजमेवोक्तम्—तस्य च वर्णत्वं नापलपितुं शक्यते तथापि 'मन्त्राणां देवता ज्ञेयाः' इति तन्त्रवचनात् 'प्रतिमादौ शिलाबुद्धिं मन्त्रे चाक्षरभावनाम्। गुरौ मानुषबुद्धिञ्च कुर्व्वाणो नरकं व्रजेत्' इति तन्त्रवचनेन तस्मिन्नक्षरबुद्धिप्रतिषेधाच्च देवतापरमेव देवता च दुर्गा—सा तु ब्रह्मैवेत्यसकृदुपदर्शितम्। अथ कथमत्र दुर्गाबीजोक्तिरिति चेत्,—श्रूयताम्, 'एतदु ऐ तत् अक्षरम्' इति विश्लिष्टानि चत्वारि पदानि, तत्र ऐ इति सम्बोधनार्थकमव्ययम्,—'एतदु' इति तृतीयान्यपदार्थबहुव्रीहिसमासनिष्पन्नं पदम् एतः = आ + इतः आगतः प्राप्तः दुः षष्ठस्वरान्ततवर्गतृतीयवर्णो येन, तथाविधम् अक्षरम् इन्दु-

बिन्दुस्वरूपं तत्, इत्यर्थः, न चाकस्मिकीयं कल्पना, बृहदारण्यके बीजस्यास्यावयवशोऽनेकत्र कीर्त्तनात् 'दूर्नामदेवता' इति 'तेभ्यो हैतदक्षरमुवाच द इति' ( बृ० ५।२।२ ) इत्यादौ। व्यक्तानभिधानन्तु रहस्यत्वेन। एतदेव स्पष्टीकृतञ्च 'या पुनः शाम्भवी विद्या गुप्ता कुलवधूरिव' इत्यादिना गुप्ततयोपदिष्टे तन्त्रशास्त्रे 'श्रीशिव उवाच। अथ दुर्गामनुं वक्ष्ये शृणुष्व हरवल्लभे। यस्य श्रवणमात्रेण मुच्यते भवबन्धनात्। थान्तबीजं समुद्धृत्य वामकर्णविभूषितम्। इन्दुबिन्दुसमायुक्तं बीजं परमदुर्लभम्।......गायत्रीच्छन्द आख्यातं जगद्धात्री च देवता। चतुर्वर्गप्रदा दुर्गा सर्व्वसत्त्वेषु संस्थिता।' इति। एतन्मन्त्रस्यैव जगद्धात्रीस्वरूपत्वात् अम्बरान्तधृतेरित्युपपन्नस्तत्र हेतुः या हि जगतां धात्री—तामन्तरेणाम्बरान्तधृतिः कुत्र सम्भवेत्। तस्मादत्र वर्णवाचकमप्यक्षरपदं विवक्षितविवेकेन निराकारब्रह्मपरं दुर्गाकारब्रह्मपरञ्च। या हि दुर्गा सैव जगद्धात्री—सैव सती उमा चेत्युक्तमधस्तात्।१।३।१०।

ननु चिदचिदुभयात्मकब्रह्मण इव प्रकृत्यात्मकाचितोऽम्बरान्तधृतिः सम्भवति उपादानत्वात्, ओतप्रोतपदयोरन्वयव्यतिरेकघटितार्थकत्वे च चिन्मात्रस्यापि; तस्य निमित्तत्वात् इत्याक्षेपं परिहरन्नाह—

## सा च प्रशासनात्।१।३।११॥

'चः' = भिन्नक्रमः। सा प्रशासनाच्च, सा धृतिः, उपसर्ज्जनस्यापि धृतेस्तच्छब्देन परामर्शः। 'प्रशासनात्' = आदे-

शादपीति श्रूयते, 'एतस्य वा अक्षरस्य प्रशासने सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः' इति प्रशासनम् अनुशासनम्—आदेशः—तच्च नाचिन्मात्रस्य न वा चिन्मात्रस्य सम्भवति, तस्य वचनरूपत्वात् ।१।३।११।

अन्वयमुक्त्वा व्यतिरेकमाह—

## अन्यभावव्यावृत्तेश्च ।१।३।१२।।

अन्यस्मिन् = ब्रह्मभिन्ने चिन्मात्रे अचिन्मात्रे वा, 'भावव्यावृत्तेः' भावस्य = वृत्तितायाः अक्षरपदार्थत्वस्येति शेषः, व्यावृत्तेः = अभावात् श्रुत्या अभावप्रतिपादनादित्यर्थः, 'तद् वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ अश्रुतं श्रोतृ' इत्यादिश्रुत्या अदृष्टस्य द्रष्टृतया अश्रुतादेः श्रोतृत्वादेश्च प्रतिपादनात्। न हि वर्णे अश्रुतत्वं घटते, नापि तस्मिन् तदन्यत्र च अचिन्मात्रे चिन्मात्रे वा द्रष्टृत्वश्रोतृत्वादिकं सम्भवति, अचिन्मात्रस्य जडत्वात्, चिन्मात्रस्य श्रवणादिमत्त्वाभावाच्च; सम्भवति तु चिदचिदात्मके निराकारे उमाकारे वा ब्रह्मणि। ननु 'अस्थूलमनणु' इत्याद्युक्तविशेषणकत्वमुमाकारे ब्रह्मण्यनुपपन्नम् इति चेन्न अस्थूलमित्यादिना स्थूलमेवेत्यण्वेवेति नियतपरिणामाभाववत्ताया अचक्षुष्कमित्यादिना नियतविषयचक्षुरादिशून्यतायाः 'अमात्रम्' इत्यनुपमानतायाः 'अच्छायम्' इति छायापत्तिरहितत्वस्य चाभिधानात्, 'अलोहितम्' इति जीवदेहतुल्यशोणितसम्बन्धाभावबोधनाच्च उमाकारे ब्रह्मण्यपि तद्विशेषणतोपपत्तेः।

तस्माद् अक्षरपदार्थः चिदचिदात्मकं निर्व्विशेषम् उमामूर्त्यवच्छिन्नं सविशेषं वा ब्रह्मेति सिद्धम्। तेन द्युभ्वाद्यायतनकस्य ब्रह्मत्वशङ्का पुनरुज्जीवितापि निराकृता, चकारोऽधिकरणसमाप्तिसूचकः ।१।३।१२।

ननु 'आत्मा वा अरे द्रष्टव्यः' इत्यादि श्रुत्या 'अयमात्मा ब्रह्म' इति श्रुतिप्रतिपाद्यस्यात्मनो ब्रह्मणो दर्शनविधानात् अशक्यस्य विधानासम्भवात् ब्रह्मणो दर्शनविषयतया यदक्षरमदृष्टं तन्न ब्रह्म भवितुमर्हति, ननु तस्य द्रष्टव्यत्वेऽपि नैतावता कालेन केनचिदपि तद्दृष्टमित्यदृष्टमिति व्यपदेश इति चेत् वामदेवसनत्कुमारादिभिरदृष्टञ्चेत् केन तस्य दर्शनं भवितुमर्हति विधिप्रयुक्ता यस्य प्रवृत्तिर्भवेत्; वामदेवप्रतिबोधश्रुतिरपि व्याकुप्येत, तस्मादक्षरं न ब्रह्म इत्याक्षेपमपनुदन्नाह—

## ( ईक्षतिकर्म्माधिकरणम्—४। )

## ईक्षतिकर्म्मव्यपदेशात् सः ।१।३।१३।।

'सः'='आत्मा वा अरे द्रष्टव्यः' इत्यादिविधिः श्रुतिकर्त्तृकं विधानम्, 'ईक्षतिकर्म्मव्यपदेशात्' ईक्षतेः=अपरोक्ष-प्रकाशरूपस्य, यः कर्म्मव्यपदेशः=कर्म्मतया प्रयोगः, ईक्षति-कर्म्मव्यपदेशस्तस्मात्=हेतौ ल्यप् लोपे वा पञ्चमी। एतेनैतदुक्तं भवति, दर्शनं नाम चाक्षुषवृत्तिः, तद्विषयत्वं ब्रह्मणि नास्तीत्यदृष्टमित्यादिकमुपपद्यते, 'स एतस्मात् परात्परं पुरिशयं पुरुषमीक्षते' ( प्र० ५।५ ) इति परात्परे पुरिशये पुरुषे ईक्षतिकर्म्मप्रयोगेण

चाक्षुषवृत्तिस्वरूपदर्शनविषयत्वं नावबुध्यते—किन्तर्हि अभेदापरोक्षप्रकाशव्याप्यत्वं, तादात्म्येन स्वसम्बन्धिवृत्तिभेदाप्रतियोग्यभेदापरोक्षप्रकाशकस्वरूपं तस्य च ब्रह्मण्यव्याहतत्वात् कर्म्मत्वोपपत्तिः, तद्व्यवधायकनिवृत्तौ यो यत्नः तत्साध्यत्वमिष्टसाधनत्वञ्च विध्यर्थः। साध्यत्वञ्चात्र चैमम्, तस्माद् ब्रह्मणश्चाक्षुषदर्शनविषयत्वाभावेनादृष्टत्वेऽपि ईक्षति कर्म्मन्यायेन द्रष्टव्यत्वविधिरुपपद्यते। एतेन 'अश्रुतम्' इत्यादिश्रुत्या 'श्रोतव्यः' इत्यादिश्रुतेर्विरोधः परिहृतो वेदितव्यः। ईक्षतिकर्म्मन्यायात्—किञ्चिद्वैलक्षण्यमाश्रित्य 'अश्रुतम्' 'अमतम्' इत्यनयोः श्रुत्योः 'श्रोतव्यो मन्तव्यः' इत्यादि श्रुत्या विरोधः परिहरणीयः। यद्वा ननु 'अदृष्टं द्रष्टृ' इति न ब्रह्मस्वरूपम्, 'परात्परं पुरिशयं पुरुषमीक्षते' इत्यादिश्रुत्या ब्रह्मापराख्यस्य परात्परस्य पुरिशयपुरुषस्य ईक्षतिकर्म्मत्वप्रतिपादनेन दृष्टत्वस्यैव प्रत्यायनात् इत्याक्षेपं परिहरति ईक्षतीत्यादिना। 'सः'=परात्परपुरुषो ब्रह्मेत्यर्थः, 'व्यपदेशात्'=विशिष्टो निरपेक्षः, अपदेशः शब्दः, स्वतःप्रमाणशब्दः श्रुतिरित्यर्थः। विशिष्टोऽपदेशो हेतुर्ब्रह्मस्वरूपशक्तेः कृपा इति तु परमार्थः। तस्मात् 'ईक्षतिकर्म्म' ईक्षतिरपरोक्षज्ञानं तस्य कर्म्म भवतीतिशेषः, श्रुतिजनितापरोक्षज्ञानव्यतिरिक्तापरोक्षज्ञानस्याविषय इत्यदृष्टपदार्थः। हेतोरैक्यात् ईक्षतिवत् श्रवणादावपि गतिरुन्नेया। श्रुतिभिन्नशब्दजज्ञानाविषय इत्यश्रुतशब्दस्यार्थः श्रुत्यनुगृहीतसाक्षिवृत्तिव्यतिरिक्तमननवृत्त्यविषय इत्यमतशब्दस्यार्थः।

'औपनिषदं पुरुषं पृच्छामि', 'दृश्यते त्वग्र्यया बुद्ध्या' इत्यादिभिस्तस्य श्रुतिमात्रेण श्रुतिसंस्कृतबुद्धिमात्रेण च ग्रहणविशेषस्य प्राप्तेः। परमार्थतस्तु शक्तिकृपां विना अपरोक्षज्ञानश्रवणमननाद्यविषय इत्यर्थः। तस्माद् ब्रह्मणोऽदृष्टत्वादिकं द्रष्टव्यत्वादिकञ्चोपपन्नमित्यवदातम्।१।३।१३।

प्रासङ्गिकबलवज्जिज्ञासानिवृत्त्यनन्तरं भूमाधिकरणोत्थापितजिज्ञासानिवर्त्तकं दहराधिकरणम्—तत्र हि ननु 'भूमा त्वेव विजिज्ञासितव्यः' इति श्रुताववधारणमनुपपन्नम्, 'अथ यदिदम् अस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इति श्रुतौ दहरं क्षुद्रायतनं हृत्पुण्डरीकं तदवच्छिन्नाकाशः क्षुद्रतरः, सूच्याकाश इव सूच्यपेक्षया; तस्मिन् यदभ्यन्तरं तत् क्षुद्रतमं तस्य जिज्ञासितव्यत्वाभिधानादित्याक्षेपपरीहारार्थमाद्यसूत्रम्,

( दहराधिकरणम्—५ )

## दहर उत्तरेभ्यः ।१।३।१४।।

दहरः = दहरशब्देनोपात्तः अन्तराकाशः, स इति पूर्व्वसूत्रादनुकृष्यते सः = आत्मा—ब्रह्म, आत्मत्वेनैव यस्य प्राणापेक्षया भूमत्वमुपपादितपूर्व्वम्—स आत्मैव 'दहरः' इत्यनेन अभिधीयते। न च दहरस्य अन्तराकाशस्य यदन्तस्तस्यान्वेष्टव्यत्वजिज्ञासितव्यत्वयोः श्रवणात् दहराकाशस्यात्मत्वप्रतिपादनमयुक्तमिति वाच्यं तदन्तरित्यनेन तस्यैवैकदेशग्रहणात् तद्व्यपदेश-

स्यापि प्राप्तेः, अन्तःपदग्रहणान्तु सूक्ष्मतमत्वाजगम्यत्वसूचनाय । अतएव अन्तराकाशमात्रस्योत्तरश्रुतावुपादानं सङ्गच्छते । तस्मात् 'भूमा त्वेव विजिज्ञासितव्य' इत्यवधारणं नानुपपन्नम् । ननु बहुजलत्वमिव भूम्नो दहरत्वमप्रामाणिकम् इत्यत आह 'उत्तरेभ्यः'=तस्यां श्रुतावुत्तरवाक्ये यानि लिङ्गानि वर्त्तन्ते तेभ्य एव तदुपपादनात् । दहरस्थानमवलम्ब्योपास्य इत्यभिप्रायेण दहरशब्दप्रयोगो न तु वस्तुगत्या तस्य दहरत्वमिति । न चेदं प्रथमपादोक्तस्वाप्ययाधिकरणेन गतार्थमिति वाच्यं भूमविरुद्ध-तया दहरमधिकृत्य तत्र संशयाभावेनात्र च तत्सत्त्वेन मिथो भेदात् । इत्येव व्यक्तार्थः । रहस्यार्थस्तु—'द' इत्यस्य 'हर' इत्यस्य च शब्दस्वरूपस्य चाश्रयो दर्शितश्रुतौ दहरशब्दस्यार्थः, नत्वल्पः, दश्च हरश्च इति विग्रहेण समाहारद्वन्द्वः हरमित्यपि समाहारद्वन्द्वो हाद्यो रो रेफ इति मध्यपदलोपी कर्म्मधारयो वा । तथाचात्र दश्च हरश्च इति द्वन्द्ववाक्यम् । तदत्रास्ति इति दहरम् । वर्णानां चतस्रोऽवस्थास्तत्र मध्यमावस्थायां हृदयेऽवस्थानात् तस्य दहरमिति संज्ञा । दकारे हकाररेफ-योश्च स्वरसम्बन्ध उच्चारणार्थः, ककारादीनां सर्व्वेषामेव व्यञ्जनानां तथैव स्थितेः । अन्तराकाशो नाम आत्मा—तस्यापि दहरत्वं तादृशवर्णाश्रितमन्त्रद्वयसम्बन्धादेव द इव दसदृशं वा हरं यस्येति समासात् दो दकारो यथा अन्तराकाशस्य सम्बन्धी हरमपि तथा इत्यर्थः । सम्बन्धश्च वाच्यवाचकभावस्तादात्म्यं वेति हृत्-पुण्डरीके अन्तराकाशे च तस्याभेदान्वयो नानुपपन्नः ।

नन्वेवं दकारो हकारादिरेफश्चेमावेव केवलं किं मन्त्रौ? अथवा वर्णान्तरयुक्तौ? तस्मिन् दहरे यदन्तस्तदन्वेष्टव्यं विजिज्ञासितव्यमिति तत्पदार्थो जीवो वा ब्रह्म वा? इति संशयौ भवतः। अत्र कश्चिदाह—तादृशवर्णत्रयमेव तत्स्वरूपं मातृकान्तर्गततया तस्य मन्त्रत्वमपि युज्यते, तत्र च तत्तद्वर्णाधिष्ठात्री देवता जीवविशेषस्वरूपैवास्तु अन्वेष्टव्यं विजिज्ञासितव्यं वस्तु, इत्यस्मिन् पूर्वपक्षे उत्तरसूत्रं दहर उत्तरेभ्य इति। 'उत्तरेभ्यः' = तकारादिवाक्यस्थरेफत्रयसम्बद्धस्वरेभ्यः, ल्यब्लोपे पञ्चमी कपिञ्जलाधिकरणन्यायेन बहुवचनं त्रित्वार्थकं तादृशस्वरत्रयमाश्रित्येत्यर्थः, स्थिते इत्यध्याहार्य्यम्, 'दहरे' इति विशेष्यपदं दश्च हरश्च इति द्वन्द्वात् दश्च हरश्च इति वा पूर्ववत् कर्म्मधारयगर्भद्वन्द्वात् दकारे हकारे वा इत्यर्थः 'सः' इति पूर्वसूत्रादनुकृष्यते, सः = आत्मा। विजिज्ञासितव्यमितिश्रुतिस्थपदार्थो लिङ्गविपरिणामेन योजनीयः। 'उत्तरेभ्यः' = उत्कृष्टः प्रथमोक्तत्वात् प्रकृष्टस्तकारो येभ्यस्ते 'उत्ताः' अथवा तकारादुद्गताः तकारादिके निगदे ऊर्द्ध्वदेशप्राप्ताः परवर्त्तिन इति यावत् प्रादिसमासात्, 'उत्ताः'; उत्ता रा रेफास्त्रयो रेफा येषां यत्सम्बन्धिनः यत्प्रधाना इति यावत् स्वरसम्बन्धं विना व्यञ्जनानामुच्चारयितुमशक्यत्वात् ते, स्वरा एव, ते च षष्ठस्वरः पञ्चदशस्वरश्चतुर्थस्वरश्च। ननु कथमेवम्? उच्यते, दहरश्रुतौ प्रथमनिगदादनन्तरमेव 'तञ्चेद् ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इति निगदः, स च तकारादिः,

तत्र स्वरेण साक्षात्सम्बन्धवन्तो रेफाः पञ्च, तत्रायोग्यतया द्वितीयतृतीययोरग्रहणात् त्रय एवावशिष्यन्ते,—यथा 'भूयात्' इत्यत्र स्वरसम्बन्धी रेफः प्रथमः, स च चतुस्वरसम्बन्धी, तं स्वरमाश्रित्य दकारः स्थितश्चेत् तत्र वास्तवद्वितीयतृतीययोः 'ब्रह्मपुरे' इत्यत्र रेफयोः प्रथमैकादशस्वराभ्यां सम्बन्धेन तावाश्रित्य 'दू' इत्यस्य स्थितिर्बाधिता, स्वरान्ते बिन्दुविसर्गातिरिक्तस्वराणां योगाभावात्। अतस्तौ रेफावुपेत्य वास्तवचतुर्थमेव, 'दहरम्' इति पञ्चदशस्वरान्तरेफं द्वितीयस्थानापन्नं कृत्वा तदीयस्वरेण बिन्दुना दू इत्यस्य सम्बन्धित्वं प्राह्यं तेन जगद्धात्रीदुर्गामन्त्रस्वरूपं लब्धम्। ननु 'ब्रह्मपुरं' इत्यत्र रेफो न पञ्चदशस्वराश्रितः, किन्तु तत्पूर्ववर्त्ति प्रथमस्वराश्रित इति चेत्—सत्यम्, तथापि मातृकामध्ये पञ्चदशस्वरस्य 'अं' इत्याकारकतया प्रवेशात् पाठाच्च तदनुरोधेनात्र रेफस्य पञ्चदशस्वराश्रितत्वकथनम्। व्यञ्जनपञ्चदशस्वरवास्तवरूपयोरव्यवहितपूर्वापरीभावस्य क्वचिदप्यदर्शनात् स्वरद्वारकाश्रयतया तयोराश्रयाश्रयिभावस्य शास्त्रप्रसिद्धत्वाच्च। तथा ह्यागमे 'कामत्रयं वह्निसंस्थं रतिबिन्दुविभूषितम्।' 'सान्तमौकारसंयुक्तं बिन्दुभूषितमस्तकम्' इत्याद्युदाहरणं द्रष्टव्यम्। तदनन्तरं पुण्डरीकमिति रेफाश्रितः स्वरः—पञ्चमोऽपि रेफद्वयस्य परित्यागेन तृतीयस्थानापन्नः तत् सम्बन्धित्वेन ह-र इत्याकारकस्योच्चारणार्थस्वरसंवलितव्यञ्जनद्वयस्य, 'ह्री' इत्याकारलाभः, मध्यस्थितस्य 'ब्रह्मपुरं' इति पञ्चदशस्वरस्य देहलीदीपन्यायेन तत्रापि सम्बन्धा-

न्मायाबीजं पर्य्यवसन्नम् । इदञ्च बीजं त्रिपुरसुन्दर्य्याः प्रधानभूतं भुवनेश्वर्य्याश्चैकाक्षरी विद्येति, इति मन्त्रद्वये तत्तन्मूर्त्त्यवच्छिन्न आत्मा अन्वेष्टव्यः विजिज्ञासितव्यः इति विधिः । आत्मा च ब्रह्म, तदेव सत्यम्—सतीयमिति विवरणमनतिवृत्तप्रकरण एवास्मिन् श्रूयते, विचारितञ्च तदधस्तात् तस्य जिज्ञासा उपासनपर्य्यवसायिनी विधीयते । मातृकान्तर्गतस्य मन्त्रत्वेऽपि सतीयमित्यनेन तस्यासम्बन्धान्न दहर इत्यस्य केवलस्य शब्दस्य ग्रहणं किन्तु प्रदर्शितक्रमेण दकाराद्यं हकाराद्यञ्चैकाक्षरं मन्त्रद्वयमिति । तत्तन्मन्त्राधिष्ठातृत्वात् तन्मन्त्रवाच्यत्वाद्वा तत्तन्मूर्त्त्यवच्छिन्नब्रह्मणस्तत्रोपासना युक्ता न तु केवले दकारहकाररेफे । तस्माद् दुर्गाबीजं मायाबीजं वाश्रित्य रक्तज्योतिर्म्मयतत्तन्मूर्त्तिभेदावच्छिन्नब्रह्मण उपासनमत्र विधीयते इति निगूढम् ।१।३।१४।

उत्तरवाक्यस्थलिङ्गानि दर्शयति —

**गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ।१।३।१५।।**

गतिः परलोकगमनम्, तत्र शुभाशुभावस्था वा, शब्दः = वाचकशब्दश्च ताभ्यां दहर आत्मा ब्रह्मैव । 'तथाहि' = तादृशं हि = यतः तादृशं गतिबोधकं वाचकशब्दघटितञ्च 'दृष्टं' = प्रत्यक्षं व्यक्तश्रुतिवचनमित्यर्थः 'लिङ्गं' = गमकं तत्तात्पर्यकञ्च अस्तीति शेषः । श्रूयते हि 'तद् य इहात्मानमननुविद्य व्रजन्ति, एतांश्च सत्यान् कामांस्तेषां सर्व्वेषु लोकेष्वकामचारो भवति अथ य इह आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां

सर्व्वेषु लोकेषु कामचारो भवति' (छा० ८।१।६।) इति आत्मज्ञानाज्ञानाभ्यां परलोकगतानामवस्थाभेदात् प्रायेणैतत्समानार्थकस्य 'यो वा एतदक्षरं गार्ग्यविदित्वास्मात् लोकात् प्रैति स कृपणः', 'विदित्वास्मात् लोकात् प्रैति स ब्राह्मणः' ( बृ० ३।८।१० ) इति श्रुत्यन्तरस्य च संवादात्, एतच्छ्रुत्युक्त आत्मा अक्षरपदार्थो ब्रह्मस्वरूपः, इदं गतौ दृष्टं = प्रत्यक्षं, गतिश्रुतिरिति यावत्। वाचकशब्दश्रुतिर्यथा—दहरमन्तर्हृदयाकाशं प्रकृत्य 'एतत् सत्यं ब्रह्मपुरम्. अस्मिन् कामाः समाहिता एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति' इति ( छा० ८।१।५ ) अत्र ब्रह्मपुरात्मनोरेकत्वं स्पष्टमुक्तं ब्रह्मैव पुरं ब्रह्मपुरमिति समासेन एष आत्मा अपहतपाप्मेत्यादिना दहराकाशस्य ब्रह्मत्वमुक्तमिति। ननु दहराकाशो जीव एव स्यात् तस्यापि वस्तुतो ब्रह्मानन्यत्वात् इत्याशङ्कयाह—लिङ्गमिति प्रष्टप्रतीतिसिद्धजीवब्रह्मभेदमादायैवात्र ब्रह्मपुरात्मशब्दयोरुपादाने लिङ्गं ज्ञापकमस्ति 'यथा ह्येवेह प्रजा अन्वाविशन्ति' इति अन्वावेशक्रियायामधिकरणतया इदंपदार्थस्य, कर्त्तृतया च जीववाचकप्रजाशब्दस्योपादानमेव तयोर्भेदानुमापकम्। अत्र चकारो दृष्टलिङ्गयोर्भेदद्योतकः। मन्त्रपक्षे तु ननु स इति पूर्व्वसूत्रादनुकृष्यत इत्युक्तं तत्र तत्पदार्थो यदि जीवः स्यात् मन्त्रोपासनायामपि तस्यैवोपास्यत्वमित्यापद्यते, नतु ब्रह्मण इत्याशङ्कायामाह गतीति सूत्रम्। 'आत्मा वा अरे

द्रष्टव्य' इत्यादि ( बृ० २।४।५ ) श्रुतौ आत्मपदार्थो जीव एव 'आत्मनस्तु कामाय पतिः प्रियो भवति' इति याज्ञवल्क्यस्य वचनप्रवाहे जीवस्यैवात्मन इत्यनेनोपादानात् । 'पुरिशयं पुरुषमीक्षते' इत्यत्रापि पुरुषपदार्थो जीव एव, यतः, परं पुरुषमभिध्यायीतेत्यनेन ईक्षतिकर्म्मण एव ध्यानं प्रथममुपदिष्टम्—तद्विदः फलन्तु 'स तेजसि सूर्ये सम्पन्नः सामभिरुन्नीयते ब्रह्मलोकम्' इति देशपरिच्छिन्नम्, न तु मोक्षः, तस्माज्जीव एव तत्र पुरुषपदार्थः । इत्येवं प्राप्ते उच्यते—'गतिशब्दाभ्यां' गतिः = 'स सामभिरुन्नीयते ब्रह्मलोकम्' इति ब्रह्मलोकप्राप्तिः, सा च अभिध्यायतो जीवस्य, ततश्च ब्रह्मसाक्षात्कारस्ततो मोक्षः, इत्यत्र क्रमे ब्रह्मलोकगतिर्यद् ध्यानेन भवति, तस्यैव साक्षात्कारो वक्तव्यः । तस्य जीवत्वे 'जीवघनात् समुत्थाय पुरिशयं पुरुषमीक्षते' इत्यत्र शब्दे जीवघनात् समुत्थानं नोपपद्येत जीवघनशब्दस्य जीवस्वरूपपरत्वात् । ततः समुत्थितेन दृश्यमानः परः पुरुषो न जीवो भवति, किन्त्वन्यः, स एव ब्रह्म । तादृशं 'दृष्टं' प्रत्यक्षं श्रुतिरित्यर्थः । 'लिङ्गं' गमकं च दहरश्रुतिमध्येऽपि वर्त्तते, इत्येतत् प्रदर्शितम् । इतः परं दहराधिकरणसूत्राणामेकैव व्याख्या पक्षद्वयान्विता मन्त्रद्वयदेवतापक्षेऽपि ब्रह्मत्वप्रतिपादनार्थेति ध्येयम् ।१।३।१५।

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ।१।३।१६।।

'धृतेः' = द्यावापृथिव्योः पतनप्रतिबन्धकसम्बन्धवत्त्वात् 'महिम्नः' = महत्त्वाच्च—दहराकाशो ब्रह्मेति शेषः, अत्र

प्रमाणमाह—अस्येति। 'अस्य'=एतद्द्वयस्य 'अस्मिन्'= दहराकाशे उपलब्धेः=श्रुतौ 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इत्यत्र महत्त्वम्, 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चेहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्।' इत्यत्र च द्यावापृथिव्यादिधृतिरुपलभ्यत इत्यस्मात्। समाधानं नाम पतन प्रतिबन्धकसम्बन्धः। तद्द्वयमेव ब्रह्मलिङ्गम्, 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतम्' (मु० २। २। ५) इति मन्त्रवर्णात् 'परो दिवा पर एना पृथिव्यैतावती महिना संबभूव' इति च देवीसूक्तमन्त्रवर्णात्। श्रुत्यन्तराच्चावगम्यते। यद्यपि दहरश्रुतौ प्रथमं महत्त्वस्य पश्चात् धृतेर्निर्देशस्तथापि सूत्रे तद्व्यतिक्रमस्तु—यस्य द्यावापृथिव्यौ गर्भ एव स्थिते, तस्य महत्त्वं ततोऽप्यधिकमिति महिमातिरेकः सुग्रहो भविष्यति विनेयानामित्यभिप्रायेण।१।३।१६।

## प्रसिद्धेश्च।१।३।१७॥

सन्निहिताशीताध्याये चानतिवृत्तप्रकरणे चास्मिन् आत्मशब्दस्य ब्रह्मपरतया प्रसिद्धेश्च। चकारो हेत्वन्तरसूचनाय। तेनाकाशशब्दस्य तत्परतया भूयः प्रयोगस्य संग्रहः। भूम्नो ब्रह्मत्वं भूमाधिकरणे दर्शितम्, तत्र यथा आत्मशब्देन प्राणव्यावृत्तिः ब्रह्मरूपताप्रतिपत्तिश्च तदिह स्मर्त्तव्यं स्मर्त्तव्यश्च ईक्षत्याधिकरणतृतीयसूत्रभाष्यस्यात्मशब्दविचारः। तत एवा-

त्मशब्दस्य ब्रह्मपरतया प्रसिद्धिरधिगम्यते। आकाशशब्दस्य भूताकाशेऽभिधासत्त्वेऽपि 'यावान् वा अयमाकाश' इत्युपमानतया तन्निर्देशेन तद्भिन्नस्य ग्राह्यत्वे, ब्रह्मण एव ग्रहणं युक्तं 'आकाशे आनन्दो न स्यात्' 'आकाशः परायणम्' इत्यादिषु बह्वीषु श्रुतिषु तत्परतया प्रयोगात्, अत्रापि अन्तराकाशो ब्रह्मैवेति युक्तम् ।१।३।१७।

सन्निहितातीताध्याये प्रकरणे चास्मिन् जीवपरत्वमात्मशब्दस्य दृश्यते—दहराकाशशब्दस्यापि तत्परत्वमस्त्विति शङ्कागर्भं तत्समाधानसूत्रमाह—

## इतरपरामर्शात् स इति चेन्नासम्भवात् ।१।३।१८।।

'इतरपरामर्शात्' = इतरः = ब्रह्मभिन्नो जीवस्तस्य परामर्शः = आत्मशब्दात् तस्य निश्चयः तस्मात्, 'सः' = जीवो दहराकाशशब्दस्यार्थ इति शेषः, एवं नाम तत्रैव श्रूयते, 'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयम् इति तस्माद् हृदयम् ।' 'कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु विजानाति यदेतद्धृदयं मनश्चैतत् ।' इति श्रुत्यन्तरसंवादाच्च परामृश्यते हृदयमिति जीवस्य संज्ञा। 'स वा एष आत्मा' इति तच्छब्देन प्रक्रान्तग्रहणात्, दहराकाशस्य आत्मतया प्रक्रमश्चेत् जीवत्वं तस्य प्राप्तमेवेति तात्पर्य्यम्,

सन्निहितातीताध्याये 'आत्मतः प्राणः' इति यदुक्तं तत्राप्यात्मा जीव एव 'तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मनः प्राणः' इति श्रवणात् तत्रात्मपदेन दर्शनादिकर्त्तृजीवविशेषस्यैव प्राप्तेः 'इति चेत्' = पूर्व्वपक्षिणा इति यद्युच्येत, तत्रोत्तरं 'न' = तन्न युज्यते, 'असम्भवात्' = 'अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः' इति ( श्वेता० ५।८ ) मन्त्रवर्णात् स्वल्पपरिमाणस्य जीवस्य 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश' इत्येवमुपमानस्य, तदुपमानबोधितपरममहत्परिमाणस्य वा सम्भवितुमनर्हत्वात्। 'कोऽयमात्मा इत्यादिश्रुतौ प्रज्ञानशब्देन जीवमभिधाय "प्रज्ञानं ब्रह्म' इत्युक्तं तस्माज्जीवोऽपि शास्त्रदृष्ट्या ब्रह्मैव, लोकदृष्ट्यैव जीव इति भेदः। जीवस्य यदि शास्त्रदृष्ट्या वास्तवं ब्रह्मरूपत्वमभिप्रेत्य अन्तराकाशत्वमुच्यते तदा ओमिति ब्रूमः। अतो जीवो न दहराकाशः ।१।३।१८।

पुनराक्षेपपूर्व्वकं समाधानमाह—

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ।१।३।१९।।

ननु 'अङ्गुष्ठमात्रो रवितुल्यरूप' इति यो मन्त्रवर्णो जीवस्य क्षुद्रत्वे प्रमाणतयोपन्यस्तः, तस्य 'उत्तरात्' = अव्यवहितान्मन्त्रवर्णात् समष्टिरूपेण महत्त्वं सेत्स्यति, स हि मन्त्रः, 'बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' इत्यनेन स च जीवो नैकः किन्तु

अनन्तास्ते इति प्रत्यायनात् समष्टिपरिमाणेन आकाशोपमान-सम्भवात् जीवपरत्वं दहराकाशस्य इत्याक्षेपः, 'चेत्'= यद्येवं 'तु' तुकारो व्यवच्छेदकः। तन्न इति फलितार्थः। 'आविर्भूतस्वरूपः'=प्रकाशितजीवस्वरूपो मन्त्रवर्ण इति शेषः, आनन्त्यं न असंख्यत्वं—जीवस्य तथास्वरूपाभावात् किन्तु असीमत्वं दैशिकपरिच्छेदशून्यत्वं तदेव जीवस्वरूपं जीवे ब्रह्मणो वास्तवभेदाभावात् तच्च 'तत्त्वमसि' इत्यादिश्रुतिभिरुपदिष्टम्। यद्वा 'उत्तरात्'=दहरश्रुतेः परवर्त्तिनः संप्रसादनिगदात् इत्यर्थः। सुषुप्तजीवस्य प्राप्तया तदूर्द्ध्वं प्रक्रान्तस्य तस्यैव 'य एष सम्प्रसाद' इत्युपक्रम्य 'एष आत्मा' इत्यात्मशब्देनोपदेशः, न तु ब्रह्मणः इति 'चेत्' इति पूर्व्ववत्। 'तु' इत्यपि पूर्व्ववत्। 'आविर्भूतस्वरूपः' निगद इति शेषः, जीवस्य यत्स्वरूपं ब्रह्म तदेवात्राविर्भूतं प्रकाशितम्, 'एतदमृतमभयमेतद् ब्रह्म' इति; तथाच स इत्यनेन यदि जीवो गृह्यते तस्य यत् स्वरूपं ब्रह्म तदपि तत्रोपदर्शितमिति ब्रह्मण्येव पर्य्यवसानादिति भावः ।१।३।१९।

ननु संप्रसादश्रुतौ 'य एष आत्मा' इति जीवस्य यः परामर्शः, स एव दहरे, न तु तदुत्तरवाक्यस्थब्रह्मस्वरूपेण तद्ग्रहणमित्याशङ्क्याह—

अन्यार्थश्च परामर्शः ।१।३।२०॥

'च'=किञ्च 'अन्यार्थः'=अन्यः अन्वराकाशप्रतिपाद्यभिन्नः 'अर्थः' प्रयोजनं यस्य सः 'परामर्शः'=संप्रसादशब्दात्त-

दुपक्रमादात्मशब्दाच्च जीवविषयको निश्चयः । दमारूपेण ब्रह्मोपासीनस्य जीवस्य सिद्धिलाभिष्यलक्षणापने ततश्च स्वर्गप्राप्तिः, निराकारतया तदुपासनन्तु तादात्म्यध्यानेनापीत्येतदुपदेशार्थैव सा श्रुतिर्जीवमाह. न पुनरन्तराकाशस्य ब्रह्मत्वव्यावर्त्तनार्थेति ध्येयम् ।१।३।२०।

ननूमोपासनमिव निराकारब्रह्मोपासनमपि स्वाध्ययाधिकरणसिद्धान्तभूतम्, तेन निराकारस्यापरिच्छिन्नस्य ब्रह्मणो दहरत्वं नोपपद्यते दहरशब्दस्याल्पवाचित्वात्, दहरत्वे तु न तद्ब्रह्म भवितुमर्हति इत्याक्षेपगर्भं समाधानसूत्रमाह—

## अल्पश्रुतेरिति चेत् तदुक्तम् ।१।३।२१।।

दहरश्रुतिरेवाल्पश्रुतिस्ततो न तद्ब्रह्म, तस्य वा ब्रह्मत्वे भूमा न ब्रह्मेति चेत्—'तदुक्तम्' इति तत्समाधानसंक्षेपः । उक्तं हि छन्दोऽभिधानान्नेति चेन्नेत्यत्र ( १।१।२५ ) जीवमुख्यप्राणलिङ्गान्नेति चेन्नेत्यत्र च । अयमस्यार्थः—हृत्पुण्डरीकमवलम्ब्य ब्रह्मणि चेतः समाधानं कर्त्तव्यमित्युपासनार्थतया दहरश्रुतिरुपपादनीया न ह्यसिद्धोपासनस्यापरिच्छिन्नब्रह्मज्ञानं भवति, न च ज्ञानमन्तरेणोपासनमित्युपासनार्थिना प्रथमतः परिच्छिन्नत्वं कथंचिदाश्रयणीयमेव, मूर्त्तिविशेषं वा निराकारं परिच्छिन्नमन्तःकरणं तत्सम्बद्धप्राणं मन्त्रादिस्वरूपं वा नाडीर्वा समाश्रित्य सिद्धोपासनैस्तु अपरिच्छिन्नं ब्रह्म दृश्यते यस्य भूमेति व्यपदेशः । तथाच भूमैव ब्रह्मेति स्वरूपमुपासनञ्चाल्पोपाधि-

मवलम्ब्येत्यल्पश्रुतिरियमुपपद्यते । न चैवं शुभ्वाद्यायतनकमपि ब्रह्म स्यात्, न स्यात्; श्रुतावौपनिषदपुरुषाद् ब्रह्मणो व्यतिरेकेण तन्निर्देशादिति ध्येयम् ।१।३।२१।

( अनुकृत्यधिकरणम्—६ । )

तस्य वास्तवपरिच्छिन्नत्वं नास्तीति प्रदर्शयितुं हेत्वन्तरमाह—

अनुकृतेस्तस्य च ।१।३।२२॥

अल्पस्यानुकृतेश्चाल्पत्वश्रुतिरुपपद्यते । यथाग्निः स्वयमतद्रूपोऽपि दीर्घह्रस्ववर्त्तुलादीन्धनानुकृत्या दीर्घादितया बहुधा व्यपदिश्यते, तद्वदपरिच्छिन्नमपि ब्रह्म परमात्मा दहरस्थानानुकृत्या दहर इति व्यपदिष्टः । 'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च' इति श्रुतेः । यथावा अन्तर्गृहं जालान्तरसन्निपतितोऽर्कमरीचिर्जालच्छिद्रायतनानुकारी वर्त्तुलाद्याकारतया स्वल्पायतनतया च व्यपदिश्यते, न तु तदेवार्कमरीचिस्वरूपमिति तद्वत् ।१।३।२२।

एकस्य परिच्छिन्नत्वापरिच्छिन्नत्वे बुबोधयिषितशक्तिब्रह्मवादमतिस्फुटमुद्बोधयता स्मृतिप्रमाणेन समर्थ्यते—

अपि च स्मर्य्यते ।१।३।२३॥

"यच्च किञ्चित् क्वचिद् वस्तु सदसद्वाखिलात्मके । तस्य सर्व्वस्य या शक्तिः सा" इति शक्तेरपरिच्छिन्नत्वं मार्कण्डेयपुराणे

स्मर्य्यते। तथा—"यस्य देवस्य यद्रूपं यथाभूषणवाहनम्। तद्रूदेव हि तच्छक्तिरसुरान् योद्धुमाययौ।" इति परिच्छिन्नत्वञ्च। न च भेदस्तासामस्ति, 'एकैवाहं जगत्यत्र द्वितीया का। ममापरा' इति तत्रैव स्मरणात्। अभिव्यक्तिस्थानादरेणापरिच्छिन्नत्वेऽपि परिच्छिन्नत्वव्यपदेशः। 'देवानां कार्य्यसिद्ध्यर्थमाविर्भवति सा यदा। उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते।' इति नित्याया यथोत्पत्तिव्यपदेशस्तद्वत्।१।३।२३।

ननु यत्रात्मन्यल्पत्वं श्रुतिरवबोधयति स जीव इति नियमः, 'बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेय' इति श्रवणात्, तस्य वस्तुनो वस्तुतो ब्रह्मत्वेऽपि लोके भेदप्रतीतेर्जीवाख्यं तन्नाम न ब्रह्मतात्पर्य्यकं भवति, अपहतपाप्मत्वादिश्च प्रकृष्टजीवधर्म्मः, तदुपादानं च तादृग् धर्म्मलाभप्रोत्साहनार्थकम्। ततश्च दहरश्रुतिर्जीवपरेत्याशङ्कायां नियमे व्यभिचारं प्राहयितुमधिकरणान्तरमाह—

( प्रमिताधिकरणम्—७। )

## शब्दादेव प्रमितः।१।३।२४॥

'अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य स एवाद्य स उ श्व एतद्वै तत्' इति कठश्रुतिर्विचारार्हवाक्यम्, अत्र आत्मार्थकपुरुषशब्दः किं जीवपर उत परमात्मपरः? इति

संशयः। जीवपर इति पूर्व्वपक्षः, अंगुष्ठमात्र इति विशेषणात्। न च जीवो नांगुष्ठमात्रः किन्तु बालाग्रशतभागशतांशमात्रो 'बालाग्रशतभागस्य' इत्यादिश्रुतेरिति वाच्यं तच्छ्रुतेरव्यवहितपूर्व्वमन्त्रेणांगुष्ठमात्रत्वस्यापि बोधनात्। तथा हि 'अङ्गुष्ठमात्रो रवितुल्यरूपः संकल्पाहङ्कारसमन्वितो यः। बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः' इति मन्त्रस्तत्र पठ्यते। येनोपाधिना जीवसंज्ञा तस्याङ्गुष्ठमात्रत्वमुपाधिप्रतिबिम्बितचैतन्यस्य तु ततोऽणीयस्त्वमिति हि तदर्थः। यद् भवतु, बृहत्त्वाद् ब्रह्म भूमा, नाल्पम्; अल्पश्च जीव इति अङ्गुष्ठमात्रत्वमल्पत्वमवगमयत् पुरुषस्य जीवत्वं ग्राहयतीति। अत्रोत्तरम्। 'प्रमितः' परिच्छिन्नत्वेन—अङ्गुष्ठमात्रत्वेनोक्तः पुरुषो ब्रह्मैव, न तु जीवः। सूत्रस्थ एवकारोऽध्याहृतेन ब्रह्मेत्यनेन संबध्यते। कुतः 'शब्दात्' 'ईशानो भूतभव्यस्य' इति मन्त्रवर्णात् ईशान ईश्वरः। न हि भूतभव्येशानत्वं जीवस्यास्ति, न च वास्तवाभिप्रायेणेदमुक्तमिति वाच्यम्—उपाधिप्रतिबिम्बयोरन्यतरत्रैव व्याघातात्। यदीशानत्वमुपाधिमाश्रित्याभिधीयते, व्याहन्यत एव तत्; जीवोपाधौ व्यष्ट्यन्तःकरणे भूतभव्येशानत्वासम्भवात्; यदि वा उपाधिप्रतिबिम्बितचैतन्यमात्रमाश्रित्य, तथापि व्याघाततादवस्थ्यम्, न हि प्रतिबिम्बे वास्तवमीशानत्वं सम्भवति। अथ उपाधेर्या कारणावस्था प्रतिबिम्बस्य च या बिम्बगता सत्यता, तदाश्रयेण ईशानत्वमुच्यत इति चेद् बाढं जीवपरत्वोक्तौ तेनैव तिलाञ्जलिप्रदानात्। न ह्येकं वाक्यं जीवस्य सत्यत्वं मिथ्या-

त्वञ्च बोधयितुमीष्टे सत्यत्वानवबोधने जीवपरं न भवति, मिथ्यात्वानवबोधने तस्य च नेशानत्वं गमयति। ब्रह्मपरत्वे तु नैष दोषः, न चाङ्गुष्ठमात्रत्वं व्याहन्यत इति वाच्यमुत्तरसूत्रे समाधास्यमानत्वात्। न च व्यावहारिकपारमार्थिकभेदादेकमेव वाक्यं जीवस्य सत्यत्वमिथ्यात्वे गमयतीति वक्तव्यम् तत एव तस्य ब्रह्मपरत्वसिद्धेरप्रत्यूहत्वात् एतद्वै तदिति हि पृष्टमेव प्रकृतमिहोच्यते, तच्च ब्रह्मैव।१।३।२४।

ननु कथं सर्व्वगतस्य ब्रह्मणोऽङ्गुष्ठमात्रत्वमित्यत आह—

## हृद्यपेक्षया तु मनुष्याधिकारत्वात्।१।३।२५॥

हृदि अवस्थितेरपेक्षया अङ्गुष्ठमात्रत्वमुच्यते। यद्धि सर्व्वगतं तद्धृदयं नापजहाति व्योमेव घटाद्यभ्यन्तरम्। यथा घटपरिमाणेन घटाभ्यन्तरावच्छेदेनाकाशस्य परिमाणम्, तथा हृदयपरिमाणेन तदवच्छेदेन ब्रह्मणोऽङ्गुष्ठमात्रत्वम्। ननु नेदमुपपद्यते प्राणिभेदेन हृदयस्थानभेदात् नहि पिपीलकहृदयमङ्गुष्ठमात्रं भवतीति शङ्कायामुत्तरमाह—मनुष्याधिकारत्वात् शास्त्रस्येति शेषः सूत्रे तुकारः पूर्व्वपक्षव्यावर्त्तनसूचकः। शास्त्रस्य मनुष्याधिकारत्वमधिकारलक्षणे जैमिनीये वर्णितम्। ननु सर्व्वगतस्य कथं हृदयावस्थानमपेक्षितम्? अभिव्यक्तिहेतुत्वादिति ब्रूमः, अतएव श्रूयते 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः' इति, स्मर्य्यते च 'ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति' इति। तस्मादङ्गुष्ठमात्रत्वेनाल्पत्वमपि बोधयन्ती श्रुति-

रसौ ब्रह्मपरा सती प्रागुक्तं नियमं व्याहन्तीति दहरश्रुतिरपि ब्रह्मपरा तुल्यन्यायादिति भावः ।१।३।२५।

अधिकारप्रसंगेन ब्रह्मविद्याधिकारविचारमारभते,

( देवताधिकरणम्—८ । )

## तदुपर्य्यपि वादरायणः सम्भवात् ।१।३।२६॥

मनुष्यहृदयस्थित्यपेक्षयांगुष्ठमात्रत्वश्रुतिरात्मनो व्यवस्थापिता, शास्त्रस्य मनुष्याधिकारत्वादिति चेत्, ब्रह्मविद्यायामुपरि ऊर्द्ध्वलोकस्थानां देवादीनामधिकारोऽस्ति न वा ? इति संशयः, सर्व्वे हि निर्देशाः सावधारणा भवन्तीति न्यायेन मनुष्यानेवाधिकरोति शास्त्रमिति प्राप्ते तदुपर्य्यपीति सूत्रम् । तदर्थस्तु—तेषां मनुष्याणामुपरि ये देवादयो वर्त्तन्ते ब्रह्मविद्यायां तेषामप्यधिकार इति वादरायण आचार्य्य आह— अत्र हेतुः 'सम्भवात्'=अर्थित्वसामर्थ्ययोः प्रमाणस्य च सत्त्वेन मनुष्यवत्तेषामपि ब्रह्मविद्याधिकारे बाधाभावात्, इत्यर्थः । स्वर्गसुखस्य क्षयित्वपर्य्यालोचनया शाश्वतसुखस्वरूपमोक्षार्थित्वं तदुपयोगिश्रवणादौ च सामर्थ्यं देवानामस्ति. अस्ति च प्रमाणं ब्रह्मविद्यार्थिन इन्द्रस्य ब्रह्मविद्याधिगमे, तदुपयोगिब्रह्मचर्य्ये च । तथाहि, छान्दोग्यस्याष्टमाध्याये 'य आत्मा अपहतपाप्मा विजरो विमृत्युः' इत्युपक्रम्य 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्व्वांश्च लोकानाप्नोति सर्व्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति' इति प्रजापतिवचन-

अवणेन देवासुराणां ब्रह्मजिज्ञासायामर्थित्वं श्रुत्या प्रदर्शितम् । तत्र देवानामिन्द्रस्यासुराणां विरोचनस्य च ब्रह्मजिज्ञासया प्रजापत्युपस्थानं तदादेशेन ब्रह्मचर्य्यञ्चेति सामर्थ्ये ततो विरोचनस्यासिद्धावपि इन्द्रस्य ब्रह्मविद्यालाभश्चेति प्रमाणमस्ति; तस्मादस्ति देवानां ब्रह्मविद्याधिकार इति वादरायण आचार्य्यो मन्यते ।१।३।२६।

अथ मन्त्रा नित्यास्त एव देवाः, न तु नयनसहस्रादिमन्तः केऽपि देवाः सन्ति ये चेतना भवेयुः, मन्त्रशक्तिक्रियादिशक्तयश्च मिलिता अपूर्व्वं साधयन्ति तस्मात् स्वर्गादिफलमिति मन्यमानानां मते पूर्व्वपक्षः, यथा—ननु छान्दोग्यश्रुतेराख्यायिकांशे न प्रामाण्यम्, 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इति दर्शनात्; ब्रह्मजिज्ञासायां त्वस्ति प्रामाण्यम्, जिज्ञासाविधेः प्रत्यक्षत्वात् । तत्र चाधिकारी मनुष्य एव । सत्रविधेः स्तुत्यर्था 'वनस्पतयः सत्रमासत' इत्यादि श्रुतिरिवेन्द्रादीनां ब्रह्मचर्य्यश्रुतिर्जिज्ञासाविधेः स्तुत्यर्था । आख्यायिकांशेऽपि यदि प्रामाण्यमभ्युपगम्येत—देवानां विग्रहवत्त्वमङ्गीकार्य्यम्, तथाच कर्म्मणि विरोधः, युगपदनेकयजमानकर्म्मसु विभिन्नदेशसम्पाद्यमानेषु कस्मिन् अधिष्ठातव्यमिज्यमानदेवेन ? विग्रहस्य परिच्छिन्नत्वात्; इत्याशङ्कागर्भं समाधानसूत्रमाह—

**विरोधः कर्म्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ।१।३।२७॥**

'कर्म्मणि'=युगपदनेकदेशयजमानकर्त्तृकैकजातीयकर्म्मव्यक्तिषु इत्यर्थः । सप्तम्येकवचनन्तु कर्म्मभेदेऽप्यनुगतजातिमभि-

प्रेत्य प्रयुक्तम्। 'विरोधः'=विग्रहवतां देवानां सर्व्वत्रापस्थित्यसम्भवेन—कर्म्मविधायकश्रुतेः प्रामाण्यभङ्गः, यद्वा 'विरोधः'=असामानाधिकरण्यं देवाधिष्ठानयोग्यस्थाने देवानामभावः। 'इति चेत्'=इत्याक्षेपो यदि स्यात् 'न'=तन्न युज्यते। 'अनेकप्रतिपत्तेः'=एकस्य देवाद्यात्मनः, युगपदनेकशरीरप्राप्तेः, 'दर्शनात्'=प्रत्यक्षात् श्रुतेरित्यर्थः, दर्शनं हि श्रुतिः, निरपेक्षप्रमाणत्वात् लोके यथा चाक्षुषं दर्शनमित्युच्यते सर्व्वतो बलवत् प्रमाणत्वेन व्यवह्रियमाणत्वात्। अतएव स्मृतेरनुमानमिति संज्ञा, तस्याः श्रुतिसापेक्षप्रामाण्यकत्वात्। एकस्य देवस्यानेकप्रतिपत्तिश्रुतिश्च—'कति देवाः' इत्युपक्रम्य 'त्रयश्च त्री च शता त्रयश्च त्री च सहस्राः', इति निरुच्य पुनः पृष्टस्य याज्ञवल्क्यस्य प्रतिवचनं 'महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः' ( बृ० ३।९।१-२ ) इति पुनः प्रश्नप्रतिवचनप्रवाहे 'एकः' इति तस्यैव प्रतिवचनम्। दर्शनादित्युपलक्षणम्—तेन एकस्य मुनेः, युगपदनेकशरीरस्मृतिरपि संगृहीता। तेन 'शतार्द्धसंख्यं तदिदं शरीरम्' इत्येकस्य सौभरिमुनेः पञ्चाशत्पत्नीगृहे पञ्चाशता शरीरैर्युगपदवस्थानाद्युपाख्यानं विष्णुपुराणीयमपि संगृह्यते। न चाख्यायिका न प्रमाणमिति शङ्कनीयम्, सर्व्वजनाभ्युपगतस्येतिहासस्याप्रामाण्यापत्तेः। यत्र तु अन्यूनबलेन प्रमाणान्तरेण विरुद्धमर्थमाख्यायिका वा अर्थवादो वाभिदध्यात्, तत्र तदंशे वाच्यार्थेऽप्रामाण्यं लक्ष्यार्थे तु प्रामाण्यमेव। तस्मा-

दाम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति कर्म्मविधेरुपादेयताज्ञापनाय। कर्म्मविधायकशास्त्रस्य कर्म्मांशे तात्पर्यं नत्वन्यत्रेति स्वीकारेऽपि—इतिहासादीनां कर्म्मविधायकशास्त्रत्वाभावे सिद्धे स्वार्थे प्रामाण्यं तेषामभ्युपगम्यत एव। योगविशेषस्य तथाफलकताया योगशास्त्रेण दर्शितत्वाच्च—युगपत् आजन्मसिद्धयोगानां देवानां—कायव्यूहनिर्म्माणसामर्थ्यन्तु कैमुतिकन्यायसिद्धं यत्तु कैश्चिदुच्यते देवानां विग्रहवत्त्वे ऐरावतारूढेन्द्रवाहने घटकुड्यादिभङ्गप्रसङ्ग इति तदनवबोधविजृम्भितमेव तैजसशरीरस्य गुरुत्वाभावात् लघिमप्राकाम्यसिद्धिसत्त्वाच्च तदापत्तेः प्रेक्षावदुपेक्षणीयत्वात् तथाच न कर्म्मणि विरोध इति सिद्धम्।१।३।२७।

आक्षेपान्तरतत्समाधानगर्भं सूत्रमाह—

शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याञ्च १।३।२८॥

ननु माभूत् कर्म्मणि विरोधः, देवानां विग्रहवत्त्वे तेषामनित्यत्वात् वेदे येषां देवानां नामानि वर्त्तन्ते तत्तद्देवताजन्मानन्तरं तत्तन्नामोत्पत्त्या तत्तदर्थैश्च तदनन्तरं सम्बन्धात्—वेदे नित्यत्वाभावप्रसङ्गः इत्ययं 'शब्दे' = वेदे 'विरोधः' = निरपेक्षत्वव्याघातः, स्वतःप्रामाण्यव्याघातो वा तस्माद्देवानां न विग्रहवत्त्वं किन्तु नित्यमन्त्रात्मकत्वमिति 'इति चेत्' = उच्यते इति शेषः 'न' = तद्वचनं न युक्तम्, तत्र हेतुमाह

अतः इत्यादिना। 'अतः' = शब्दात् 'प्रभवात्' = देवाद्युत्पत्तेः —'प्रत्यक्षानुमानाभ्यां' = प्रत्यक्षं श्रुतिः, अनुमानं स्मृतिस्ताभ्याम्, तदुभयज्ञापितादित्यर्थः। तत्र श्रुतिः 'एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यान्' इति 'स भूरिति व्याहरत् स भूमिमसृजत' इति च (तै० ब्रा० २।२।४।५) स्मर्य्यते च शान्तिपर्व्वणि—'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतः सर्व्वाः प्रवृत्तयः' इति। 'सर्व्वेषां स हि नामानि कर्म्माणि च पृथक् पृथक्। वेदशब्देभ्य एवादौ निर्म्ममे स महेश्वरः'। इति च मनुस्मृतेः। तथा च सामान्यतो देवादीनामुत्पत्तिमत्त्वेऽपि यथा वेदात्मकशब्दस्य न निरपेक्षत्वव्याघातः, स्वतः प्रामाण्यव्याघातो वा तथा तत्तद्देवानां विग्रहवत्तयोत्पत्तिमत्त्वेऽपि तद्वाचकवसुरुद्रादिशब्दघटितवेदस्यापि न निरपेक्षत्वव्याघातः प्रामाण्यव्याघातो वा भवति। यतः साकारब्रह्मणो निःश्वासवदनायासेन कृतत्वे निरपेक्षत्वं स्वरूपातिरिक्तानपेक्षप्रामाण्यकत्वलक्षणं स्वतःप्रमाणत्वं वा वेदस्य, देवानामुत्पत्तिमत्त्वेऽपि तत्तद्देवतानां विग्रहवत्त्वे च न व्याहन्यत इति। १।३।२८।

अत्राशङ्कान्तरमुदेति—पूर्व्वमीमांसायां वेदस्य नित्यत्वमभिहितं तद्विरुद्धापत्तिखण्डनाय शबरादिनाम्ना वर्णसंघातविशेषमात्ररूपत्वञ्च—अत्र च वसुरुद्रादिनाम्ना देवविशेषवाचकत्वेनानित्यार्थसंयोगाभ्युपगमादनित्यत्वं प्रसज्यत इति तन्निरस्यन् सूत्रयति—

## अतएव च नित्यत्वम् ।१।३।२९।।

'अतएव'=देवादीनां प्रभवादेव—शब्दस्य जगदुत्पत्तिहेतुत्वादेव, एवकारेण अनित्यसंयोगाभावादिव्यावृत्तिः। 'नित्यत्वम्' शास्त्रलोकयोर्नित्यत्वव्यवहारः। चकारोऽनुक्तविषयान्तरद्योतकः। तच्च विषयान्तरं प्रदर्शिताशङ्का तत्समाधानञ्च। अयं भावः—यदि सृष्टिरनादिः सादिर्वा, चतुर्म्मुखस्य रात्रौ प्रलयः दिने पुनः सृष्टिश्च वर्त्तते। प्रतिसर्गं देवाद्युत्पत्तेः पूर्व्वं वेदार्थं स्मृत्वा सृजत्येव भगवान् चराचरं विश्वम्, अतो वेदो ज्ञानाकारेण भगवति पूर्व्वं प्रतिष्ठितः, स सृष्टौ सहकरोति इति तस्य सृष्टिहेतुत्वमुक्तम्। वैखरीरूपेण बहिर्भावोऽपि ब्रह्मण एव, तस्माद् 'यो वेदांश्च प्रहिणोति तस्मै' इति श्रूयते। प्रहयणं हि स्थितस्यैव वस्तुनो भवति। वेदस्य ज्ञानाकारेण स्थितिश्च नित्या।—सा च ब्रह्मणो नातिरिच्यते। यद्वा 'ऋचः सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत' इति श्रुतिः। 'अहमेव स्वयमिदं वदामि, जुष्टं देवेभिरुत मानुषेभिः।' इति श्रुतिश्च वैखरीरूपेण वेदाविर्भावं प्रमाणयतः। न च 'भूरिति व्याहरन् प्रजापतिर्भूमिं ससर्ज' इति वदन्त्या श्रुत्या 'न कश्चिद् वेदकर्त्ता च वेदस्मर्त्ता चतुर्म्मुखः' इति स्मृत्या च चतुर्म्मुखादेव वैखरीरूपेण वेदाविर्भाव उच्यते, तत् कथमुच्यते ब्रह्मणस्तद्रूपेण वेदाविर्भाव इति वाच्यम्, शक्तिरहितस्य चतुर्म्मुखस्य वेदवक्तृत्वासम्भवेन, शक्तेरेव परब्रह्मस्वरूपाया वैखरीप्रवृत्तौ हेतुतावचनस्य युक्तत्वात्, वैखरीरूपेणाविर्भावात् पूर्वमपि

ज्ञानाकारेणावस्थितस्य वेदस्य नित्यत्वात्। शब्दाकारस्यापि तस्य नित्यत्वव्यवहारः, यतो गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानञ्च स्वरूपतो भिन्नमपि अभिन्नवद् लोकसिद्ध-मिति तत्त्वम्।१।३।२९।

ननु शब्दात्मकवेद एव नित्यः 'विरूपनित्यया वाचा' इति मन्त्रवर्णात् अनादिनिधनेति दर्शितस्मृतेर्लाक्षणिकत्वस्यायो-गाच्च, उत्पत्तिश्रुतिस्तु एतत्सृष्टिप्रारम्भे कण्ठताल्वाद्यभिघातेन या प्रथमाभिव्यक्तिः, तमोविलीनस्य घटादेरालोकसम्पातेनेव, तत्परा, एवं स्थिते नित्यत्वस्य नित्यत्वव्यवहारपरत्वकल्पनमयु-क्तमित्याशङ्कापरिहाराय सूत्रं पठति—

समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च १।३।३०॥

'अपिः'=भिन्नक्रमः समुच्चयार्थकः 'समाननामरूपत्वाच्च' इत्यर्थः 'आवृत्तौ'=पूर्व्वसृष्टेः प्रलयपर्यन्ताया अनन्तरं पुनः सृष्टौ —'समाननामरूपत्वात्'=समाने नामरूपे यत्र तत्त्वात्— पूर्व्वसृष्टौ यानि नामानि यानि रूपाण्यासन् पुनः सृष्टावपि तादृशान्येवेति, इत्थञ्चावृत्तिः सृष्टेः पौनःपुन्यमनादि, अतः शब्दार्थयोः सामयिकसम्बन्धो नित्य एवेति 'अविरोधः' न नि-रपेक्षत्वभङ्गः, न वा प्रामाण्यविरोधः, तथाच यथा शब्द-पूर्व्वकदेवादिसृष्टौ नास्त्येव शब्दार्थसम्बन्धस्यानित्यत्वशङ्का, तत्सम्बन्धस्य पूर्व्वपूर्व्वसृष्टेरनुवर्त्तमानत्वात्—तथैव वसुरुद्रादी-

नामपि पूर्व्वसमाननामरूपाणां विग्रहवत्तया उत्पत्तिमत्त्वेऽपि नास्ति तद्वाचकशब्दार्थयोः सम्बन्धस्यानित्यत्वं पूर्व्वानुवृत्ते-रित्यर्थः, अत्र प्रमाणमाह 'दर्शनात् स्मृतेश्च' दर्शनं श्रुतिः, श्रुतिस्मृतिभ्यामित्यर्थः । श्रुतिस्तु—'यथा पूर्वमकल्पयत्' इति मन्त्रवर्णः, 'तेषां ये यानि कर्म्माणि प्राक्सृष्टौ प्रतिपेदिरे । तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः ॥' इति स्मृतिश्च । अधिकमन्यत्र ज्ञेयम् ।१।३।३०।

अनधिकारपक्षं सयुक्ति समन्त्रकञ्चावेदयति—

मध्वादिष्वसम्भवादनधिकारं जैमिनिः । १।३।३१॥

'जैमिनिः'= पूर्वमीमांसाकृदाचार्य्यः, 'अनधिकारं'= कर्म्म-णीव ब्रह्मविद्यायामपि देवानाम् 'अधिकाराभावम्'= मन्यत इति शेषः, तत्र हेतुः 'मध्वादिष्वसम्भवात्' इति मधुविद्यापि यथा ब्रह्मविद्या तथोपपादितमधस्तात्, तत्र च देवानामधिकार-स्यासम्भवः, उक्तं हि तत्र सकामाः पुरुषा यत्नेन परमात्मानं स्वाभीष्टाकारत्वेनोपास्य वसुभावं लब्ध्वा सूर्य्यलोकमवाप्य तन्मूर्त्तिज्योतिरवलोक्य सदा तृप्यन्तीति । तादृशब्रह्मविद्यायाः फलञ्च 'स य एतदेवममृतं वेद, वसूनामेको भूत्वा अग्नि-नैव मुखेन एतदेवामृतं दृष्ट्वा तृप्यति' इत्येवं रूपम् । अवसो-र्वसुभावार्थमुपासना युज्यते न तु वसूनाम् । तेषां तथाकामना-दीनामसम्भवात् इच्छां प्रति विषयसिद्धेः प्रतिबन्धकत्वादिति भावः । एतेन मधुविद्यायाः सगुणब्रह्मविद्यात्वेन यदधस्ताद् व्याख्यातं न तच्छिष्टपरम्परापरिगृहीतमिति कस्यचिदाक्षेपो

निरस्तः मधुविद्याया अमृतत्वोक्तेश्च । एतज्ज्ञानस्यान्तवत्फलत्वञ्च सकामत्वेनाधिकारिवैकल्यादपरिच्छिन्नब्रह्मसाक्षात्कारविरहाच्चेत्यवधेयम् ।१।३।३१।

नन्वेवमस्तु देवानां ब्रह्मविद्यायामनधिकारः, इतिहासपुराणादिषूपवर्णिते विग्रहवच्चेतनत्वे तु नास्ति व्याघात इत्यतस्तन्निरासायाह—

ज्योतिषि भावाच्च ।१।३।३२।।

यदिदं चन्द्रसूर्यात्मकं ज्योतिर्दृश्यते, तत्र भवति देवत्वेन व्यवहारः—'नभोमण्डलदीपाय शिरोरत्नाय धूर्जटेः । कलाभिर्वर्द्धमानाय नमश्चन्द्राय चारवे ॥' इति चन्द्रस्य 'ध्वान्तारिं सर्व्वपापघ्नं प्रणतोऽस्मि दिवाकरम्' इति सूर्य्यस्य च स्मृत्युक्तप्रणाममन्त्रदर्शनात् । नन्च तच्चेतनम्, अचेतनत्वेन प्रत्यक्षमेवानुभूयमानत्वात् अन्यथा पाषाणलोष्ट्रादेरपि चेतनत्वं स्यात् नापि तस्य करचरणादिमत्वं प्रत्यक्षविरोधात् । तस्मात् पुराणादिषु देवानां विग्रहवच्चेतनत्वाभिधानं न तदंशे प्रमाणं चन्द्रसूर्य्यात्मकज्योतिर्मण्डलदेवभाववचनवत् । इति भावः । चकारोऽनधिकारपक्षसमर्थकहेतोश्चरमत्वसूचकः ।१।३।३२।

एवं जैमिनीयमते स्थिते स्वसिद्धान्तमाह—

भावं तु वादरायणोऽस्ति हि ।१।३।३३।।

'तु' इति पूर्व्वपक्षव्यवच्छेदद्योतकम् । 'वादरायणः'=उत्तरमीमांसाकृदाचार्य्यः, 'भावं'=देवभावं ज्योतिषोत्यनु-

कथ्यते—मन्यते, 'हि'=यतः 'अस्ति'=सन्नेव भवति विग्रहवान् चेतनो देवः। अस्ति हीति द्विरावर्त्तनीयम्। द्वितीयपाठे 'हिः' प्रसिद्ध्यर्थे,—'अस्ति'—वर्त्तते ब्रह्मविद्यायामधिकार इति शेषः।

तथा च यथात्मनोऽधिष्ठानेन देहालम्बनो 'वेदविद् ब्राह्मणोऽयम्' इति प्रयोगः प्रणामादिव्यवहारश्च, तथा ज्योतिषि देवाधिष्ठानेन ज्योतिर्म्मण्डलालम्बनो देवशब्दप्रयोगस्तदनुगतश्च प्रणामादिव्यवहारो युज्यते। श्रुतिस्मृत्यादिषु स एवैश्वर्य्येण करचरणाद्युपेतविग्रहवत्तया प्रतिपादितोऽस्ति। 'मेधातिथिं ह काण्वायनमिन्द्रो मेषो भूत्वा जहार' इति श्रूयते (षड्विंश ब्रा० १।१) स्मर्य्यते च 'आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम ह।' चन्द्रस्य गुरुदारहरणं शरीरविशेषवत्त्वञ्च पुराणप्रसिद्धम्। अतो देवानामस्ति ब्रह्मविद्यायामधिकार इति श्रुतिप्रसिद्धमिति भगवतो बादरायणस्य मतमिति तात्पर्य्यम्। सा हि 'तद् यो देवानां प्रत्यबुध्यत स एव तदभवत्' इति (बृ० १।४।१०) 'इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणाम्' (छा० ८।७।२) इति प्रागुपदर्शिता च। तदस्तु, विद्याविशेषे देवताविशेषस्यानधिकारः, राजभिन्नस्य यथाश्वमेधे; एवं मधुविद्यायां मा भूदधिकारो वस्वादीनाम्, सामान्यतो देवानामनधिकारो ब्रह्मविद्यायामिति तु रिक्तं वचः।

विग्रहवच्चेतनदेवस्थापनमत्राधिकरणे शारीरकभाष्ये सप्रपञ्चमस्ति, विशेषबुभुत्सुभिस्तदालोचनीयमिति संक्षेपः।१।३।३३।

नन्वेवमर्थित्वसामर्थ्ययोः सत्त्वेन यथा देवानां ब्रह्मविद्यास्वधिकारः, तथा शूद्रस्यापि किं तत्राधिकारः स्यात्, अर्थित्वसामर्थ्ययोः सम्भवात् ? उत 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति ( तै० सं० ७।१।१।६ ) निषेधात् तस्य नाधिकारः ? इति संशये निर्णयायाह—

( अपशूद्राधिकरणम्—९। )

## शुगस्य तदनादरश्रवणात् तदाद्रवणात्सूच्यते हि।१।३।३४॥

न खलु 'शूद्रो यज्ञेऽनवक्लृप्तः' इति श्रुतिर्विद्यायां शूद्रस्याधिकारं प्रतिषेधति किन्तु यज्ञ एव; विद्यायां तु शूद्रस्याधिकारलिङ्गमेव श्रौतम्, तथाहि विद्यार्थिनं जानश्रुतिं पौत्रायणं शूद्रशब्देन परामृशन्ती श्रुतिः—'अह हारे त्वा शूद्र तवैव सह गोभिरस्तु' ( छा० ४।२।३ ) इति पश्चात् स हि शूद्रो जानश्रुतिरुपदिष्टो रैक्वेणेत्याह। तस्मात् शूद्रस्याप्यस्ति ब्रह्मविद्यायामधिकार इति प्राप्ते—निर्णयः। न हि तस्यां श्रुतौ शूद्रशब्दो जातिविशेषपरतया रूढः, किन्तु गुणविशेषपरतया यौगिकः, शुचा द्रवणं वा शुचि तत्र द्रवणं वा गुणस्तमादाय पृषोदरादित्वेन शूद्र इत्यस्य सिद्धेः। गर्वितस्य जानश्रुतेर्हंसवाचा, रैक्वादात्मनोऽपकर्षं मन्वानस्य गर्व्वभङ्गेन शुगभूत् तया द्रवणं रैक्वसमीपे धावनं शूद्रशब्देन सूचितं, ऋषे रैक्वस्य तत् सूचनं च स्वापरोक्ष्यज्ञापनाय श्रद्धामुत्पादयितुं विद्यार्थिनः। तस्मात् श्रौतशूद्रशब्दो

न जानश्रुतिं जात्या शूद्रमाह, तस्य तद्विद्यायामनधिकारात्, तस्योपनयनाभावेनाध्ययनविधिनियोज्यत्वाभावाद् ब्रह्मविद्याधिकारासिद्धेः। यदुक्तमर्थित्वसामर्थ्ययोः सम्भवादिति तन्न, सामर्थ्यं हि बुद्धिप्रतिभादिवत् शास्त्रबोधिताधिकारत्वमपि भवति। यथानुपनीतद्विजातिबालकस्य सत्यप्युक्तगुणसामर्थ्ये न वेदविद्यायामधिकारस्तद्वत्। अक्षरार्थस्तु 'शुक्'= शोकः मानभङ्गजनितदुःखम् 'अस्य'=जानश्रुतेः पौत्रायणस्य। 'तदनादरश्रवणात्'=सः अनादरः—हंसकृतोऽनादरः रैक्वापेक्षया जानश्रुतेरपकर्षसूचकवाक्यं तस्मात्। 'तदा'= तत्काले, 'द्रवणात्'=रैक्वसमीपे धावनात्, शुचा शोकेन शुचि शोके सत्यां वा द्रवणात् शूद्र इति सम्बोधनमिति शेषः। तदाद्रवणादिति समस्तपदं वा, तया शुचा आद्रवणात् आधावनादित्यर्थः। 'सूच्यते'=अनुमीयते, 'हि'=यतः। योजना तु, हि यतः तदनादरश्रवणात् अस्य शुक् सूच्यते, अतस्तदा द्रवणात् हेतोः शूद्र इति सम्बोधनम् अवयवशक्त्यभिप्रायेण, न तु समुदायशक्त्यभिप्रायेण जातिपरतया। इयमत्राख्यायिका— पुण्यशीलो जानश्रुतिः पौत्रायणो राजा। स्वेन पुण्यकर्मणा तस्याभिमानोऽजायत इत्यर्थादवगम्यते, यतस्तमनुग्रहीतुं द्वावृषी हंसरूपधरौ नक्तं तत्प्रासादोपरि पतन्तौ संकथयामासतुः, तत्र, 'अधःशयानस्य राज्ञः प्रसृतेन तेजसा धक्ष्यसे त्वं यदीतोऽधिकं पतेः' इत्येकेनोक्ते सावज्ञमन्योऽवादीत् 'भोः! किमसौ रैक्वः, यदस्य तेजसो बिभेमि' इति। अधस्ताच्छयानो

राजा तच्छुश्राव। तेन क्षतगर्वोऽन्विष्य रैक्वमृषिं गृहीतप्राज्योपायनः समुपससाद। रैक्वेण 'अह हारे त्वा शूद्र' इत्येवं निराकृतोऽपि भक्तिदानकृतप्रसादतस्तस्मादेव पश्चात् संवर्गविद्यामवापेति छान्दोग्यचतुर्थाध्यायेऽनुसन्धेया।१।३।३४।

ननु निषादस्थपतियाजनन्यायेन शूद्रस्याप्यस्ति संवर्गविद्यायामधिकारः स्पष्टश्रौतलिङ्गस्य तादृशविशेषग्राहकत्वात्; तत् कथमुच्यते शूद्र इति सम्बोधनं न जातिपरतयेत्याशङ्कायामाह—

## क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्।१।३।३५॥

'उत्तरत्र' = संवर्गविद्यावाक्यशेषे 'चैत्ररथेन' = चित्ररथवंश्येन अभिप्रतारिणा हेतुभूतेन, 'क्षत्रियत्वगतेः' = जानश्रुतेः क्षत्रियत्वनिर्णयरूपात् 'लिङ्गात्' = ज्ञापकात्, यद्वा लिङ्गादिति चैत्ररथान्वयि 'लिङ्गात् चैत्ररथेन' = लिङ्गज्ञाप्यचैत्ररथाभिन्नाभिप्रतारिणा इत्यर्थः, तृतीयार्थो हेतुत्वं हेतुतावच्छेदकसम्बन्धश्च समानविद्यत्वेनैकप्रकरणोपस्थापितत्वविशेषः, 'क्षत्रियत्वगतेः' = क्षत्रियत्वानुमितेः जानश्रुतेरिति शेषः, एवञ्चात्रानुमितिद्वयं क्रमिकम्—अभिप्रतारी—चित्ररथवंश्यः, असति बाधे चित्ररथयाजककापेयशौनकसम्बन्धवत्त्वात्; जानश्रुतिः क्षत्रियोऽभिप्रतारिमत्त्वात् हेतुतावच्छेदकसम्बन्धश्चोक्तः। दृष्टान्तश्च वैधर्म्येण सुलभः। ततश्च 'क्षत्रियत्वगतेः' शूद्रेति सम्बोधनं न जात्यभिप्रायेणेति शेषः। तेन, जानश्रुतिः जात्यभिप्रायेण न शूद्रपदेन सम्बोधितः, क्षत्रराजचित्ररथवंश्यत्वेनानुमिताभिप्रतारिसम्बन्धहेतुकक्षत्रिय-

त्वानुमितिमत्त्वात्; अत्रानुमितिमत्त्वञ्च विशेष्यतासम्बन्धेनेति समुदितसूत्रार्थः पर्य्यवसितः। चित्ररथः कापेयानां याज्यः, चैत्ररथिश्च क्षत्रपतिरिति निश्चयः, 'कापेयाश्चित्ररथमयाजयन्' इति ताण्ड्यमहाब्राह्मणे ( ताण्ड्यम० २०।१२।५ ) 'अथ ह शौनकञ्च कापेयमभिप्रतारिणञ्च काक्षसेनिम्' इति च छान्दोग्यसंवर्गविद्याशेषे हि श्रूयते, चित्ररथयाजकानां कापेयानामन्यतमेन शौनकेनाभिप्रतारिणः साहचर्य्यात् चित्ररथवंश्य एवाभिप्रतारीत्यवगम्यते, चैत्ररथेश्च क्षत्रियत्वं श्रुतिरभिदधाति 'चैत्ररथिर्नामैकः क्षत्रपतिरजायत' इति। इत्येवं चित्ररथवंश्यस्याभिप्रतारिणः क्षत्रियत्वेन समानविद्यायां जानश्रुतेर्नामकीर्त्तनेन च असति बाधे समभिव्याहृतानां समानत्वात् जानश्रुतेः क्षत्रियत्वमित्यनुमीयते। न चात्र शूद्रेति सम्बोधनमेव बाधकमिति शङ्क्यम्, तस्यार्थविचिकित्सायामेव लिङ्गानुसन्धाने तस्यैव बाधकतयोपन्यासानौचित्यात्, सन्दिग्धार्थकत्वात्। तथा चात्र निषादस्थपतियाजनन्यायगतिरपाकृता शूद्रेत्यस्य जातिपरत्वानिर्णयेन श्रौतलिङ्गत्वाभावादिति। एतेन जानश्रुतेः संवर्गविद्याधिकारश्रवणात्, जानश्रुतेश्च शूद्रत्वेन सम्बोधिततया शूद्रस्यापि विद्यास्वधिकार इति पक्षो निरस्तः, शूद्रशब्दस्य जातिपरत्वाभावात् जानश्रुतेश्च क्षत्रियत्वानुमानादिति पर्य्यवसितम्। व्याख्यानमिदं भगवदाचार्य्यमतानुसारेण। वयन्तु ब्रूमहे—'चैत्ररथेन'=चित्रा मिश्रवर्णा मिश्रजन्मा वा अश्वतरीति यावत् तत्सम्बन्धो चैत्रः, चैत्रश्चासौ रथश्चेति चैत्ररथः—अश्वतरी-

रथ इत्यर्थः, तेन उपलक्षणे तृतीया, तदुपलक्षितं यल्लिङ्गं क्षत्तृप्रेषणाद्यैश्वर्य्ययोगरूपहेतुस्तस्मात्। अथवा चैत्रः चित्राभिरश्वतरीभिः संयुक्तः रथो यस्य स इनः स्वामी अधिपतिस्तस्य लिङ्गम्= क्षत्तृप्रेषणादेशाधिपतित्वादिकम्, तस्मात् क्षत्रियत्वगतेः= क्षत्रियत्वज्ञानात्। श्रूयते हि 'रैक्वेमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथो नु म एतां भगवो देवतां शाधि' इति अश्वतरीरथान्तस्योपायनस्य दानेन क्षत्तृप्रेषणादिना लिङ्गेन च क्षत्रियत्वगतेः= राजत्वज्ञानात्, यद्वापक्षे तु तस्य तथाविधरथग्रामप्रभृतिदानेन तादृशरथस्वामिनो यल्लिङ्गम् ऐश्वर्य्यं तस्मादिति। तत्र श्रुतिः—'स ह संजिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव रैक्वमात्थेति यो नु कथं सयुग्वा रैक्वः' इति 'इदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायायं ग्रामो यस्मिन्नास्से' इति 'ते हैते रैक्वपर्णा नाम महावृषेषु' इति च। तस्माच्छूद्रसम्बोधनं न जात्यभिप्रायेण किन्तु गुणविशेषाभिप्रायेण। क्षत्रियेऽपि जानश्रुतौ तेन योगेन शूद्रेति द्विःसम्बोधनं तस्य शमदमपरीक्षार्थमिति तत्त्वम्।१।३।३५।

विवादास्पदस्य जानश्रुतेर्विद्याधिकारमशूद्रत्वेनोपवर्ण्य सामान्यतः शूद्रस्य विद्यानधिकारं प्रमाणयति—

## संस्कारपरामर्शात्तदभिलापाच्च।१।३।३६॥

'संस्कारपरामर्शात्' विद्याग्रहणमुपनयनसंस्कारपूर्वकमिति श्रुत्या परामृश्यते 'तं होपनिन्ये' (श० ब्रा० ११।५।३।१३),

'स होवाच गार्ग्य उप त्वा यानि' ( बृह० २।१।१४ ), 'समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः' ( प्र० १।१ ), 'उप त्वा नेष्ये' ( छा० ४।४।५ ), 'तदभावाभिलापाच्च' = यत्र च कचित् तदभावस्तत्र तस्याभिलापः—श्रुतिवाक्यं—'स होवाचाजातशत्रुः प्रतिलोमं चैतद् यद् ब्राह्मणः क्षत्रियमुपेयाद् ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञापयिष्यामि' (बृ० २।१।१५) तस्मात्। तेनैतदवगम्यते द्विविधं खलु उपनयनं वेदग्रहणार्थम्, विद्याविशेषग्रहणार्थञ्च,—प्रथममुपनयनं विना कस्याञ्चिदपि विद्यायां नाधिकारो भवति, प्रथमोपनयनसंस्कृतस्य विद्याग्रहणार्थमुपनयनन्तु गुरुणा कर्त्तुमकर्त्तुञ्च शक्यते। प्रथमोपनयनादेव यस्य विशिष्टाधिकारस्तस्य विद्याग्रहणार्थमुपनयनान्तरं नावश्यकमिति श्रुत्या प्रत्याख्यते। शूद्रस्य तु प्रथमोपनयनाभावात् न क्वचिदपि विद्यायामधिकारः ।१।३।३६।

शूद्रस्योपनयनाभावाधिकारं दर्शयति,—

## तदभावनिर्द्धारणे च प्रवृत्तेः ।१।३।३७।।

'तदभावनिर्द्धारणे' = तस्य = शूद्रत्वस्य, 'अभावनिर्द्धारणे' = अभावावधारणे, चोऽवधारणे—शूद्रत्वाभावनिर्द्धारण एव 'प्रवृत्तेः' = उपनयनप्रयत्नात्; सत्यवचनेन शूद्रत्वाभावनिर्द्धारण एव गौतमस्य जाबालोपनयनप्रवृत्तिश्रुतेरित्यर्थः। सा हि श्रुतिः, 'नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर, उप त्वा नेष्ये' इति (छां० ४।४।५) ।१।३।३७।

ननु सा हि श्रुतिः, अब्राह्मण्याभावनिर्द्धारणं बोधयति, तथाच क्षत्रियादेरप्युपनयनाभावप्रसङ्गः, तेषामब्राह्मण्याभावादित्याशङ्क्याह—

श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ।१।३।३८॥

'श्रवणाध्ययनार्थः'=श्रवणाध्ययननिवर्त्तकः, श्रवणाध्ययनयोरर्थो निवृत्तिर्यस्मात् , 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इति कोषात्, तथाविधो यः प्रतिषेधः, प्रतिषिध्यतेऽनेनेति प्रतिषेधः, निषेधश्रुतिरित्यर्थः । स च प्रतिषेधः 'सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति' इत्यादिनृसिंहतापनीयः । एतया श्रुत्या शूद्रस्य प्रणवादिश्रवणाध्ययननिवृत्तिः; 'स्त्रीशूद्रयोर्नेच्छन्ति' इत्यनेन सामान्यतः प्रतिषेधात् । अतएवार्थपदस्यानर्थक्यापत्तिरपास्ता । श्रवणत्वेनाध्ययनत्वेन च विशेषप्रतिषेधस्य तत्राभावात्; सामन्यतो निषेधेनैवोपपत्तौ विशेषनिषेधस्याप्रसक्तेः । शूद्राणामुपनयनवेदश्रवणतदध्ययनादिष्वनधिकारप्रदर्शनायाह 'स्मृतेश्च' । यथाह मनुः—'ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः । चतुर्थ एकजातिश्च शूद्रः ।' शङ्खश्च 'ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः । तेषां जन्म द्वितीयन्तु विज्ञेयं मौञ्जिबन्धनम् ।' व्यासश्च—'ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः । श्रुतिस्मृतिपुराणोक्तधर्म्मयोग्यास्तु नेतरे ॥ शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्म्ममर्हति । वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥' विष्णुश्च वर्णचतुष्टयानुवृत्तौ—'तेषां धर्म्माः' इत्युपक्रम्य 'द्विजानां यजनाध्ययने ।'

एभिर्व्वचनैः शूद्राणामुपनयनसंस्कारो वेदाध्ययनञ्च नास्तीति गम्यते। अवणप्रतिषेधो यथा शारीरकभाष्यधृतस्मृतौ 'अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्र-प्रतिपूरणम्।' अस्येति शूद्रस्य इत्यर्थः 'पद्युह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्ये-तव्यम्' इति स्मृत्यन्तरेण शूद्रसमीपेऽध्ययनप्रतिषेधः, शूद्रेण श्रवणस्य शूद्रसमीपे द्विजातिकर्त्तृकाध्ययनस्य च निषेधा-त्तस्याप्यध्ययनप्रतिषेधः यस्य समीपेऽपि नाध्ययनं स कथमश्रु-तमधीयीतेति। तस्माच्छूद्रस्य स्वाध्यायविधेरनियोज्यतयोपन-यनाभावात्, वेदश्रवणाध्ययनप्रतिषेधाच्च नास्ति वेदश्रवण-पूर्व्विकासु विद्यास्वधिकारः। अस्ति तु आगमशास्त्रोपदिष्टायां विद्यायाम्, येन तेषामपि जगन्मातुः कृपया भोगस्वर्गापवर्गा यथाधिकारं भवन्ति। श्रीचक्राराधनविवरणावसरे—'यज्वानो येऽप्ययज्वनः' इति श्रुतिरप्यत्रार्थे प्रमाणमुपदर्शितम्। शूद्र-पक्षे आराधनप्रपञ्चस्तु आकरादवगन्तव्यः। तस्मिन् जन्मनि वेदश्रवणं विनापि शूद्राणां विदुरादीनां ज्ञानोत्पत्तिरासीत्, सति च ज्ञाने ज्ञानफलेनावश्यमेव भाव्यमिति च स्मर्त्तव्यम्।१।३।३८।

अपशूद्राधिकरणादुपस्थितसंवर्गविद्याब्राह्मणीयं यद् वायोः प्राणस्य च संवर्गत्वं तदाश्रित्य कम्पनाधिकरणमारचयति—

( कम्पनाधिकरणम्—१०। )

कम्पनात्। १।३।३९॥

श्रूयते हि 'म एतां भगवो देवतां शाधि यां देवतामुपास्से' इति जानश्रुतिप्रार्थनादिप्रवाहे रैक्वप्रतिवचनं 'वायुर्वाव संवर्गो

यदा वा अग्निरुद्वायति वायुमेवाप्येति' इत्याद्यधिदेवनिर्देशानन्तरं 'अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति' इत्यादि। अत्र वाक्ये संशय्यते, संवर्गोयं वायुः प्राणश्चेति वा ब्रह्म वेति। वायुः प्राणश्चेति प्राप्तम् अधिदैवतमध्यात्ममिति द्वौ संवर्गाविति च निर्देशात्, वायुप्राणयोस्तादृशसंवर्गत्वव्यापकचलनवत्त्वाद् ब्रह्मणस्तदभाववत्त्वाच्च, 'अज आत्मा महान् ध्रुवः' इति श्रुतेः। अत्रोत्तरम्—एकैव देवता संवर्गो नाम या वायुप्राणयोरनुगतेत्याशयेनाश्रयभेदप्रदर्शनायाधिदैवादिभेदस्य द्वौ संवर्गाविति च निर्देशः। अन्यथा तयोर्द्वयोरेव संवर्गत्वेनोपास्यविषयत्वोपदेशे जडोपासनया रैक्वस्यापकर्षः प्रतीयेत, अधिदैवतमित्युक्तिश्च व्याहन्येत, अधिभूतमित्युक्तेरेव युक्तत्वात्। अथ वायुर्वात्वभिमानिनी देवतेति चेत्, अग्निरुद्वायतीत्यादिकं नोपपद्येत, अग्न्युद्वयनादेर्जडवायावेवानुभूयमानत्वात्। यतो यस्योद्भवस्तत्रैव तस्याप्ययनस्य युक्तत्वात्, 'वायोरग्निः' इति श्रुत्या भूतात्मकवायोर्भूतात्मकाग्नेरुत्पत्त्यभिधानात्। तस्माद् या देवता वायौ प्राणे चानुगता, घट इव मृदो वायुप्राणौ यतो नातिरिच्येते सा परा देवता ब्रह्मैव संवर्गपदार्थः। न च तत्संवर्गव्यापकचलनाभाववत्त्वं ब्रह्मणः 'तदेजति' इति कम्पनश्रुतेः, चिदचिदात्मकं हि ब्रह्म, तत्र कम्पनमचिदवच्छेदेन, ध्रुवत्वं नामाकम्पनं, चिदवच्छेदेनेति, अतएव श्रूयते 'तदेजति तन्नैजति' इति। वायुं प्राणं वाश्रित्य ब्रह्मैवोपास्यमिति संवर्गविद्याप्रकरणार्थः। संवर्गविद्यान्तिमखण्डे—तद्विद्या-

प्रशस्त्याख्यायिकायां च ब्रह्मचारिशौनकयोर्वचनप्रतिवचनलक्षण-मन्त्राभ्यामयमर्थः प्रतिपाद्यते, तथाहि 'महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपाः। तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन् बहुधा वसन्तम् ॥' हे कापेय शौनक ! हे अभिप्रतारिन् चैत्ररथ ! भुवनस्य गोपाः, भुवनस्य रक्षकः, 'स एव काले भुवनस्य गोप्ता' इति श्रुतेः, 'एकः कः' एकः प्रजापतिः प्राण इत्यर्थः, 'चतुरो महात्मनः वाक्चक्षुःश्रोत्रमनांसि' जगार जग्रसे, 'बहुधा वसन्तं तं मर्त्याः' मृत्युधर्म्माणोऽमृतत्वलाभोपायमलभमाना नाभिपश्यन्ति इत्येवमर्थेन प्राणत्वे प्राप्तेऽप्यत्र तद्द्वारा ब्रह्मैव बुबोधयिषितम्। मर्त्यानामनभिदर्शनकर्त्तृत्वात्, न हि प्राणपर्य्यन्तदर्शिनो मर्त्यत्वं निवर्त्तते, तस्याप्यनात्मत्वात् किन्तु आत्मदर्शिनः, तथाच कारणपर्य्यन्तदर्शनं संवर्गविद्यया साध्यत इत्यभ्युपेयम्। 'भुवनस्य गोपाः' इति विशेषणमपि ब्रह्मानुगमेन, अन्यथा भुवनमध्ये प्राणस्यापि प्रवेशात् स्वगोप्तृत्वस्य पराधीनेऽसम्भवेन, सत्यपि गत्यन्तरे तत्र लक्षणास्वीकारस्यायुक्तत्वात्। गूढाशयस्तु—एकः प्रजापतिरत्रानन्दमयः—चतुरो महात्मन इत्यन्नप्राणमनोविज्ञानमयात्मनो जगार; कथम्? तत्र लयात्। क इति ब्रह्मवाचकम् 'कस्मै देवाय हविषा विधेम।' (श्वेता० ४।१३) इतिमन्त्रात्, 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यनेन पूर्व्वोक्तात्मचतुष्टयस्यानन्दमये लयप्रतिपादनात् जगार इति। 'येन जातानि जीवन्ति' इत्यतो रक्षणकथनात्, 'भुवनस्य गोपाः' इति। अनन्त-

रश्च कापेयः शौनको ब्रह्मचारिवचनगूढार्थवेदनमात्मनो निवेदय-श्राह—'आत्मा देवानां जनिता प्रजानां हिरण्यदंष्ट्रोबभसोऽन-सूरिः। महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्ति।' इति। आत्मेति ब्रह्मवाचकमेव पदम् हिरण्यदंष्ट्रः 'आप्रणखात् सर्व एव सुवर्णः' इति श्रुतेः, तच्च विशेषणं ब्रह्मणश्चिदचिदा-त्मकत्वसूचकम्, 'देवानां प्रजानां जनिता = जनयिता–'एतस्मा-ज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति श्रुतेः। 'बभसः' = अदनशील:, 'यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनः' इति मन्त्रात् 'अनसूरिः' असूरिरविपश्चित्, स न भवति इत्यनसूरि-र्विपश्चिदित्यर्थः। विपश्चित् = मेधावी—सर्वज्ञः 'सह ब्रह्मणा विपश्चिता' इति तैत्तिरीयमन्त्रवर्णात् ( तै० २।१ ) अस्य आत्मनो महान्तं महिमानमाहुः ऋषय इति शेषः 'तावानस्य महिमा' इति मन्त्रवर्णात्, अनद्यमानः = न केनचिद्ग्रस्यमानः सर्वलयस्थानत्वात् 'विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि संप्रविशन्ति यत्र तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः' इति मन्त्रवर्णात् (प्रश्न० ४।११) यत् 'अनन्नं' अन्यस्य नान्नं प्राणस्वरूपं तद् योऽस्ति प्राणस्यान्नमिदं सर्वं प्राणस्तु अन्यस्य नान्नमृते अक्षय्यसंज्ञकात् आत्मनः। 'ते वयं ब्रह्म-चारिन्नेदमुपास्महे' इति वाक्यान्तम्, हे ब्रह्मचारिन् एदम् इतः आ—इदमवधिकं वयमुपास्महे। वायुं प्राणं वालम्ब्य परमात्मानमुपास्महे इति तदर्थः। तस्मादियमपि ब्रह्म-विद्या।१।३।३९।

ननु प्राणशब्दः कथं ब्रह्मपरः? अध्यात्ममिति प्रक्रान्तस्य प्राणरूपस्य शारीरवायोर्ब्रह्मत्वानुपपत्तेः सूत्रान्तरमाह—

( ज्योतिरधिकरणम्—११ । )

ज्योतिर्दर्शनात् ।१।३।४०॥

'ज्योतिषि' = ज्योतिःप्रकाशकमन्त्रघटिते मुण्डकोपनिषद्द्वितीयमुण्डके तस्यैव प्राणस्य ब्रह्मरूपतया 'दर्शनात्'। तथाहि 'यदर्चिमद् यदणुभ्योऽणु च यस्मिन् लोका निहिता लोकिनश्च। तदेतदक्षरं सोम्य स प्राणस्तदु वाङ्मनः' इति। 'अर्चिमद्' इति ज्योतिरर्थकम्। 'स प्राणः' इत्यत्र प्राणशब्दो न प्राणस्य प्राणमित्यादि द्वितीयप्राणशब्दवद्ब्रह्मपरः किन्तु शारीरवायुपरः, 'वाङ्मनः' इत्यनयोः समभिव्याहारात्। तथोपसंहारेऽपि 'हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्।' 'तच्छुभ्रं ज्योतिषां ज्योतिः' इत्यादिकं श्रूयते। यद्यप्यन्यत्रापि प्राणो ब्रह्मत्वं दृश्यते, तथापि एजधातुघटितश्रुत्यनुगतेन कम्पनादिसूत्रेण एजत् प्राणन्निमिषच्चेत्येजधातुघटितप्रथममन्त्रकमुण्डकोपनिषद्द्वितीयमुण्डकद्वितीयखण्डोपस्थितया तस्यैवात्र ग्रहणम्। तथा विशेषावबोधनाय ज्योतिरिति सार्थकमित्यवगन्तव्यम्। यथा ज्योतिषि सूर्य्यादौ ब्रह्मदृष्ट्योपासनं श्रुतौ दृश्यते, तथा वायुप्राणयोरपीति ज्योतिर्दर्शनादिति सूत्रस्यार्थान्तरम् ।१।३।४०।

एतत्प्रसंगेन मुण्डकोपनिषद्द्वितीयमुण्डकमन्त्रान्तरपरिष्करणाय अर्थान्तरत्वादिव्यपदेशाधिकरणमाह—

( अर्थान्तरत्वादिव्यपदेशाधिकरणम्—१२ । )

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ।१।३।४१॥

'दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः' इति मुण्डकमन्त्रवर्णः, अत्र व्योमशब्दार्थे आकाशः,—भूताकाशः शरीरं ब्रह्म वेति संशयः। यतो व्योमशब्दो भूताकाशे प्रसिद्धः, ब्रह्मपुरशब्दः शरीरपरतया 'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकम्' इति श्रुतिप्रसिद्धः, 'सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता' इति श्रुतौ व्योमशब्दस्तत्समानार्थकाकाशखशब्दौ च ब्रह्मपरौ दृश्येते। अत्र पूर्व्वपक्षः, भूताकाशोऽत्र ग्राह्यः 'व्योम्न्यात्मा प्रतिष्ठितः' इत्युदाहृतश्रुतेः 'य आकाशे तिष्ठन् आकाशादन्तरो यमाकाशो न वेद, यस्याकाशः शरीरं य आकाशमन्तरो यमयत्येष त आत्मा' इति श्रुत्यन्तरसमानार्थत्वात्। तथैव श्रुत्या ब्रह्मपुरत्वमाकाशस्यापि गम्यते। दिव्यत्वं द्युस्थानवर्त्तित्वात्। अथवा शरीरमेव ब्रह्मपुरं ब्रह्मण आत्मनोऽभिव्यक्तिविशेषाश्रयत्वात्, व्योम हि पञ्चभूतेषु प्रथमं-पाञ्चभौतिकं हि शरीरं तस्य प्रथमेन तेन व्यपदेशो नासङ्गतः, दिव्य इति ब्रह्मपुरस्य विशेषणम्, तस्य दिव्यत्वञ्च प्रकर्षात्, अतः सुकृतमिति पुरुषशरीरं श्रुत्या प्रशस्यते। तत्र जीवात्मनः प्रतिष्ठा वेदलोकप्रसिद्धा। एवं प्राप्ते तावदुत्तरम्—अत्र व्योमशब्दार्थे आकाशो ब्रह्म, 'अर्थान्तरत्वादिव्यपदेशात्'= भूताकाशरूपः शरीररूपो वा योऽर्थः तद्भिन्नार्थकत्वादिना व्यप-

देशात्—शब्दप्रयोगात्। आदिपदात् ब्रह्मस्वरूपत्वपरिग्रहः। दिव्य इति विशेषणपदप्रयोगरूपो यो व्यपदेशः स एव व्योमपदार्थे भूताकाशभेदं गमयति अन्यथा तस्य वैयर्थ्यं स्यात्। तद्धि विशेषणं 'सैषा भार्गवी विद्या परमे व्योमन् प्रतिष्ठिता' इति 'ऋचोऽक्षरे परमे व्योमन्' इति च (श्वेता० ४।८) श्रुत्यन्तरगतेन परमे इत्यनेन समार्थकम्, तच्च व्योम्नो ब्रह्मत्वमवबोधयति, ब्रह्मपुर इति विशेषणमपि अन्यथा 'व्योम्नि प्रतिष्ठितः' इत्यनेनैव तत्प्राप्तेः ब्रह्मपुरमित्यस्य वैयर्थ्यमापद्येत। ननु माभूद् भूताकाशः ब्रह्मपुरमितिपदस्वरसेन शरीरमेव तत्रोपादेयमिति चेन्न—व्योम्नीत्यस्य वैयर्थ्यात्। तस्मात्तत्र व्योमपदार्थ आकाशो ब्रह्म, तस्य ब्रह्मपुरत्वञ्च ब्रह्मत्वात् सर्वाधिष्ठानत्वाच्च ब्रह्मैव पुरमिति समासात्। ब्रह्मपुरशब्दस्य शरीरेऽपि योगात् तत्परत्वभ्रमवारणाय दिव्ये व्योम्नीत्युपादानान्न तद् वैयर्थ्यमाशङ्कनीयम्। न च ब्रह्मपुर इत्यस्य वैयर्थ्यं व्योमशब्दस्य प्रसिद्धभूताकाशपरत्वाभावावबोधनेन तत्सार्थक्यात्। एवञ्च आत्मा जीवः ब्रह्मणि प्रतिष्ठित इति 'दिव्ये ब्रह्मपुरे ह्येषः' इत्यादिमन्त्रेण प्रतिपाद्यत इति इदञ्च प्रतिष्ठितत्वं शाखायाः वृक्षप्रतिष्ठितत्ववद् विलक्षणमिति संक्षेपः।१।३।४१।

ननु ब्रह्मणि प्रतिष्ठितो जीव इति मुण्डकोपनिषन्मन्त्रवर्णादवगम्यते, बृहदारण्यके तु श्रूयते 'कतम आत्मा' इति प्रश्ने 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव' इति। अत्र च जीवस्य प्राणाधि-

करणकत्वं हृदयाधिकरणकत्वञ्च ज्ञायते, देवदत्तस्य ग्रामाधिकरणकत्व-गृहाधिकरणकत्ववत् प्राणान्हृदयञ्चापहाय जीवस्य स्वरूपमेव न सम्भवतीति तत्तदधिकरणकत्वमेव तत्तत्प्रतिष्ठितत्वम् अथ भवत्वेवं ग्रामगृहप्रतिष्ठितस्य जनपदप्रतिष्ठितत्ववत् ब्रह्मप्रतिष्ठितत्वमपि युज्यतामिति चेन्न प्राणेषु हृदि चेति द्वयोर्निर्देशेन तदितरव्यावृत्तेरवगमात्। अन्यथा एकमेवोपादीयेताधिकरणम् प्राणा वा हृदयं वेति। एवं विरोधे स्वमहिमप्रतिष्ठितं ब्रह्मेति श्रौतसिद्धान्तेन जीवस्य वस्तुतो ब्रह्मरूपतामभिप्रेत्य ब्रह्मणि प्रतिष्ठितो जीव इति मुण्डकश्रुतिः, जीवस्वरूपमभिप्रेत्य च बृहदारण्यकश्रुतिरित्यस्मिन्केनचिदुक्ते सिद्धान्तमाह—

( सुषुप्त्युत्क्रान्त्यधिकरणम्—१३। )

## सुषुप्त्युत्क्रान्त्योर्भेदेन ।१।३।४२।।

'कोऽयं विज्ञानमय' इत्यादिबृहदारण्यकश्रुतेर्जीवप्रतिपादकत्वे, प्राणहृदयप्रतिष्ठितत्वे तस्यास्तात्पर्यमभ्युपगन्तव्यम्। अतः सा श्रुतिः, जीवप्रतिपादनपरा ब्रह्मप्रतिपादनपरा वेति संशये—उपक्रमोपसंहारादिभिर्जीवप्रतिपादनपरेति पूर्वपक्षः,—अत्रोत्तरम्—'सुषुप्त्युत्क्रान्त्योर्भेदेन' व्यपदेशादिति पूर्वसूत्रादनुकृष्यते। सुषुप्तिश्रुतौ उत्क्रान्तिश्रुतौ च 'प्राज्ञेनात्मना' इति सत्त्वात् भेदेन 'प्राणेषु' 'हृदि' इत्यत्र सप्तम्या अर्थभेदेन विलक्षणप्रतिष्ठितत्वव्यतिरिक्तार्थपरतया व्यपदेशात्

श्रुतावुपदेशात् । जीवस्य ब्रह्माधीनत्वप्रतिपादनेन तत्प्रतिष्ठितत्वस्यैव प्रतिपादनात् । यद्धि यत्प्रतिष्ठितं तस्य तदधीनत्वमेवोचितमिति भाव: । तथाच प्राणेषु हृदि इति च सप्तम्यौ पाषाणे वृक्ष इतिवत् कथञ्चिदाधारार्थं बोधयत: । उपक्रमोपसंहारादिषु जीवस्वरूपकथनमपि तस्य ब्रह्मप्रतिष्ठितत्वबोधनाय । 'अत ऊर्द्ध्वं विमोक्षायैव ब्रूहि' इति जनकप्रार्थनम् 'असङ्गो ह्ययं पुरुष' इति याज्ञवल्क्यप्रतिवचनं ब्रह्मप्रतिपादने प्रदर्शितश्रुतितात्पर्य्यमसंशयं गमयति बृहदारण्यकश्रुतेर्मुण्डकश्रुतिसमानार्थकत्वेऽपि ब्रह्मप्रतिष्ठितत्वस्य प्राणाधिकरणकत्वादिरूपतत्तत्प्रतिष्ठितत्वादन्यत्वेन सावधारणनिर्देशाभ्युपगमेऽपि क्षत्यभावादित्याशय: ।१।३।४२।

ननु जीवस्य ज्ञानमपि मोक्षहेतु:, तस्य च चिदचिदात्मकब्रह्मण इव चिदवच्छेदेनासङ्गत्वमुपपद्यत एवेति कथं तच्छ्रुतेर्ब्रह्मपरत्वमुच्यते इत्याशङ्क्याह—

पत्यादिशब्देभ्य: ।१।३।४३।।

प्रदर्शितबृहदारण्यकश्रुतिवाक्ये पत्यादय: शब्दा ब्रह्मप्रतिपादनपरा: सन्ति, न च ते जीवे युज्यन्ते 'सर्व्वस्य वशी सर्व्वस्येशान: सर्व्वस्याधिपति:......एष सर्व्वेश्वर एष भूताधिपति: एष सेतुर्विधरण' इत्येवंजातीयका: शब्दा बोद्धव्या: । भगवदाचार्य्यचरणानुमतमप्येतदिति । १।३।४३।

इति प्रथमे निरूपणाध्याये रहस्यमन्त्रनिरूपणं नाम तृतीय: पाद: ।

———

## प्रथमेऽध्याये चतुर्थः पादः ।

पादत्रयसमर्थनार्थोऽयं चतुर्थः पाद आरभ्यते, प्रथमपादमारभ्य सांख्यमतसिद्धाचिन्मात्रोपादानकत्ववादे दोषं प्रदर्श्य पत्यादिशब्देभ्य इत्यन्तनं तृतीयपादं यावत् नित्यसम्बद्धचिदचिदात्मकब्रह्मणो जगदुपादानत्वं श्रुतिप्रमाणकं प्रतिपादितं तत्र चिदचिदुभयपर्याप्तसत्तामनभ्युपगच्छन्तोऽचिन्मात्रोपादनकत्ववादिनः सांख्याः प्रत्यवतिष्ठन्ते,—यदुक्तं छान्दोग्यश्रुतौ 'सदेव सोम्येदमग्र आसीत्' इत्यत्र यत् प्रक्रान्तं सत् तन्निष्ठस्य मोक्ष उपदिष्टः, अचेतनप्रकृतिनिष्ठस्य न मोक्षः सम्भवति, तस्माज्जगदुपादानभूतं सत् नाचिन्मात्रमिति प्राप्तम्, तन्न, श्रुतावेव तन्निष्ठस्य मोक्षोपदेशात् 'अशब्दमस्पर्शम्' इत्युपक्रम्य 'अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते,' इति काठकश्रुत्या महतः परस्य नित्यस्याव्यक्तस्य निचायनेन मोक्षोपदेशात्। निचायनं दर्शनं चैकोऽर्थः, ननु महतः परस्य नित्यस्य दर्शनेन मोक्ष उपदिष्टः स चात्मा, नत्वव्यक्तमिति चेन्न, तत्रैव महतः परमव्यक्तमित्याम्नानात्। इति शङ्कागर्भतत्समाधानसूत्रमधिकरणविशेषादिभूतं पठति—

( आनुमानिकाधिकरणम्—१ । )

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ।१।४।१॥**

'आनुमानिकम्'=अनुमानं स्मृतिस्तत्प्राप्तम् आनुमानिकम्, अचिन्मात्रोपादानकत्वं 'एकेषाम्' = कठशाखिनाम्, 'अपि'=च आनुमानिकत्वमात्रव्यवच्छेदाय मतमिति शेषः। ननु महतः परस्याव्यक्तस्य निचायनं मोक्षहेतुरित्यस्य प्राप्तावपि तस्मिन्नचिन्मात्रे जगदुपादानत्वस्य काठकश्रुतिसम्मतत्वाभावादनुपपन्नमिदमिति चेन्न, अव्यक्तात् परः पुरुषो 'व्यापकोऽलिङ्ग एव' इति तत्रैव श्रवणात् पुरुषस्य 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुत्युक्तसृष्टौ सत्पदार्थत्वेन ग्रहणे, यदि तस्योपादानत्वं कार्य्यजातमेव तल्लिङ्गं स्यादित्यलिङ्ग इति नोपपद्येत। तस्मात्तत्राचितः प्रकृतेरेव सत्पदार्थत्वेन ग्रहणम्। न चास्मिन् पक्षे तदुत्तरम् 'आत्मना' इत्यनुपपन्नम्, न हि जडस्यात्मत्वं सम्भवति; आत्मशब्दस्य स्वरूपवाचित्वे तु 'जीवेन' इत्यस्यान्वयानुपपत्तिर्वैयर्थ्यञ्च 'अनेन' इत्यस्येति दोषो दर्शित एवेति वाच्यम्, 'अनेन' इति जीवविशेषणस्याचितो भेदप्रदर्शनार्थतया जीवेनेति तृतीयायाः सहार्थतया स्वयमित्यर्थकस्य आत्मनेत्यस्याचित्यपि प्रयोगेण प्रोक्तदोषस्योद्धारात्। नचैवं प्रक्रान्तं सदेव 'तत्त्वमसि' इत्यत्र तत्पदार्थः, तस्य त्वंपदार्थस्य चैकत्वज्ञानं मोह इत्युक्तं प्राक्, कथं तथोपदेशो मोक्षाय कल्पेत इति चेन्न यतस्तावत् 'ऐतदात्म्यमिदं सर्व्वम्' इत्यन्तं प्रक्रान्तस्य सत्पदार्थस्य विवरणं 'इदं सर्व्वम्'= स्थूलकार्य्यजातम्, 'ऐतदात्म्यम्'=सत्पदार्थात् अव्यक्ताख्यादचिन्मात्रादनन्यत् अत्रात्मशब्दस्य स्वरूपवाचित्वात्।

'तत्सत्यम्' इत्यारभ्य चिन्मात्रे एतत् पदं परित्यज्य तत्पदग्रहणेन लिङ्गेन विवरणमत्र तत्पदञ्च न प्रक्रान्तपरामर्शकं किन्तु ब्रह्मवाचकं 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति स्मृतेः, स च पुरुषः तस्य सत्यत्वमपरिणामिसत्तयास्माभिरप्यभ्युपगम्यते स एवात्मा तस्यैव त्वंपदार्थेन सहाभेदो दर्शितः, न तु प्रक्रान्तसत्पदार्थेनाचिन्मात्रेणेति, अत्र त्वमित्यनेन बुद्ध्युपहितः पुरुषो लभ्यते, न चैवं छान्दोग्यश्रुत्या तत्सिद्धौ एकेषामित्युक्तिरयुक्ता, इति शङ्क्यं महतः परस्य अनाद्यनन्तत्वं तस्य चाव्यक्तत्वमाचक्षाणायाः कठश्रुतेरेव 'सदेव सोम्येदमग्र आसीत्' इत्यत्र सत्पदार्थत्वस्याचित्यपि योग्यतासम्पादकत्वात्, अन्यथा चितः सत्पदार्थतायां शतशः श्रुतिसत्त्वात् अन्यत्र तद्बाधेनाचितस्तथात्वस्य प्रसक्तिरेव न स्यात् 'अतोऽन्यदार्त्तम्' इति श्रुतेः। तस्मात् काठकश्रुतिः सांख्यसिद्धान्ते मुख्यं प्रमाणमिति प्रत्यवस्थानप्रकारः। एतन्निरस्यति 'इति चेत्' उच्यते 'न' तन्न युक्तम्, 'शरीररूपकविन्यस्तगृहीतेः'='शरीररूपके' 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु' इति शरीरे यद्रथरूपकं तत्र, 'विन्यस्तः' विशिष्टरूपतया योजितः—विज्ञानसारथिरिति लिङ्गरूपो यो विशेषस्तत्सम्बन्धेन सम्मेलितः, 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्यत्रोक्तोऽध्वा, तस्य गृहीतेः='महतः परमव्यक्तम्' इत्यत्र अव्यक्तपदेन ग्रहणात्, लिङ्गमव्यक्तं सांख्यस्मृतिसम्मतमूलप्रकृतिसंज्ञकं प्रधानम्, स चाध्वा संसारवर्त्म,

शरीरे रथत्वारोपे संसारस्यैव तदध्वत्वेनारोपस्य युक्तत्वात्; रथ-रूपके तदध्वनोऽपि रूपणीयत्वात्; श्रूयते हि 'अथ रथान् रथ-योगान् पथः सृजते' इति ( बृ० ४।३ )। न च 'इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्' इत्यनेन विषयाणामेव हयमार्ग-तया रूपणात् पुनरुक्तमिदमिति वाच्यं गोचरपदस्य भोग्यार्थ-कत्वेन तृणचणकादिरूपतयैव रूपणस्य युक्तत्वात्। यद्वा गोचरपदं हयपादक्षेपस्थानपरं तच्चाध्वैकदेशः। न हि रथमार्गो हयमार्गत्वेन भण्यते। विषयाणां संसारैकदेशतया तत्र मार्गैक-देशत्वारोपस्य संसारे चाव्यक्तपदार्थेऽध्वत्वारोपस्यैवौचित्यात्। नन्वेवं कथं तस्याध्वनो महतः परत्वमिति चेत्, इन्द्रियेभ्यः परा ह्यर्था इत्यत्र यद् यदपेक्षप्रवृत्तिकं तस्मात् तस्यापि परत्व-मिति दर्शनात् बुद्धिरूपमहतः परः संसार इत्युक्तेरसङ्गतत्वाभा-वात्। ननु 'बुद्धेरात्मा महान् परः' इति कथनात् बुद्धेरन्य एवायमिति चेत्, प्रथमोक्ता बुद्धिरहङ्काराख्या कार्य्यरूपा, इयं च कारणभूता इति भेदात् व्यष्टिसमष्टिभेदेन भेदाद्वा, तदापत्तेरुद्धारात् यद्वा महान् आत्मेति स्थूलशरीरपरम् 'आत्मे-न्द्रियमनोयुक्तम्' इति रूपकमन्त्रमध्ये आत्मशब्देन शरीर-स्यापि ग्रहणात्। जीवानां बुद्धिः स्थूलशरीरमाश्रित्यैव तिष्ठति स्थूलशरीरे बुद्धेः परत्वं युज्यते। तस्य च संसारा-धीनतया संसारस्य तदपेक्षया परत्वे विवादाभावात्। संसारस्याव्यक्तस्वरूपस्वकारणादृष्टाधीनत्वात्, दुरन्तेयस्थूल-सूक्ष्मविविधयोनिगतागतिरूपत्वाच्चाव्यक्तत्वं सिद्धमेव। नन्व-

व्यक्तपदेन सूक्ष्मशरीरमेव कथं न गृह्यते इति चेत् दशेन्द्रियमनोबुद्धिघटितस्य तस्य महतोऽपरस्य परत्वोक्तेरयुक्तत्वात्। ननु न तद्दर्शनं मोक्षहेतुरतः प्रदर्शिता श्रुतिः 'निचाय्य तं मृत्युमुखात् प्रमुच्यते' इत्येवंरूपा नोपपद्यत इत्याशङ्कानिरासाय 'दर्शयति च' = तस्मिन् मन्त्रे 'अनाद्यनन्तं महतः परं ध्रुवम्' इत्यत्र ध्रुवमिति पदं पृथगेव तत्स्वरूपं बोधयति न तु सांख्यकल्पितमव्यक्तं न वा संसाररूपमव्यक्तम्; किन्तर्हि तद्विष्णोः परमं पदं ब्रह्म, यस्य पुरुष इति संज्ञान्तरम्, 'महतः परमव्यक्तमव्यक्तात् पुरुषः परः' इति श्रुतेः; यस्याव्यक्तस्य महत्पदार्थापेक्षया परत्वं तदपेक्षया परस्य पुरुषस्य महतः परत्वं कस्तावन्नाभ्युपगच्छेत्। तस्य चावधारणं ध्रुवमिति स्वरूपनिर्देशात, नित्यपरिणामितया सांख्यकल्पितस्याव्यक्तस्य ध्रुवत्वाभावात्; ध्रुवो हि पुरुषः, 'एतदप्रमयं ध्रुवम्' इति (बृ० ४।४।२०) श्रुतेः। स एवाध्वनः पारभूतो विष्णोः परमं पदञ्च। तस्माच्छान्दोग्यश्रुतौ सदेवेत्यादेरचिन्मात्रपरत्वं न युज्यते—तदुपदेशस्य निष्प्रयोजनकत्वात् परमात्मज्ञानस्यैव मुक्तिहेतुत्वादिति भावः।१।४।१।

नन्वेवमव्यक्ताख्याचित्प्रकृत्यनभ्युपगमे स्वसिद्धान्तभङ्गः, नित्यसम्बद्धचिदचिदात्मकब्रह्मण एवासिद्धिप्रसङ्गादित्याशङ्कायामाह—

सूक्ष्मं तु तदर्हत्वात् ।१।४।२॥

तुकार आशङ्काव्यवच्छेदार्थः, 'सूक्ष्मं' = दुरुन्नेयं 'तत्' = अव्यक्तम्,—अव्यक्तपदार्थः, न तु प्रधानमात्रम्। 'अर्हत्वात्' =

योग्यत्वात् बाधाभावात्। स्थूले सूक्ष्मत्वं बाधितम्, यत्र बाधो नास्ति तत्र सर्वत्रैव सूक्ष्मत्वं नामाव्यक्तत्वं वर्त्तते स संसारस्तद्धेत्वदृष्टं साङ्ख्यसम्मतप्रकृतिश्च तस्य चाव्यक्तस्य जडत्वेन न सर्व्वोत्तमत्वं—सर्व्वोत्तमश्च पुरुषः, पुरुषपदार्थं हि विवृण्वत्याह 'व्यापकोऽलिङ्ग एव च' इति। एतेन चिन्मात्रमुभयात्मकञ्च पुरुषपदेन संगृहीतम् अलिङ्गत्वं चिन्मात्रस्य, विकारसङ्गाभावात् अतीन्द्रियत्वाच्च, आगमनिरपेक्षानुमानागम्यत्वं तदर्थः, उभयात्मकेऽलिङ्गत्वं चिदवच्छेदेनेति; अतएव सप्तशतीस्मृतौ 'अव्याकृता हि परमा प्रकृतिस्त्वमाद्या' इति 'चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत्' इतिचोक्तम्। केवलाचिन्मात्ररूपाया: प्रकृतेर्नास्ति जगत्स्रष्टृत्वमित्येतावदेवास्माभिः प्रतिपाद्यते, अव्यक्तपदस्य प्रकृतौ रूढिश्च नाभ्युपगम्यते। इत्येवास्माकं विशेषः। अतएव—'इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम्। सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम्। अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। यं ज्ञात्वा मुच्यते जन्तुरमृतत्वञ्च गच्छति।' इति काठकमन्त्रे रूपकभावेऽपि, न क्षतिः, अवयवशक्त्याव्यक्तपदस्य संसारहेत्वदृष्टपरत्वात् प्रकृतेस्तादृगव्यक्तत्वेऽपि महतः परं ध्रुवमिति मन्त्रेण महत्परतया प्रकृतेरेव ग्रहणमित्यस्यानुपपन्नत्वात्। अव्यक्तपदस्य प्रकृतौ रूढत्वस्य श्रुतिसिद्धत्वाभावेनानभ्युपगमात् ।१।४।२।

ननु काठकोपनिषदि महतः परमव्यक्तमिति द्विः श्रूयते, तत्र यदि द्वयमेव तुल्यार्थकत्वं स्याद् व्यर्थं पुनर्व्वचनम्; न च नास्ति

तुल्यार्थकत्वं तत्र संसारस्य, अत्र च अदृष्टस्याव्यक्तपदेनोपादानात् इति वाच्यं कार्य्यकारणभूतयोः संसारादृष्टयोः फलतोऽभेदात्, अथवा इति प्रागुक्तः संसारो वा अदृष्टं वा यद् भवतु तेनैव विवक्षितसिद्धेः अव्यक्तशब्दस्य प्रकृतौ रूढत्वे तु उत्तरत्राव्यक्तपदस्यादृष्टार्थकत्वे न पौनरुक्त्यमित्याशयमूलकाशङ्कां निरस्यति—

तदधीनत्वादर्थवत् ।१।४।३॥

तानि इन्द्रियादीन्यधीनानि येषां तेषां भावस्तदधीनत्वं तस्मात्—उत्तरमन्त्रे उत्तरोत्तरोत्कर्षः, यदपेक्षा उत्पत्तिः स्थितिर्वा येषाम्, तदधीनत्वं तेषामिति शृङ्खलाश्रयणात् 'अर्थवत्'= सार्थकं भवति न पुनरुक्तम्। रूपकमन्त्रप्रकरणे 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मन' इति श्रूयते, न चेन्द्रियाणि अर्थापेक्षोत्पत्तिकानि, तदपेक्षस्थितिकानि वा, अर्थसम्बन्धाभावेऽपि तेषामुत्पत्तिस्थित्योरनपायात्। उत्तत्र तु तदपहाय 'इन्द्रियेभ्यः परं मनः' इत्युक्तम्। मनः स्थित्यपेक्षिणीन्द्रियाणां स्थितिरिति प्रसिद्धमेव। मनसि लीने इन्द्रियाणि अलीनानि स्थातुं नोत्सहन्ते। मनसः सत्त्वमुत्तमम्—इदमपि आहङ्कारिकं सत्त्वं मनस उत्पत्तिहेतुः, ततोऽधिकं महानात्मेति बुद्धितत्त्वं ततश्चाव्यक्तमदृष्टं—सर्व्वस्यैव जन्यस्योत्पत्तौ अदृष्टस्यापेक्षणीयत्वात्, नन्वदृष्टं तदा क्व तिष्ठति, महत्तत्त्वाविर्भावात् पूर्व्वं ब्रह्मण एव केवलं सत्त्वादिति चेत् शक्तिविशेषरूपस्य तस्य महाशक्तिस्वरूपे ब्रह्मण्येवाव्यक्तरूपेणावस्थानात् तथाच तदिस्थतौ चिदचिदात्मकब्रह्मणः पुरुषाख्यस्यापेक्षणीयतया तस्य सर्व्वोत्तम-

त्वमित्येवंरूपस्य पारम्पर्य्यस्य पूर्व्वमन्त्रात् निरवशेषमलाभेनो-त्तरमन्त्रोऽयं न पुनर्व्वचनम्, अतोऽव्यक्तपदस्य प्रकृतौ रूढत्वान-भ्युपगमेऽपि न तस्य वैयर्थ्यशङ्कावसरः इति ध्येयम् ।१।४।३।

अर्थवत्त्वे हेत्वन्तरमाह—

ज्ञेयत्वावचनाच्च ।१।४।४।।

पुनर्व्वचनमिति प्रक्रान्तम्। अर्थवदिति चकारेणानुकृष्यते। 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः' इत्यारभ्य 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' इत्यन्तमन्त्रप्रतिपाद्यस्य ज्ञेयत्वं नोक्तं—इति ज्ञेयत्वावचनात्—उत्तरवल्लीस्थो मन्त्रो ज्ञेयत्वं वक्ति। 'इन्द्रियाणां पृथग्भावमुदयास्तमयौ यतः। पृथगुत्पद्यमा-नानां मत्वा धीरो न शोचति। इन्द्रियेभ्यः परं मनः' इत्याद्यनन्तरं 'अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। यं ज्ञात्वा मुच्यते जन्तुरमृतत्वञ्च गच्छति' इति। इन्द्रियादिपरम्परोक्त्य-वध्यव्यक्तपरत्वेन व्यापकत्वसहकृतालिङ्गत्वेन पुरुषो ज्ञेय इति विधिरनेन मन्त्रेणाक्षिप्यते। तथाच ज्ञेयत्वविधायकतया पुन-र्व्वचनवद् गृह्यमाणं वचनमिदं वस्तुतो न व्यर्थमित्यर्थः ।१।४।४।

ननु सर्व्वेषामेतेषां ज्ञेयत्वमुक्तपूर्वमेव, 'आत्मानं रथिनं विद्धि' इत्यादिना ज्ञेयत्वोपदेशात् 'इन्द्रियेभ्यः परा ह्यर्था' इत्या-दिना महत्पर्य्यन्तस्वरूपमुक्त्वा ततः परयोरनाद्यनन्तयोर्वयोरव्य-क्तपुरुषयोर्निर्वाच्यत्वेन वचनाच्चेत्याशयमूलकाशङ्कागर्भतत्प-रिहारसूत्रमाह—

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ।१।४।५॥

'वदति' ज्ञेयत्वमिति शेषः, उत्तरवल्ल्यां येषां ज्ञेयत्वमुक्तं 'आत्मानं रथिनं विद्धि' इत्यादिना 'निचाय्य तं मृत्युमुखात् प्रमुच्यते' इत्यन्तमन्त्रजातेन तेषामेव ज्ञेयत्वं श्रुतिर्वदति इत्यर्थः' तथाच पुनर्व्वचनं व्यर्थमित्याशयः। तन्निरस्यति नेति प्रकरण-प्राप्तस्य पुरुषमात्रस्य ज्ञेयत्वं तत्रोक्तं न त्विन्द्रियादीनाम् 'आ-त्मानं रथिनं विद्धि' इत्यादौ वेदननियोगो रूपकावबोधनार्थः, न खलु तेनात्मशरीरादीनां स्वरूपतो ज्ञेयत्वमुक्तम्। अक्षरार्थस्तु— 'प्राज्ञः' = परमात्मा, परमात्मैव ज्ञेयत्वेनोक्त इति शेषः, अत्र हेतुः 'प्रकरणात्' = 'पुरुषान्न परं किञ्चित्' इति मन्त्रेण पुरुष-स्यैव प्रकृतत्वात्। पूर्व्वं पुरुषमात्रस्य ज्ञेयत्वमुक्तम्—अत्र तु इन्द्रियादिकमारभ्य पुरुषपर्य्यन्तस्य ज्ञेयत्वमुक्तमिति विशेषादर्थ-वत्त्वं सिद्धम्। हि हेतौ अवधारणे च ।१।४।५।

ननु प्राज्ञ एवात्र ज्ञेयत्वेनोक्त इत्यत्र गमकं 'प्रकरणात्' इत्युक्तम् प्रकरणन्तु न पुरुषमात्रस्य, यावता 'आत्मानं रथिनं विद्धि' इत्यादिना, बुद्धिमनइन्द्रियादीनामपि प्रक्रान्तत्वात्, 'अव्ययम्' 'अनाद्यनन्तम्' 'ध्रुवम्' इति विशेषणत्रयस्य पुरुषे वैयर्थ्याच्च, ध्रुवमिति विशेषणेनैव अव्ययत्वस्य वा अनाद्यन-न्तत्वस्य वा प्रतीतेः। अनाद्यनन्तमित्युक्तं यदि प्रकृतिस्वरूपं स्यात् ध्रुवं च पुरुषाख्यं चिन्मात्रं नात्र विशेषणवैयर्थ्यम्, मन्त्रस्थेन चकारेण द्वयोर्दर्शनं मोक्षहेतुरित्यस्य तदर्थत्वात्। उत्त-

त्र महत: परमव्यक्तमित्यत्रापि अव्यक्तं प्रकृतिरेवान्यस्याव्यक्तस्य संसारस्यादृष्टस्य वा अनाद्यनन्तत्वाभावात्। न खल्वेतावता, उत्तरवल्लीस्थमन्त्र: पुनरुक्तो भवति निगमनरूपत्वात्तस्य; यथा बृहदारण्यके याज्ञवल्क्यखण्डे—मैत्रेयाब्राह्मणं तद्वत् । सांख्या-नामिमां शङ्कां परिहरन्नाह—

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ।१।४।६॥

काठकोपनिषदि 'त्रयाणामेव' वराणाम् । उपन्यास: = आदौ कथनम् ते च वरा अग्निविषयक:, जीवविषयक:, पर-मात्मविषयकश्चेति त्रय: तेषामेव त्रयाणां 'एवम्'= एवम्प्रका-रेण—उपनिषदुपदर्शितप्रकारेण, 'प्रश्न:' तथाच उपन्यासो नाम प्रतिवचनं तेषामेव युक्तम् एकेन चकारेणोपन्यासपदस्य द्विरावृत्ते: । 'निचाय्य तं मृत्युमुखात् प्रमुच्यते' इति परमात्म-विषयकप्रश्नस्य प्रतिवचनं कथमत्राव्यक्तस्याकाण्डे प्रवेशो भवि-ष्यति । ध्रुवमित्यस्य निष्क्रियमित्यर्थकतया पुनरुक्तत्वाभावात् । नहि ध्रुवत्वेनानाद्यनन्तत्वमपि लभ्यते आद्यन्तवतोऽपि तत्काल-निश्चलस्य ध्रुवसंज्ञया प्रसिद्धे:, 'स्थाणुर्वा ना ध्रुव: शङ्कु:' इत्यादौ । तस्मादत्र महत: पर: परमात्मैव निचाय्यत्वेनोक्त: । उत्तरवल्लीस्थमन्त्रश्च इन्द्रियादीनां सर्वेषां ज्ञेयत्ववचन: इत्यु-पदेशभेदादेव तस्यार्थवत्त्वमिति भाव: ।१।४।६।

नन्वेवं माभूत् अव्यक्तशब्द: प्रकृतौ रूढ:, योगात्तु प्रकृति-वाचकत्वमपि तस्य सम्भवति, कठोपनिषदुत्तरवल्ल्यां यस्मिन्न-

व्यक्तं महतः परत्वमुक्तं तत्प्रकृतिरपि भवितुमर्हति, या खलु चित्कार्य्यपूर्व्वावस्थालक्षणा तस्या ज्ञेयत्वोपदेशात् 'सदेव सोम्येदमग्र आसीत्' इति छान्दोग्यश्रुतौ सत्पदस्य तादृगचित्परत्वं निराबाधं भवति, 'ऐतदात्म्यमिदं सर्व्वम्' इत्यन्तेन तदुपदेशस्य सप्रयोजनत्वात्, प्रयोजनञ्च तज्ज्ञानम् इत्यस्य श्रुतिप्राप्ततया भवतामभ्युपगमाद् इत्याशङ्कायामाह—

## महद्वच्च ।१।४।७।।

चकारोऽधिकरणसमाप्तिद्योतकः, यथा 'महत्'शब्दोऽचितं चितञ्च बोधयति—'महतः परमव्यक्तम्' 'महतः परं ध्रुवम्' इत्यादौ अचितं, 'महान्तं विभुमात्मानम्' 'वेदाहमेतं पुरुषं महान्तम्' इत्यादौ चितञ्च बोधयति तथा सत्पदमिदं चितमचितञ्च बोधयति। तस्माच्चिदचिदात्मकं ब्रह्मात्र सत्पदार्थः, न त्वचिन्मात्रम् ; ननु विषमो दृष्टान्तः, यतो दृष्टान्ते एकं महत् पदमचित्परमन्यच्च चित्परं दार्ष्टान्तिके तु एकमेव सत्पदं चिदचित्परमुच्यत इति चेन्नैष दोषः समानानुपूर्वीकशब्दस्य चिदचित्परतायां दृष्टान्तदार्ष्टान्तिकयोः सामान्यात्; नहि सर्वैर्धर्म्मैः सामान्यं दृष्टान्तदार्ष्टान्तिकयोरपेक्ष्यते, अन्यथा भेदविरहेण दृष्टान्तत्वमेव व्याहन्येत। वस्तुतस्तु 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्' इत्यत्रैकस्यैव महच्छब्दस्य चिदचिदात्मकब्रह्मविशेष्यकबोधजनकत्वम्, 'आदित्यवर्णम्' इति 'पुरुषम्' इत्यनेन चोपस्थिते चिदचिद्ब्रह्मणि महत्पदार्थस्याभे-

देनान्वयबोधात् । न ह्यचित्सम्बन्धमन्तरेणादित्यवर्णत्वं पुरुषस्योपपद्यते तस्मात् सुष्ठूक्तं 'महद्वत्' इति । अथैवं तत्र महच्छब्दो यामचितं बोधयति, तदचिच्चिदुभयात्मकं न ब्रह्म, किन्तु प्रकृतिपुरुषात्मकं तत् कथं महतो दृष्टान्तत्वमिति चेन्न, सत्कार्य्यवादिनोरावयोः कथायामस्य दोषस्यानुपन्यसनीयत्वात् न हि महत्तत्त्वं प्रकृतेरतिरिच्यते कार्य्यानुकूलपरिणामसूचनाय महत्तत्त्वनाम्ना प्रकृतेरेव ग्रहणात् । ननु भवतु दृष्टान्तः, न च तेन वस्तुसिद्धिः, भूतत्वेन सामान्येनाकाशदृष्टान्तान्न हि घटपटादेर्निरवयवत्वं विभुत्वं वा सिध्यतीति सत्पदस्याचिन्मात्रपरत्वेनैवोपपत्तौ, दृष्टान्तमात्रेण चिदचिदुभयपरत्वाभ्युपगमोऽनुपपन्नः, इति चेत् 'सदेव' इत्यत्र सच्छब्दस्य परिणामिसत्तावदर्थकत्वमङ्गीकार्य्यम् तच्च न युज्यते 'एकमेवाद्वितीयम्' इत्युत्तरवाक्यव्याकोपप्रसङ्गात् । विलक्षणसत्तावद्वृत्तिभेदाप्रतियोगित्वस्याद्वितीयत्वरूपतया परिणामिसत्ताया ग्रहीतुमशक्यत्वात् चिदचिदुभयपर्य्याप्तेरेव वैलक्षण्यरूपत्वात् । अन्यथा अपरिणामिसत्तावता सद्वितीयत्वमेव तस्य प्रसज्येत । तस्मात् 'सदेव' इति श्रुतौ सदित्यानुपूर्व्वीकं पदमचिद्बोधकत्वे सति चिद्बोधकं चिदचिदुभयबोधकं वा उभयार्थकत्वात् महच्छब्दवत् । इत्याकारकानुमानार्थमिदं सूत्रमिति ध्येयम् ।१।४।७।

अत्र महद्वदिति सूत्रमसहमाना इव महत्पदघटितश्रुतिस्थमेव चमसं दृष्टान्तीकृत्य पुनः सांख्याः प्रत्यवतिष्ठन्ते—

[ अजाधिकरणम्—२ ]

चमसवदविशेषात् ।१।४।८॥

'स यः कामयेत महत्प्राप्नुयाम्' इत्युपक्रम्य मन्थकर्म्माभिदधानायां श्रुतौ 'औदुम्बरे कंसे चमसे वा सर्व्वौषधं फलानीति सम्भृत्य' इतीतिकर्त्तव्यतानिर्देशः, तत्र यथा चमसस्य औदुम्बरत्वेन सामान्येन कर्म्माङ्गनिर्व्वाहकतया च कंसापेक्षया विशेषो नास्ति—तथा 'सदेवेदमग्र आसीत्' इत्युक्तसत्पदार्थस्य जगत्कारणत्वेन सामान्येन 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति श्वेताश्वतरमन्त्रवर्णबोधिताया अजाया विशेषविरहात्, अजायाश्च तस्या अजाद्भेदनिर्देशेनाचिन्मात्रस्वरूपतया सदेवेत्यत्रापि तथा भवितुं युक्तत्वात् न तु चिदचिदुभयात्मकत्वेन इति पूर्व्वपक्षसूत्रम् ।१।४।८।

अत्र अजापदं चिदचिदात्मकब्रह्माख्यशक्तिपरमित्याशयेनाह—

ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ।१।४।९॥

तुकारः पूर्व्वपक्षव्यवच्छेदार्थः । 'अजामेकाम्' इत्यादिमन्त्रश्रुतिः, 'ज्योतिरुपक्रमा' = ज्योतिःपदार्थघटितमन्त्रेणोपक्रान्ता; तथाहि श्वेताश्वतरचतुर्थाध्याये प्रथममन्त्रः प्रार्थनात्मकः—'य एकोऽवर्णः' इत्यादिः 'स नो बुद्ध्या शुभया संयुनक्तु' इत्यन्तः। अत्र शुभबुद्धिदातृत्वेन, प्रार्थितं हि ब्रह्म, द्वितीयमन्त्रे च 'तदे-

वाग्निस्तदादित्यः' इति। यदग्न्यादित्यादिकं ज्योतिस्तदुपक्रम्य 'अजामेकाम्' इत्यादिश्रुतिरस्ति, 'एके' शाखिनः, 'तथाहि अधीयते'=पठन्ति, इत्युक्त्या ते ते मन्त्राः प्रमाणीक्रियन्ते। शुभदानसामर्थ्यज्ञापनात्, 'तदेवाग्निः' इति मन्त्रे तत्-प्रजापतिरिति निर्देशाच्च अग्न्यादिरूपेणोपक्रान्तं यद्ब्रह्म न तदचिन्मात्रं—तदेव च 'अजाम्' इत्यत्राजापदेनोच्यते प्रकृतत्वात्। तथाचाधिकरणम् 'अजाम्' इत्यादिश्रुतावजापदमचिन्मात्ररूपप्रकृतिपरं चिदचिदुभयात्मकब्रह्मपरं वा? अचिन्मात्रपरं त्रैगुण्यस्य जडत्वात् 'लोहितशुक्लकृष्णाम्' इत्यनेन रजःसत्त्वतमोगुणाभिधानाच्चेति प्राप्ते—उत्तरं चिदचिदुभयात्मकब्रह्मपरम्, ज्योतिरुपक्रान्तमन्त्रावधृतत्वात् तत्तन्मन्त्राणां यथा चोभयात्मकब्रह्मपरत्वं तदर्थत्त्वावगम्यते। तथाह्यग्न्यादिशब्दो भूतविशेषवाचकस्तदभिमानिदेवतावाचकश्च, न हि विशेषानवबोधने एकशेषः कर्त्तुं शक्यते, तन्मन्त्रे प्रजापतिरिति निर्देशादपि चिदचिदुभयरूपत्वं ब्रह्मणि पर्य्यवस्यति; न हि प्रजापत्यादित्वं केवलमचिति चिति वा घटते; मिलित एव, प्रजापतिशब्दव्यपदेशात् तत्स्वरूपब्रह्मपरत्वाच्च। अपि चान्तराले 'त्वं स्त्री त्वं पुमानसि' इत्यादिमन्त्रेऽपि चिदचिदात्मकप्राप्तिरिति सर्व्वस्यैव तादृशब्रह्मपरत्वं प्रस्तुतम्। अतस्तदुत्तरमन्त्रे तत्प्रकरणस्थे यदजापदं तत् प्रक्रान्तब्रह्मपरं न त्वचिन्मात्रपरम्। नन्वजापदं जडप्रकृतिपरमेव भवतु तदुत्तरं यदजपदं तच्चिन्मात्रपरं जुषमाण इत्यनेन तयोः सम्बन्धकथनात् तन्मन्त्रस्य ब्रह्मावबोधकत्वं भवत्येवेति चेन्न

'य एकोऽवर्णो बहुधाशक्तियोगाद् वर्णाननेकान्निहितार्थो दधाति' इति प्रथममन्त्रे यस्य ग्रहणं 'लोहितशुक्लकृष्णाम्' इत्यनेन अजाया नानावर्णधारणप्रतिपादनात् तस्यैवाजाशब्देनोपादानस्य युक्तत्वात्, प्रथममन्त्रे च शुभबुद्धियोजनसामर्थ्याभिधानात् चिदचिदात्मकब्रह्मण एव ग्रहणं 'तदेवाग्निः' इत्यादिना 'तदापस्तत् प्रजापतिः' इत्यन्तेन द्वितीयमन्त्रेण तद्विवरणाच्च, लिङ्गभेदस्तु विचारितपूर्व्वः; अत्र विशेषस्तु—मातृभावेनोपासनसूचकोऽयं स्त्रीलिङ्गप्रयोगः। नन्वेवमुत्तरार्द्धस्य कोऽर्थः इति चेत् एकोऽजो जुषमाणः मातृभावेन सेवमानः तामनुशेते तां लक्ष्यीकृत्य शयानो भवति बाल इव मातुरङ्के शयानो निर्वृतो भवति, एतेन भक्तजीवस्यावस्था वर्णिता, अन्यः अभक्तोऽजो भुक्तभोगां भुक्तो भोगस्य ज्ञानरूपत्वात् वर्त्तमाने क्तप्रत्ययात् अनुभूयमानो भोगो यतः—यत् प्रदत्तभोगो भुज्यते तां जहाति त्यजति, पूर्व्वानुवृत्तं स्वल्पमपि सेवनं भोगासक्त्या एकान्तं त्यजतीति भावः। एतेन मोक्षमार्गः संसारमार्गश्च दर्शितः। उत्कर्षापकर्षयोः प्रकारप्रदर्शनं जीवद्वयोपन्यासस्यार्थः। एतौ द्वौ जीवभेदौ एकेन जीवत्वेनानुगमय्य, अजां च पृथगुपादाय तादृशद्वित्वेन द्वा सुपर्णा इत्यनन्यत्वमेवोच्यते जीवस्य भिन्नत्वञ्च व्यावहारिकं वस्तुतस्तस्य नास्ति ब्रह्मणो भेदः, तथा च मन्त्रः 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इति, अस्यार्थः—यो हीशः सेवितः, तमन्यत्वेनाभिमतमपि अस्य जीवस्य महिमानं महत्स्वरूपं पश्यति, इति हेतोः 'वीतशोकः' मुक्तो भवति; न

तु भिन्नत्वेन पश्यन् मुह्यमानो जीवस्तदा वीतशोको भवतीति । तदुत्तरञ्च स्पष्टीकृतोऽयमर्थः । 'यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं सं च विचैति सर्व्वम् । तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति' ( श्वे० ४।११ ) इति ।१।४।९।

ननु 'लोहितशुक्लकृष्णाम्' इति ब्रह्मणो यद्रूपमित्यभिप्रेयते तद्धि 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इति श्रुत्या विरुध्यते, तदत्राजापदं न ब्रह्मपरं किन्तु तेजोऽबन्नलक्षणभूतत्रयपरमिति तटस्थाक्षेपं परिहरति—

कल्पनोपदेशाच्च मध्वादिवदविरोधः ।१।४।१०॥

श्रूयते हि 'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषी मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति' इति ( कठ० २।६।९ ) ब्रह्मणो रूपे ब्रह्म च न चाक्षुषं किन्तु यो मनसा योगबलयुक्तः स मनीषी हृदा पश्यति, किं पश्यति ? ब्रह्मणो रूपञ्च ब्रह्म च । एतत् = ब्रह्मतद्रूपयोश्चक्षुषा दर्शनाभावः योगशुद्धहृदा दर्शनञ्चेति प्रकारद्वयम् , ये विदुः तेऽमृता भवन्तीति फलश्रुतिरियम् ; तथाचास्यां श्रुतौ यः क्लृपधातुप्रयोगस्तमनुवर्त्तमानः सूत्रकारः सूत्रे कल्पनं सामर्थ्यार्थकमेव प्रयुक्तवान्; 'कल्पनोपदेशात्' = कल्पने सामर्थ्ये सति हृदा रूपदर्शनोपदेशात् , ब्रह्मणो रूपे श्रुतिविरोधो नास्ति । ननु माभूत् रूपसामान्ये श्रुतिविरोधः, किन्तु लोहितादिरूपे त्वस्त्येव 'यदग्ने रोहितं रूपम्' इत्यादावुपपादितत्वादित्याशङ्कायामाह 'मध्वा-

दिवत्' = मध्वादि श्रुताविव 'अविरोध:' = लोहितादिरूपत्वे बाधाभाव:, तस्यां श्रुतौ 'असौ वा आदित्यो देवमधु' इत्यादौ रश्मिभेदेन रोहितशुक्लकृष्णरूपभेद आदित्यस्य दर्शित: स ब्रह्मण एवेत्युपपादितम्, तथा चादित्ये प्राच्यरश्मिविच्छुरितं केवलं तैजसं रूपं रश्म्यन्तरविच्छुरिते चाबन्नयोरिति वक्तव्यमन्यथा 'यदादित्यस्य रोहितं रूपं तेजसस्तद्रूपं यत् शुक्लं तदपां यत् कृष्णं तदन्नस्य' इत्यनेन विरोध: स्यात्, तैजसानां रश्मीनां त्रिवृत्कृतत्वाविशेषेऽपि, एकविधरश्मिसम्पर्काद्रोहितमेव रूपं रश्म्यन्तरसम्पर्काच्च शुक्लं कृष्णञ्चेति वैषम्यं पुन: कथं भवतीत्यत: प्राच्यादिषु रश्मिषु प्रत्येकं पृथक् पृथग् ब्रह्मणो रूपभेदात् शक्तिविशेषाद् वैलक्षण्यमभ्युपगन्तव्यम्, ततश्च तेजोऽबन्नेषु यद्रूपं तदित: पृथगेवेत्येवम्प्रकारेण यथा तच्छ्रुतिविरोध: परिह्रियते, तथा 'यदादित्यस्य रोहितं रूपम्' इत्यादिश्रुतिप्रदर्शितास्तेजोऽबन्नवृत्तयो रोहितादिरूपव्यक्तयो ब्रह्मणो रोहितादिरूपेभ्यो विलक्षणा एवेत्यभ्युपगमादविरोध: । तेजोऽबन्नानां यानि रोहितादिरूपाणि तानि चाक्षुषाणि, यानि तु ब्रह्मण:, तानि मन:कल्पवता मनीषिणा हृदा ग्राह्याणि तस्माद् विलक्षणानि ब्रह्मशक्त्यैव सम्भूतानि, न तेजोऽबन्नानां तानीत्यविरोध:, तस्माद् अत्राजापदं चिदचिदात्मकशक्तिब्रह्मपरमिति सामान्योक्ति: । विशेषन्तु ब्रूमहे—श्यामामूर्त्तिकब्रह्मप्रतिपादको मन्त्रोऽयमिति, तथाहि लोहितशुक्लकृष्णामित्यनेन 'सृक्वद्वयगलद्रक्तधाराविस्फुरिताननाम्' इति ध्यानोक्त्या रुधिरधारया क्वचिल्लोहितां 'दन्तु-

राम्' 'हसन्मुखीम्' इति ध्यानोक्त्या क्वचिच्छुक्लां, सर्व्वतः कृष्णां 'महामेघप्रभां श्यामाम्' इति ध्यानोक्तेः। बह्वीरिति—हितादिना सरूपाः ब्रह्मविष्णुरुद्राख्याः तिस्रः प्रजाः, आद्यायाः शक्तेर्ब्रह्मादीनामुद्भवस्य शास्त्रप्रमाणकत्वात्, अथवा पञ्चदश काल्याद्यावरणदेवताः 'सर्व्वाः श्यामा असिकराः' इत्यागमोक्त्या सरूपा ज्ञायन्ते, आवरणदेवतानां देव्यङ्गे विलयदर्शनेन तदुपादानकतानिर्णयात् सृजमानामिति। अत्र शक्त्यर्थे शानच्।

जुषमाणः प्रीयमाणः उरसा चरणं धृत्वा सेवमानो वा एकः मुख्यः अजः अनादिः शिवः अनुशेते अनु लक्षीकृत्य श्यामामिति शेषः शेते चरणादधस्तात् शयानो भवति। अन्यः तदितरः अमुख्यः अजः तेन भोगासक्तजीवलाभः, भुक्तभोगां सम्पादितभोगां तां जहाति। अन्यविधैश्वर्य्यलाभेन मुग्धस्तां परित्यजति, इति हि तदर्थः।

न चैतदप्राकरणिकम्, 'य एकोऽवर्णो बहुधा शक्तियोगाद् वर्णाननेकान् निहितार्थो दधाति' इत्युपक्रममन्त्राद् वर्णविशेषवद्ब्रह्मणः प्रकृतत्वात्। तस्मादजापदं श्यामाकारब्रह्मपरमिति रहस्यम्।।१।४।१०।

अथाजापदस्य ब्रह्मपरत्वे साधकयुक्तिरस्ति श्रुतिविरोधलक्षणबाधकयुक्तिश्च परिहृता, तथापि न खलु तत एव तस्य तेजोऽब्बन्नपरत्वं न भवतीति व्यवस्थापयितुं शक्यते, यावत्तत्र बाधो नोपदर्श्येत इति तदुपदर्शनाय सूत्रान्तरमाह—

न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ।१।४।११॥

ब्रह्मपरत्वे युक्तिमत्त्वादेव अजापदस्य न तेजोऽबन्नपरत्वं भवति किन्तु संख्योपसंग्रहादपि तेजोऽबन्नपरत्वं न युज्यते, 'संख्यायाः' = एकत्वस्य 'उपसंग्रहात्' = 'उप'—अजामित्यस्य समीपे, 'संग्रहः' = एकामित्यनेन सुव्यक्त ग्रहणम्, तस्मात्, कुत एवं तत्राह—'नानाभावात्' इति तेजः आपः अन्नञ्चेत्येषां 'नानाभावात्' नानात्वात् न हि तेषां कथमपि भवत्येकत्वव्यपदेशः, नन्वेका धान्यराशिरितिवदयं प्रयोग इत्याशङ्कायामाह 'अतिरेकाच्च' = राश्यादिभिन्नत्वाच्च; अयमर्थः—एका धान्यराशिरित्यादौ राशावेव एकत्वान्वयो न तु धान्ये, अत्र त्वजापदस्य राशिवाचकत्वाभावात्, तेजआदिपरत्वाच्च कथं तत्रैकत्वप्रतिपत्तिरिति । न च भूतत्रयजन्यं शरीरमेवाजापदवाच्यम्, तत्र 'एकाम्' इत्यनेन संख्योपसंग्रहस्य व्यर्थत्वात् । किञ्च तेजोऽबन्नानि वा तदुत्थं शरीरं वा नाजापदेन ग्रहीतुं शक्यन्ते, अतिरेकात् अजापदार्थादिति शेषः, अनुत्पत्तिकलक्षणात् अजापदार्थाद् भिन्नत्वादित्यर्थः, तत्तेजोऽसृजतेत्यादिश्रुत्या तेजआदीनामुत्पत्तिवचनात् कथमनुत्पत्तिकार्थकमजापदं तत्परं स्यादिति भावः । नन्वियं रूपकप्रयुक्तिः—तथाहि यथा त्रिवर्णा छागी स्वसमानवर्णान् बहून् बर्करान् प्रसूते, ताञ्चैकश्छागोऽनुरमते परश्च भुक्त्वा त्यजति तथा तेजोऽबन्नमयं शरीरमिदं, अत्राभिमन्यमान आत्मा अनुशेते, परश्च तत्त्वज्ञस्तदुपजहातीत्युपमाधीनं रूपकमिदमिति चेत् अतिरेकादिति ब्रूमः, रूपके हि रूप्यमाणधर्म्मस्य तद्धर्म्मिणश्च

भवत्युपादानं यथा 'आत्मानं रथिनं विद्धि', 'असौ वा आदित्यो देवमधु' इत्यादौ । अत्र तु रूप्यमाणधर्म्ममात्रस्य ग्रहणं न तु धर्म्मिणोऽपि, तस्माद् रूपकादिदमतिरिच्यते न चाजापदेनैव धर्म्मधर्म्मिणोर्ग्रहणमुपपद्यते अजापदस्य योगेन वा रूढ्या वा धर्म्मिपर्यप्रवृत्तेः । तस्माद् अजापदं न तेजोबन्नादि-परमिति सिद्धम् ।१।४।११।

एवं तटस्थे निराकृते साङ्ख्याः पुनः प्रत्यवतिष्ठन्ते—तन्निरासकं वाक्यशेषाधिकरणापराख्यं पञ्चजनाधिकरणम् त्रिभिः सूत्रैराह, तत्राद्यम्—

( पञ्चजनाधिकरणम्—३ । )

## प्राणादयो वाक्यशेषात् ।१।४।१२॥

ननु 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्' इति श्रूयते (बृ० ४।४।१७) अत्र 'पञ्च पञ्चजनाः' इति पदार्थानां पञ्चविंशतिं प्रतिपादयति पञ्च प्राणान् वेति संशयः, उभयकोट्युपस्थितेः; पञ्चविंशतेः पञ्चगुणितपञ्चत्वात् प्रथमकोट्युपस्थितेः, पञ्चशब्दाद् द्वितीय-कोट्युपस्थितेश्च; वीप्सा च पुरुषभेदाभिप्राया । अत्राह—पञ्चशब्दस्य द्विःप्रयोगात्पञ्चविंशतिरेव लभ्यते पञ्च पञ्चपूल्य इतिवत्, जनशब्दश्च पदार्थपरः—जनयति यत् इति णिजन्त-जनधातोः पचादित्वादच्प्रत्ययेन, जन्यते यत् इति घञ्प्रत्ययेन च जनशब्दस्य निष्पत्तेः;—ततश्च 'पादा रश्म्यङ्घ्रितुर्य्यांशाः'

इतिवद् भिन्नार्थस्यापि सरूपस्य जनशब्दस्य द्वन्द्वैकशेषात् जना इत्यस्य सिद्धेः। 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः।' इति हि पञ्चविंशतिः पदार्थाः। तत्र जनयतीत्यनेन पुरुषस्य मूलप्रकृतेश्च ग्रहणम् पुरुषस्य जननकर्तृत्वस्योपादानतायाश्चाभावेऽपि प्रयोजकत्वस्यानपायात्। जन्यते यदित्यनेन एकादशानामिन्द्रियाणां भूतपञ्चकस्य च ग्रहणम्,—जनयति यदिति जन्यते यदिति च महदहङ्कारपञ्चतन्मात्राणाञ्च ग्रहणं तेषां जनकत्वाद् जन्यत्वाच्च। नन्वेवं पुरुषस्यात्मत्वात् आकाशस्य च पञ्चभूतान्तर्गतत्वात् पृथग्ग्रहणमयुक्तम् 'तमेव मन्य आत्मानम्' इत्यस्य च व्याहतत्वमिति चेन्न गोबलीवर्दन्यायेन पृथग्ग्रहणात् आकाशश्चेति चकारस्य इवार्थकत्वाद्वा, यथा आकाशः प्रतिष्ठितः, तथा सर्वेऽपि पदार्था यत्र प्रतिष्ठिता इत्यस्य तदर्थत्वात्। आकाशस्योपमानत्वन्तु 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुः' इत्यादिश्रुतौ ( तै० २।१ ) आकाशस्य साक्षादात्मजन्यत्वदर्शनादुपपादनीयम्।

ननु पञ्चशब्दस्य पञ्चगुणितत्वार्थकत्वे लक्षणाप्रसङ्ग इति चेत्, जनपञ्चकस्य पञ्चसंख्यया निर्देशेन, फलतो गुणितत्वार्थप्राप्त्या लक्षणानभ्युपगमात्। पुरुषप्रकृतिमहदहङ्कारमनांसीत्येकं जनपञ्चकं पञ्चज्ञानेन्द्रियाणीत्यपरं पञ्च कर्मेन्द्रियाणि चान्यत् पञ्चतन्मात्राणि पञ्चमहाभूतानि चेतरे इति सकलपञ्चकपर्याप्तपञ्चत्वसंख्यया निर्देशात् पञ्चविंशतित्वोपपत्तेः।

'तमेव मन्य' इत्यत्र तत्पदेन निरीश्वरमते पुरुषसमष्टिः, सेश्वरमते ईश्वरस्य च आत्मत्वेन पृथगुपदेशाद् व्याहतत्वाभावाच्च। न चैवं पदार्थान्तरप्रसङ्ग इति शङ्कनीयम्, जलजलाशयत्वत्तयोरन्यत्वाभावादिति प्राप्ते, उच्यते—'प्राणादयो वाक्यशेषात्' इति 'पञ्च पञ्चजनाः' इत्यनेन प्राणादय एव प्रतिपाद्यन्ते, कुतः 'वाक्यशेषात्'=उत्तरस्मिन् मन्त्रे 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः' इति प्राणादीनां पञ्चजनानां दर्शनात् त एव चात्र विवक्ष्यन्ते, ननु जन्यते यदिति व्युत्पत्त्या तेषां जनशब्दार्थत्वेऽपि, तत्र पञ्चत्वसंख्याविवक्षणे द्विरुक्तपञ्चपदार्थान्वयानुपपत्तिः, नच पुरुषभेदाभिप्राया वीप्सेयमिति वाच्यं, तथा सति वाक्यशेषे तद्बोधकप्राणादिपदानामेकवचनान्ततया प्रयोगो न युज्येतेति चेन्न पञ्चजनशब्दस्य 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः' इति त्रिकाण्डीप्रमाणेन पुरुषे रूढत्वाद् योगापेक्षया रूढेर्बलवत्त्वाच्च, एकस्य पञ्चपदस्य संख्याविशेषविशिष्टबोधकतया प्राणादिपञ्चकस्यैव 'पञ्च पञ्चजना' इति श्रुतिप्रतिपाद्यत्वात्। न च पञ्चजनशब्दस्य पुरुषे रूढत्वेऽपि प्राणे तस्य सम्बन्धाभाव इति वाच्यम् 'ते वा एते पञ्च ब्रह्मपुरुषाः' इति श्रुतौ (छा० ३।१३।६) प्राणेषु पुरुषपदप्रयोगात् तत्र तत्पर्य्यायपञ्चजनशब्दप्रयोगस्य निर्दोषत्वात्। न च 'पञ्च ब्रह्मपुरुषाः' इत्यनेन प्राणव्यानापानसमानोदानानां ग्रहणस्य युक्ततया चक्षुरादेश्चाग्रहणात् तत्परं 'पञ्च पञ्चजना' इत्यनुपपन्नम् इति वाच्यम्, 'ते वा एते' इत्यनेन पञ्चसुषिसम्ब-

न्धतया प्रक्रान्तानां चक्षुःश्रोत्रवाङ्मनःप्राणानामन्तःप्रवेशविरोधित्वेन स्वर्गलोकशब्दितहार्दब्रह्मणो द्वारपसंज्ञया श्रुतिकीर्त्तितानां तेषामेव ब्रह्मपुरुषत्वेनाभिधानात् । न चैवमपि अन्नस्य पुरुषत्वमयुक्तम् इति शङ्कनीयम्, 'स वा एष पुरुषोऽन्नरसमयः' इति ( तै० २।१ ) पुरुषस्यान्नरसमयत्वात् प्रकृतिविकृत्योरनन्यत्वविवक्षया पुरुषशब्दस्य तत्रापि वृत्तिस्वीकारे बाधकाभावात्, छत्रिन्यायादधिकेन व्यपदेशा भवन्तीति न्यायाच्च ।१।४।१२।

ननु माध्यन्दिनानां यस्मिन् 'पञ्च पञ्चजनाः' इत्यनन्तरं 'प्राणस्य प्राणम्' इत्यादिमन्त्रे वाक्यशेषभूते 'अन्नस्यान्नम्' इत्यस्ति ततश्च पञ्चजनसंज्ञानां प्राणादीनां पञ्चत्वसंख्या तेषामुपपद्यताम्; काण्वानान्तु—'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः । ते निचिक्युर्ब्रह्म पुराणमग्र्यम्' इति वाक्यशेषभूतम्, मन्त्रे ( बृ० ४।४।१८ ) प्राणादिचतुष्टयमात्रस्य पाठात् कथं तदुपपत्तिरित्यत उत्तरमाह—

ज्योतिषैकेषामसत्यन्ने ।१।४।१३॥

'एकेषाम्' काण्वानां वाक्यशेषमन्त्रे, अन्नेऽसति, तत्पूर्वानुवृत्तेन ज्योतिषा पञ्चत्वसंख्या उपपद्यते । तथाहि, 'तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्, इत्यनन्तरमेव' यस्मिन् 'पञ्च पञ्चजनाः' इत्यादिमन्त्रः । 'प्राणस्य प्राणम्' इत्यादिवज्ज्योतिषां ज्योतिरित्यपि ब्रह्मस्वरूपनिरूपणार्थम्—यथा 'प्राणस्य प्राणम्' इत्यादौ प्रथमप्राणादिशब्दः प्रसिद्धप्राणादिपरः,

तथैव तुल्यविन्यासे प्रागुक्तमन्त्रप्रतीके 'ज्योतिषां ज्योतिः' इत्यत्र प्रथमो ज्योतिःशब्दः प्रसिद्धार्थः तदेवानुकृष्य पञ्चत्वसंख्योपपत्तिः काण्वानां भवतीति भावः। न च माध्यन्दिनानामपि 'तद्देवा ज्योतिषां ज्योतिः' इत्ययं मन्त्रोऽस्ति काण्ववत् तेषामपि ज्योतिरनुकर्षे बाधाभावात् संख्याधिक्यापत्तिरिति चेन्न—तेषां वाक्यशेषगतैः प्राणादिभिः पञ्चत्वसंख्यासमाप्तौ निरपेक्षतया ज्योतिरनुकर्षाभावात्, शाखाभेदेन 'ज्योतिषां ज्योतिः' इत्यस्य ग्रहणाग्रहणविकल्पश्च अतिरात्रे षोडशिग्रहणाग्रहणवदपेक्षाभेदादवगन्तव्यः। अयं पूर्व्वेषां सम्मतोऽर्थः। वस्तुत एकेषां काण्वानां वाक्यशेषभूते 'प्राणस्य प्राणम्' इत्यादिमन्त्रे अन्नेऽसति ज्योतिषा पूर्व्वमन्त्रस्य 'ज्योतिषां ज्योतिरायुः' इत्यत्र स्थिताभ्यां ज्योतिःशब्दाभ्याम्—अन्नं ग्राह्यमिति वाक्यशेषः। ननु ज्योतिःशब्दस्यान्नबोधकत्वमयुक्तमिति चेन्नैष दोषः, तैत्तिरीयश्रुतौ तथोपपादनात्। 'अप्सु ज्योतिः प्रतिष्ठितं ज्योतिष्यापः प्रतिष्ठिताः तदेतदन्नमन्ने प्रतिष्ठितम्' 'आपो ज्योतिरन्नं बहु कुर्व्वीत' इति च ज्योतिषोऽन्नतया परिभाषणात् तेन च पञ्चजनशब्दार्थसंख्यायाः प्रतिपत्तिः समाना भवतीति भावः। तत्रायुःपदमपि ग्राहकम् आयुर्हेतुत्वादस्य, आयुर्घृतमितिवत्। न च माध्यन्दिनश्रुतौ 'अन्नस्यान्नम्' इति प्रतीकस्य पूर्व्वमन्त्रे ज्योतिषां ज्योतिरायुरित्यस्य च सत्त्वेन पौनरुक्त्यमिति वाच्यं तेत्र ज्योतिषां ज्योतिरित्यस्य यथाश्रुतत्वादननुकर्षणाच्च। यथा ऋतुनमस्कारमन्त्रे, काण्वानां 'पितरस्तपसे' इति प्रतीकसत्त्वात् तस्यैव

शिशिरऋतुपरत्वं 'मन्यवे' इति पदस्य च हेमन्तपरत्वं माध्यन्दिनानां च 'तपसे' इति प्रतीकासत्त्वेऽपि 'मन्यवे' इत्यस्यैव शिशिरऋतुपरत्वमन्यथा षण्णामृतूनामनुपन्यासः स्यात्, तद्वत् प्रकृतेऽपीति ध्येयम् ।१।४।१३।

इतश्च सांख्यसिद्धान्तासिद्धिरित्याह—

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ।१।४।१४।।

'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' इत्यत्र प्राणचक्षुःश्रोत्रान्नमनसामाकाशस्य च कारणतया 'यथाव्यपदिष्टम्' = श्रुत्यन्तरे यदुक्तं तस्यैव, उक्तेः, न पञ्चविंशतिपदार्थसिद्धिः । श्रुत्यन्तरं च 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारणी' इति (मु० २।१।३) 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते' इति चैवमादि(मु० १।१।८)। युज्यते हि स्वकारणे कार्यस्य प्रतिष्ठा, यदि पुरुषप्रकृत्यादिपञ्चविंशतिपदार्थी पञ्चपञ्चजना इत्यनेोच्येत आत्मनितत्प्रतिष्ठायाः श्रुत्यन्तरे व्यपदेशः स्यात् स च नास्ति, आकाशस्य पञ्चविंशतिपदार्थीमध्यपातिततया पृथगुपादानं व्यर्थं च स्यात् । न च गोबलीवर्दन्यायेन उपमानरूपेण वा पृथगुपादानं समर्थितमिति वाच्यम्, असतिनिमित्ते गोबलीवर्दन्यायायोगात् उपमानरूपेण ग्रहणस्य वैयर्थ्याच्च । न च 'आकाशाद्वायुः' इति श्रुतिवाक्याद् वाय्वादीनामुत्पत्तिर्न ब्रह्मण इति भ्रमो माभूदित्येतदर्थमुपमानग्रहणमिति वाच्यम्, आकाशोत्पत्तिवद् वाय्वादीनामुत्पत्त्य-

भावादुपमानासङ्गतेः, वाय्वादीनामुत्पत्तिर्वा प्रतिष्ठा वा आकाशादिसापेक्षा, आकाशस्योत्पत्तिस्तु तन्निरपेक्षेति वैषम्यात् 'एतस्माज्जायते प्राणः' इत्यादिश्रुत्या सर्व्वेषामात्मत उत्पत्तेः श्रुत्यन्तरसम्मतत्वाच्च ।१।४।१४।

ननु माभूत् 'पञ्च पञ्चजनाः' इतिश्रुतिः सांख्यसिद्धान्ते प्रमाणम् 'असद्वा इदमग्र आसीत् ततो वै सदजायत' इति ( तै० २।७) श्रुतिरेव तत्र प्रमाणमस्ति, ननु सत्कार्य्यवादिनां तेषां विरुद्धेयं श्रुतिः कथं प्रमाणमिति चेन्न 'आसीत्' इत्यनेनैव सत्ताबोधनात् कार्य्यावस्थया असदिदं कारणावस्थया आसीदित्यस्यैव तदर्थत्वाभ्युपगमात् अन्यथा असदासीदिति व्याहन्येत, ये त्वेवं सत्ताद्वयं नाङ्गीकुर्व्वन्ति, तन्मतं केचिदाहुः 'असदेवेदमग्र आसीत्' इत्यनूद्य 'कथमेवं भविष्यति' इत्यनेन भावाभावयोरभेदासम्भवमुपदर्शयता श्रुत्यन्तरेण (छा० ६।२) निरस्तत्वात् सत्ताद्वयवादिसांख्यमतस्यानिरासात्। एवञ्च 'ततो वै सदजायत' इत्युत्तरवाक्यं सुसङ्गच्छते—कार्य्यसत्तावतः परस्तादुत्पत्तेरित्याशङ्कां निरस्यति—

( समाकर्षाधिकरणम्—४। )

## समाकर्षात् ।१।४।१५॥

तैत्तिरीयश्रुतौ 'असत्' इति न जडायाः प्रकृतेर्बोधकं भवितुमर्हति किं तु चिदचिदात्मकब्रह्मणः; कुतः 'समाकर्षात्'= 'आकर्षः'—स्वासमभिव्याहृतपदार्थस्य अन्यतो योजनम्। स

चापकर्षोऽनुकर्षश्चेति द्विविधः; पूर्व्वस्मादाकर्षः अनुकर्षः, उत्तरस्मादपकर्षः । सम्—समः, पूर्व्वतः परतश्च समान आकर्षः तस्मादित्यर्थः । पूर्व्ववाक्यं 'तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः' इत्यादिरूपम्, उत्तरवाक्यञ्च 'तदात्मानं स्वयमकुरुत' इत्युपक्रान्तं 'रसो वै सः' इत्याद्यानन्दरूपताप्रतिपादकवाक्यमध्यम् 'अथ सोऽभयं गतो भवति' इत्यन्तञ्च। तदुत्तरानुवाकश्च 'भीषास्माद् वातः पवते' इत्यादिः। एवं खल्वितो निश्चीयते, यस्तावत् 'असत्' इत्यनेनोच्यते तद्ब्रह्म, स एव सर्व्वातिशाय्यानन्दः, तदभिन्नो जीवात्मा च, तत्प्रतिष्ठां मुच्यते, वाय्वादयो देवाश्च ततो बिभ्यतः स्वे स्वे कर्म्मणि वर्त्तन्ते। एतत् सर्व्वं चिदचिदात्मके ब्रह्मणि युज्यते, न तु चित्सम्बन्धशून्यायामचिति; तस्य च सत्त्वासत्त्वयोः 'तत् सत्यम्' इति नामनिरुक्त्या श्रुत्यैवोपदर्शितत्वाद् असदित्यनेनापि व्यपदेशे बाधाभावात्। 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्' इति श्रुतौ असद्ब्रह्मवेदननिन्दा च असन्मात्रतया ब्रह्मणो वेदनपरा। न च तथापि 'असद्वै' इत्यवधारणमनुपपन्नमिति शङ्क्यम्,—इदम्पदार्थस्य जडप्रपञ्चस्य असदाख्याया अचित एव तादात्म्येनावधारणसङ्गतेः। चिदचिदात्मकं ब्रह्म चिदवच्छेदेन निमित्तकारणमचिदवच्छेदेनोपादानकारणमित्युक्तमधस्तादभिधास्यते चारम्भणाधिकरणसूत्रजातेन। एतदुक्तं भवति, सत्तानां मिथो भेदवत्तया प्रदर्शितानां या अनित्यसत्ता तदभाववदिति असदित्यस्यार्थः, इदमनित्यसत्ताभाववदेवासी-

दित्यर्थकतया न काचिदापत्तिः सम्भवति । यथार्थं सिद्धान्तस्तदुपपादितमीक्षत्यधिकरणादौ । न हि पूर्वोत्तर-वाक्यार्थविरोधेसत्यान्तरालिकमेकवाक्यं कमप्यर्थं बोधयितु-मीष्टे, शाब्दबोधे तात्पर्य्यज्ञानस्य प्रकरणज्ञानस्य वा हेतुत्वादिति भावः ।१।४।१५।

ननु भवेदेवं यदि चिदचिदात्मकं जगदुपादानं ब्रह्म प्रकृतं स्यात् नत्वेवम्, यतः 'तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः' इति पूर्व्ववाक्ये आत्मपदं जीवपरम् एतत्पदश्रवणात्, अदृष्टद्वारा तस्य आकाशाद्युत्पत्तौ हेतुत्वसम्भवात्, जीवश्च पुरुष एव, तस्यैव ब्रह्मेति संज्ञान्तरम् सृष्टेर्जीवार्थत्वात्, निमित्ती-कृत्येत्यादिरूपेण ल्यबूलोपे पञ्चमीप्रयोगाद्वा 'आत्मा ब्रह्म' इति श्रुतेः । अयमित्यनेनात्मनो जीवत्वं व्यक्तं प्रत्यक्षविषयस्यैव इदम्पदार्थत्वात् । तस्माद् जीव एव प्रक्रान्तो न तु चिदचिदात्मकं ब्रह्म; किञ्च प्रतिषिद्धञ्च ब्रह्मणोऽसत्त्वं नत्वसन्मात्रत्वम्, 'असन्नेव स भवति' इत्यादिना—एवञ्चात्र तदेव ब्रह्म कथमसदित्युच्येत । अतोऽसदित्यचिन्मात्ररूपप्रकृतेर्व्यपदेशः, ततः 'सदजायत' इति सदिति पुरुषस्वरूपमुक्तं, तस्य जन्म चोपाधिपरिग्रहः, उपाधेश्चा-सत एवोत्पत्तिः, 'तदात्मानं स्वयमकुरुत' इति ईश्वरनैरपेक्ष्येण पुरुषं देवदानवादिदेहावच्छिन्नमकुरुत; 'सुकृतमुच्यते' इति लिङ्गात् 'पुरुषो वाव सुकृतम्' इत्यैतरेयश्रुतेः । स च जीवो यावदज्ञानं तावत् प्रकृतिप्रतिष्ठः संसारी, सति च ज्ञाने स्वप्रतिष्ठो मुच्यते इति पूर्व्वापरसमन्वितस्य वाक्यस्यार्थः, तेन च सांख्यसिद्धान्त

एव प्रतिपाद्यते—न तु चिदचिदात्मकं ब्रह्म, तस्याप्रकृतत्वेन वेदनविधिविषयत्वाभावेन चात्र तत्परवाक्यप्रयोगानौचित्यात् । न च 'अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः' इत्यर्थवादेन ब्रह्मवेदनविधिराक्षिप्यत इति वाच्यं ब्रह्मशब्दस्य श्रुत्यन्तरैकवाक्यतया जीवपरत्वस्यैवौचित्यात् । तच्च श्रुत्यन्तरम्—'यो वै बालाक एतेषां पुरुषाणां कर्त्ता यस्य चैतत् कर्म्म स वै वेदितव्यः' ( कौ० ब्रा० ४।१८ ) इति; 'एतेषां पुरुषाणाम्' आदित्यादिशरीराणां 'कर्त्ता' यस्य वा 'एतत्' शरीरधारणहेतुभूतं कर्म्म धर्म्माधर्म्मलक्षणम्—स एव वेदितव्यः इत्यर्थकं जीवस्यैव वेदनविधिमादर्शयति 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्ययं विधिरपि आत्मतया जीवमेव विषयीकरोति 'न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति' इत्युपक्रमात् सर्व्वत्रैवात्मशब्दस्य जीवपरत्वात् उपसंहारवाक्ये 'न वा अरे सर्व्वस्य कामाय सर्व्वं प्रियं भवत्यात्मनस्तु कामाय सर्व्वं प्रियं भवति आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादिरूपे आत्मपदस्य तथाविधार्थकत्वस्यैव प्राप्तेः, अन्यथा प्रकृतहानमप्रकृतोपादानञ्च स्यात् । असद्वा इत्यस्य अचिन्मात्रात्मकप्रकृतिपरत्वे च वेदनविधिविषयस्य सतो जीवस्य असदाख्ययोक्ताया अचितो विविक्ततया प्रतिपादनं यदपेक्षितं तदेव प्रतिपादयत् साङ्ख्यसिद्धान्ते प्रमाणं कथमपलप्यत इत्याशङ्कायामुत्तरं पठति ।

( जगद्वाचित्वाधिकरणम् —५ । )

जगद्वाचित्वात् ।१।४।१६॥

बालाकिश्रुतौ 'एतेषाम् पुरुषाणाम्' अत्रैतच्छब्दो जगदेकदेशम् 'एतत् कर्म्म' अत्र सामान्यतया प्रयुक्तमेतत् पदं समस्तं जगद्व वक्ति, 'सदेव सोम्येदम्' इत्यादाविदंशब्दवत्, एवं तयोर्जगद्वाचित्वात् सर्व्वनामपदत्वेन जगदभिधायकत्वात् तत्कर्त्तृत्वेन परमेश्वर एव गम्यते अत: 'स वेदितव्य' इत्यनेन तस्य वेदनमेव विधीयते, न तु जीवस्य । अतएव बालाकेरजातशत्रुं प्रति 'ब्रह्म ते ब्रवाणि' इत्युपक्रमवाक्यमपि संगच्छते । ब्रह्मवचनप्रवृत्तस्य बालाकेरसामर्थ्यं प्रदर्श्य तदज्ञातस्य ब्रह्मण एवाजातशत्रुणा प्रतिपादनस्य युक्तत्वात् । 'सम्भवत्येकवाक्यत्वे वाक्यभेदो न चेष्यते' इति मीमांसकसमयात् श्रुत्यन्तरप्राप्तवेदनविधिविषय: परमेश्वर एव 'अस्ति ब्रह्मेति चेद् वेद' इत्यत्र ब्रह्मपदार्थ: प्रकृत:, तत्प्रकरणञ्चेदम् , न त्वप्रकृतं ब्रह्म असद्वा इत्यनेनोपदिश्यते अप्रकृता पुनरचिदेवेति ।१।४।१६।

ननु कौषीतकीब्राह्मणे 'स वेदितव्य:' इति यो विधिस्तद्विषयवेदनविषयत्वं न परमेश्वरस्य, किन्तु प्राणस्य जीवस्य वेति तत्तल्लिङ्गकत्वादित्याशङ्कागर्भतत्समाधानसूत्रमाह—

जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ।१।४।१७॥

मुख्यप्राणश्च जीवश्चेति द्वन्द्वो लघ्वक्षरत्वात् पूर्व्वनिपातेन जीवमुख्यप्राणाविति तयोर्लिङ्गात् ज्ञापकात् 'एतेषां पुरुषाणां

कर्त्ता' इत्यत्र कर्त्तृरूपेण प्राणो लभ्यते इति शेषः लिङ्गञ्च 'यस्य चैतत् कर्म्म' इति कर्म्म च परिस्पन्दात्मकम् प्रसिद्धं तस्य हि प्राणाश्रयत्वम् ; नहि प्राणहीनः कायः परिस्पन्दते, वाक्यशेषे च 'अथास्मिन् प्राण एवैकधा भवति' इति प्राणशब्ददर्शनात्। बालाकिना पुरस्तादभिहिताः 'आदित्ये पुरुषश्चन्द्रमसि पुरुषः' इत्येवमादयः पुरुषास्तेषामपि प्राण एव कर्त्ता, प्राणावस्थाविशेषत्वात्तेषाम्. 'कतम एको देव इति प्राणः' इति (बृ० ३।६।६) श्रुत्यन्तरात् । यदि च 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' इत्याद्युपदर्शितश्रुतौ 'आत्मा वा अरे द्रष्टव्यः' इति जीवस्य वेदनविधिः, तदेकवाक्यत्वसम्भवे प्राणवेदनविधिः पृथङ् नावकल्पनीयः इत्युच्यते वाढम्, जीव एवास्त्वत्र वेदनविधिविषयः, कर्म्म च धर्म्माधर्म्मलक्षणं तस्य प्रसिद्धं लिङ्गम् । वाक्यशेषे च जीवलिङ्गमवगम्यते—तद् यथा, पुरुषाणां कर्त्तुर्वेदनायोपेतं बालाकिं विवेदयिषोरजातशत्रोः सुप्तपुरुषमाहूयाहूयाप्यश्रुतशब्दं दर्शयित्वा प्राणादीनामभोक्तृत्वप्रतिपादनपूर्वकं यष्टिघातेनोत्थाप्य तदतिरिक्तस्य जीवस्य भोक्तृतया प्रतिपादनम् । यदि प्राणस्यैव विषयभोगात्मकज्ञानविशेषोऽभविष्यत् व्यक्तप्राणोऽसौ आह्वानशब्दमवश्यमश्रोष्यदिति । उद्बुद्धश्चान्यः स एव जीवो भोक्ता चेति । एवं श्रुतिप्रदर्शितौ जीवस्य प्रबोधाप्रबोधौ चिदचिदात्मकं ब्रह्म गमयतः । चिन्मात्ररूपत्वे तदभिन्नस्य जीवस्य नित्यप्रबोधोऽचिन्मात्ररूपत्वे नित्याप्रबोधो वा प्रसज्येत । परस्तादपि जीवलिङ्गं 'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते,

यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते, एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति' इति। इत्येवं लिङ्गात् प्राणित्वेनैव जीवे प्राणशब्दप्रयोगसम्भवाच्च। इति चेत = वेदनविधेर्ब्रह्मविषयत्वं नास्तीति—परैरुच्यते चेत्, तद्दूषयति नेत्यादिना न = नैतद् युक्तम्, 'तद् व्याख्यातम्' इत्ययमत्र हेतुः। व्याख्यातञ्च अनुगमाधिकरणे उपासात्रैविध्यादित्यादिना, तथाच प्राणाद्यालम्बनत्रैविध्यादुपासाया एव त्रैविध्यं नतूपास्यस्य, तस्यैक्यात्। अत्र स्वैक्यादर्शिना बालाकिनादित्यादिकमेकैकं ब्रह्म मन्वानेन प्रत्येकमुपास्यत्वमुक्तं नत्वेकस्येति तदाशयमवबुध्यमानेन तत्तदुपासनस्य स्वल्पफलकतामुक्त्वा मोक्षजनकज्ञानाविषयत्वप्रतिपादनेनाब्रह्मत्वन्तेषामवबोध्याजातशत्रुणा स निराकृतः, यदि बालाकेरैक्यदर्शनमभोत्स्यत, सोऽन्तर्यामिब्रह्मणादिशोपादेयवचनोऽभविष्यत्। यथा तदधिकरणविचार्य्यश्रुतौ जीवलिङ्गे मुख्यप्राणलिङ्गे च सत्यपि प्राणशब्दस्य ब्रह्मपरत्वं व्यवस्थापितं तथात्रापि प्राणशब्दो ब्रह्मपरः 'प्राणबन्धनं हि सोम्य मनः' इति श्रुतेः। तस्यैव च वेदनविधिविषयत्वमित्याशयः ।१।४।१७।

मतान्तरेण वेदनविधेर्ब्रह्मपरत्वं दर्शयति—

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ।१।४।१८।।

'तु'कारः पक्षान्तरद्योतकः। 'जैमिनिः' = जैमिनिनामाचार्य्यः 'प्रश्नव्याख्यानाभ्याम्' = प्रश्नतदुत्तरवचनाभ्याम्

'अन्यार्थम्'=जीवमुख्यप्राणाभ्यामन्यद् यत् तदर्थं तद्ब्राह्मणमिति मन्यत इति शेषः, 'एके'=वाजसनेयिनोऽपि 'एवं च'=एवमेव पठन्तीति शेषः। प्राणादिव्यतिरिक्तो हि जीव इति बालाकिं प्रतिबोधयन्नजातशत्रुः पप्रच्छ—'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदागात्' एतदुत्तरमप्रतिपद्यमाने बालाकौ स्वयमेवाजातशत्रुराह—'यदा सुप्तः स्वप्नं कञ्चन न पश्यत्यथास्मिन् प्राण एवैकधा भवति' इत्याद्युक्त्वा 'एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' ( कौ० ब्रा० ४।१८,१९ ) इति। अस्याः श्रुतेः श्रुत्यन्तरसंवादी पिण्डितार्थस्तु—शयनं स्वापः प्रबोधश्चेत्यवस्थात्रयस्य स्वरूपं ब्रह्मेति बुबोधयिषया पृष्टवानजातशत्रुः स्वयमेव व्याचचक्षे—साकारब्रह्मणो रूपवाहिनीषु हिताख्यासु नाडीषु यज्जीवस्य गमनं तच्छयनं तदवस्थः साकारब्रह्मसाधनजनितप्रत्यासन्नसिद्धिविरहितो जीवो न तत्तद्रूपं विविक्तं पश्यति, पश्यति तु अविविक्तं विमिश्रम्; यथा घटादिज्ञाने, सत्यपि चिन्मयब्रह्मसम्बन्धे, विविक्ततया न तदवभासते किन्त्वविविक्ततया घटादिना,—एवमियं तस्य स्वप्नावस्था। यस्तु साधकः प्रत्यासन्नसिद्धिः, स स्वप्नसुषुप्त्योः सन्धौ विविक्तमेव स्वेष्टदेवताज्योतिर्म्मयरूपं पश्यति। ततश्च सुषुप्तिः स च निर्व्विशेषब्रह्मणैकीभावः, सुषुप्तेः स्वरूपमिदं प्राण एकधा भवतीत्यस्य विशिष्टोऽर्थः, अत्र प्राणशब्दस्तु ब्रह्मपरः, उभयत्र कार्य्यभूतानामेतदुपादानकोत्था-

नानां प्राणान्तराणां श्रवणात्, अनन्तरं प्रबोधो जाग्रदवस्था नाम, जीवस्य तस्माद् ब्रह्मैकीभावाद् भ्रंशः; यत्र प्राणानां पञ्चधा-वृत्तिरिन्द्रियाणां व्यापारवत्त्वं विषयभोगश्चेत्यवस्थात्रयेऽपि जीवस्य येन सम्बन्धः स्वापे च जीवस्यापि यद्रूपं तद्ब्रह्मेति बोधनाय बालाकिं प्रत्यजातशत्रोः प्रश्नात् स्वयमेव च तद्व्याख्यानाद् ब्रह्मवेदनार्थमिदं ब्राह्मणम्, ब्रह्मैव वेदनविधिविषयः। ननु नात्र ब्रह्मपदं साक्षात् श्रूयते, श्रूयते तु प्राण एव; अचिति पञ्चवृत्तेः प्राणस्य वृत्तिविलोपेनैकत्वं श्रुतिर्गमयतीति शङ्का माभूदित्येतदर्थमाह सूत्रे 'अपि चैव मेकं' इति 'अपिः' भिन्न-क्रमः, तेन एकेऽपीत्यन्वयः, 'चैवम्' इति निपातयोर्व्युत्क्रमेणा-न्वयः एवञ्चेति, चोऽवधारणे एवमेवेत्यर्थः, आवयन्तीति शेषः। सा च श्रुतिः 'य एष विज्ञानमयः पुरुषः क्वैष तदाभूत् कुत एतदागात्' ( बृ० २।१।१६ ) इति प्रश्ने स्वयमेव तदुत्तरवचनमजातशत्रोः, 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्-च्छेते' अन्तर्हृदय आकाश इति बहिराकाशव्यावृत्त्या ब्रह्मैव गमयति 'दहरोऽस्मिन्नन्तराकाशः' ( छा० ८।८ ) इति श्रुत्य-न्तरेण तथैव प्रतीतेः। स्वप्नसुषुप्त्योः सन्धौ स्वेष्टदेवतारूपदर्शनं तु 'परं ज्योतिरुपसंपद्य' इति (छा० ८।३।४) श्रुत्यैकवाक्यत्वानु-रोधेन विवरणविषयोक्तमित्यन्यदेतत्। तस्माद् बालाकिश्रुतिर्ब्रह्म-वेदनविधिबोधिका न प्राणं न वा जीवं वेदनविधिविषयत्वेन बोधयतीति स्थितम्। ननु 'मान्त्रवर्णिकमेव च गीयते' इति सूत्रे 'ब्रह्मविदाप्नोति परम्' इत्युपक्रान्तब्रह्मणश्चिदचिदात्मकत्वं

साधितमस्ति च तस्यार्थवादाक्षिप्तवेदनविधिविषयत्वं तत्कथम-त्राशङ्का समुदतिष्ठत येन जगद्वाचित्वाधिकरणमारचितम्? इति चेत्, ब्रह्मपदस्य भूयसा पुरुषपरत्वेऽप्यत्र बृहत्त्वयोगाद् ब्रह्मशब्देन प्रकृतिरुच्यते 'मम योनि महद्ब्रह्म' इति गीतायामतएव तथा-प्रयोगः, तस्या विपश्चित्त्वञ्च वृत्ति ज्ञानस्य सात्त्विकपरिणाम-रूपतया तदाश्रयत्वेन—एवं प्रकृतेरुपक्रमः, सत्यमिति तस्या एव नाम, स्वरूपतोऽविनाशित्वेन 'यत् सत् तदमृतम्' इति, परि-णामानां क्षणिकत्वेन 'यत् ति तन्मर्त्त्यम्' इति, 'यद्द्वयं तेनोभे यच्छति'—इति सत्यनामनिरुक्तौ श्रुतिवाक्यपर्य्यायात्; अत्र यच्छति इत्यस्य संयच्छतीत्यर्थकतया संबध्नातीति तात्पर्य्येण च आश्रयाश्रयिभावेन तयोरुभयोः सम्बन्धित्वात् आश्रयाश्रयि-भावस्य च तदुभयाव्यतिरेकात्। 'तस्माद् वा एतस्मादात्मनः' इत्यत्र च तस्मादिति तत्पदं प्रकृतं यत् प्रकृत्याख्यं ब्रह्म तत्परम्; एतस्मादिति न तत्सामानाधिकरण्येन प्रयुक्तं किन्तु आत्मनः सामानाधिकरण्येन, तस्मात् प्रकृत्याख्याद् ब्रह्मणः उपादानभूताद् एतस्मादात्मनः पुरुषाख्यात् निमित्तभूतात् तं निमित्तीकृत्येति ल्यब्लोपे पञ्चमी वा—आकाशादेरुत्पत्तिः। अतएव हिरण्मयकुण्डलादेर्हिरण्यत्वमिव अन्नस्य ब्रह्मत्वमुपपा-दयितुं 'तस्माद् वा एतस्मादाकाश' इत्याद्युपन्यस्तम्, तस्य च विकारत्वेन अनन्तत्वाभावात् न मुख्यं ब्रह्मत्वम् अतस्तत्क्रमेण मुख्यं ब्रह्मत्वं प्रकृतेरुपदर्शयितुं "प्रियमेव शिरः" इत्यादिकं "ब्रह्मपुच्छं प्रतिष्ठा" इत्युत्तरवाक्यम्। प्रियमोद-प्रमोदानां

सत्त्वपरिणामानाम् आनन्दस्य च सत्त्वरूपस्य तत्रैव सम्भवात्; नच कथमेतत् सम्भवति ? आनन्दस्य आत्मतया उक्तत्वात्, इति वाच्यं "महानात्मा" इतिश्रुतेः बुद्धेरेव आत्मतयाऽोक्तत्वात्। तदेषां 'कार्य्यकारणभूतानां' त्रिगुणा प्रकृतिरेव आश्रयः इत्याह श्रुतिः 'ब्रह्मपुच्छं प्रतिष्ठा' इति। तदेव प्रस्तुतं प्रकृत्याख्यं ब्रह्म "असद्वा इदमग्र आसीदित्यनेनोक्तम्," इति सांख्यप्रत्यवस्थानं न निराकृतपूर्व्वमतो बालाक्यधिकरणापराख्यं जगद्वाचित्वाधिकरणम्।

बालाकिश्रुतौ पुरुषाणां कर्त्तेति चिदचित्सम्बन्धबोधनादसन्मात्रत्वमेव तस्य निषिद्धं तद्रूपेण च ब्रह्मनिरूपेता निन्दित इति बोध्यम्। शरीरादिकं प्राणान्तं सर्व्वमेव जडम्, तदन्यः कश्चित् चेतनः, स एव पुरुषः, प्रकृतेस्तु महदादिक्रमेण जडात्मकं सर्व्वमेव जगदुत्पद्यते, 'पुरुषस्य न कर्त्तृत्वं, नवा प्रकृतिकार्य्यत्वम्' इति सांख्यसिद्धान्तः। यः पुरुषाणां कर्त्ता तस्यैव कार्य्यभूतं जगदिति तु सर्वथा सांख्यसिद्धांतविरुद्धम् यदेव विरुद्धं स जगद्वाचित्वाधिकरणार्थः तेन सांख्यसिद्धान्तस्य तैत्तिरीयश्रुतिमूलकत्ववादोऽपि निरस्तः। न च पुरुषाणां कर्त्तेत्यत्र पुरुषपदं—शरीरपरं तदुत्पत्त्यनुकूलकृतिमत्वाच्च प्रकृतेस्तत्कर्त्तृत्वं जगत्कार्य्यकत्वञ्च नानुपपन्नमिति वाच्यं आदित्ये चन्द्रमसि विद्युतीत्याद्याधारस्य शरीरस्थानीयतया तदवच्छिन्नचेतनस्यैव पुरुषपदेन ग्रहणस्यौचित्याज्जडमात्रस्य शरीरस्य ब्रह्मत्वं हालिकजनकथनीयम् अनूचानमानी गार्ग्यो बालाकिः कथमभिदध्यात् कथं वा

तदजातशत्रुः स्वोपास्यत्वेन प्रतिपद्येत तस्मात् सार्थकोपन्यासमेतदधिकरणमिति सिद्धम् १।४।१८।

अयमेवार्थः सर्व्ववेदान्तानामिति प्रतिपिपादयिषुः परैः प्रमाणतयोपन्यस्तं मैत्रेयीब्राह्मणमधिकृत्य सूत्रयति।

( वाक्यान्वयाधिकरणम्—६। )

## वाक्यान्वयात् ।१।४।१९॥

'न वा अरे पत्युः कामाय पतिः प्रियो भवति' इत्यादि= मैत्रेयीब्राह्मणे जीवात्मनो वेदनविधिविषयत्वं लभ्यते न परमात्मनः इति यदुक्तं तदनेन परिह्रियते। 'आत्मा वा अरे द्रष्टव्यः' इत्यादिविधिर्ब्रह्मविषय एव न तु जीवात्मविषयः, कस्मात्— 'वाक्यान्वयात्'=वाक्यानाम्—अन्वयः, वाक्यान्वयः, तस्मात्; वाक्यानि—मैत्रेयीब्राह्मणस्य प्रथमोत्तरीभूतावयवाः, तेषां वाक्यानामन्वयः=एकविशिष्टार्थप्रतिपादकत्वम्। तानि च वाक्यानि 'अमृतत्वस्य तु नाशाऽस्ति वित्तेन' इति याज्ञवल्क्यवचनमाकर्ण्य 'येनाहं नामृता स्याम् किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूहि' इत्यमृतत्वमभिलषन्त्या मैत्रेय्या प्रार्थितस्य याज्ञवल्क्यस्योपदेशः तस्य परमात्मवेदनार्थत्वमेव युक्तम्। यतः 'तज्जलानिति शान्त उपासीत' इति 'यदा पश्यः पश्यते रुक्मवर्णम्' इति 'यमेवैष वृणुते तेन लभ्यः' इति 'तमेव विदित्वातिमृत्युमेति' इत्याद्याः श्रुतयः, 'मामेव ये

प्रपद्यन्ते मायामेतां तरन्ति ते' इत्याद्याः स्मृतयश्च परमात्मोपासनाख्यात् परमात्मवेदनादमृतत्वं ब्रुवते। उपासनविशेषैर्वेदनविशेषैश्च यदनन्यत्वं तदुपपादितमधस्तात्। किञ्च 'ब्रह्म तं परादाद् योऽन्यत्रात्मनो ब्रह्म वेद' इत्यादिना सर्वविज्ञानं यद्विज्ञानेनोच्यते तेन हि परमात्मवेदनेनैव भवितव्यम्, परमात्मनः सर्वप्रकृतित्वादुपपादयिष्यते च विशेषेणेदमग्रिमाधिकरणे। 'अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदः' इत्यादिश्रुतिरिदंपदार्थस्य प्रकृतस्यात्मनो नामरूपप्रपञ्चकारणत्वमभिदधती तस्य परमात्मत्वमेव स्पष्टीकरोति। एवम् एकायतनप्रकरणं सर्वप्रपञ्चस्य एकायतनतया तमन्तरेण कमन्यं गमयेत् उपादानं हि एकायतनम्, इति सर्वैरभ्युपगम्यते, अतस्तदुपक्रान्तदर्शनश्रवणादिकं तस्यैव विधीयते नतु जीवात्मनः। तस्यैव सर्वाधिकप्रियत्वेनानन्दरूपतासाधनाय प्रियनिमित्तावबोधनमिति ध्येयम्।१।४।१९।

अत्रैव विषये मतान्तरेण युक्त्यन्तरमाह—

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः।१।४।२०॥

'आश्मरथ्यः' = तन्नामा आचार्य आहेति शेषः, किमाह ?—'प्रतिज्ञासिद्धेर्लिङ्गम्' इत्यस्य, 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' इत्याद्युपक्रमवाक्यम् इत्यादिः। 'न वा अरे' इत्याद्युपक्रमवाक्यं प्रतिज्ञासिद्धेर्लिङ्गमिति आश्मरथ्यनामाचार्य आह—इति अन्वितवाक्यार्थः। 'प्रतिज्ञासिद्धेः' =

'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति' इति 'आत्मैवेदं सर्वम्' इति वा या प्रतिज्ञा तस्याः, सिद्धेः—प्रमितार्थप्रतिपादकतायाः, 'लिङ्गम्'=ज्ञापकम्। साङ्ख्यमत इव आत्मनानात्वे परमात्मनामकस्यात्मविशेषस्य ज्ञानेऽपि न सर्वविज्ञानं न वा तस्य सर्वस्वरूपत्वमतः प्रदर्शितायाः प्रतिज्ञायाः प्रमितार्थप्रतिपादकता न स्यात् तन्माभूदित्येतदर्थं परमात्मजीवात्मानन्यत्वप्रदर्शनाय जीवात्मनः प्रक्रमः। एतेन सांख्यसम्मतो नानात्मवादोऽपि निरस्तः ।१।४।२०।

अत्र औडुलोम्याचार्यमतमाह—

उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ।१।४।२१।।

'उत्क्रमिष्यतः'=उत्क्रमणप्राक्क्षणावच्छिन्नस्य विदुष इति शेषः। 'एवम्भावात्'=एवम्परमात्मरूपतया यो भावः तत्प्राप्तिपर्यवसायिनी भावना, तस्मात् तमभिप्रेत्य इति ल्यब्लोपे पञ्चमी, हेतौ वा प्रयोजकत्वञ्च तदर्थः। जीवात्मपरमात्मनोर्द्वयोरेव तत्रोपयोगात् मैत्रेयीब्राह्मणेऽपि द्वयोः प्रवेशः, पर्यवसानन्तु परमात्मन्येव; तथाहि मन्त्रवर्णः—'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं यान्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद् विमुक्तः परात्परं पुरुषमुपैति दिव्यम्।' (मुण्डक० ३।२।८) स्मृतिश्च 'यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्। तन्तमेवैति' इति। एवञ्च उत्क्रमिष्यत इति सूत्रे भविष्यत्कालनिर्देशः सूपपन्नः। अयं भावः, जीवस्य परमात्म-

भेदस्वाभाव्ये कदाचिदपि तद्भावापत्तिर्न भवितुमर्हति स्वभावस्थानपायित्वात् अतस्तद्भेदो न स्वाभाविकः किन्त्वौपाधिकः, अभेदः खलु स्वाभाविकः—इत्येतदवगमयितुम् उपक्रमवाक्ये जीवलिङ्गमुक्तम् ।१।४।२१।

कासकृत्स्नाचार्यमतमाह—

अवस्थितेरिति कासकृत्स्नः ।१।४।२२।।

परमात्मन इत्यादिः, 'अवस्थितेः'=अवस्थितिविशेषात्—जीवभावेनावस्थितेः, उपक्रमे जीवलिङ्गोपन्यासः इति प्राकरणिकं विधेयम् । कासकृत्स्न आचार्य इत्याह । इतिशब्दो वा जीवलिङ्गोपन्यासार्थकः, स च लुप्तद्वितीयान्तः । तथा च परमात्मनो जीवभावेनावस्थानाद् उपक्रमश्रुतौ जीवलिङ्गोपन्यासं कासकृत्स्न आचार्य आह इत्यर्थः । 'सदेव सोम्येदम्' इति परमात्मानमुपक्रम्य 'अनेन जीवेनात्मनानुप्रविश्य' इति-च्छान्दोग्यश्रुतेः परमात्मन एव जीवभावेनावस्थितिः सिद्ध्यति तस्माद् यद् जीवलिङ्गमुच्यते तदेव परमात्मनो लिङ्गमिति तात्पर्यम् ।१।४।२२।

नन्वेवं चिन्मात्ररूपं ब्रह्मेति सिद्धान्तो वेदान्तस्य, तस्यैव सांख्यमते पुरुषसंज्ञा, इत्येकत्वमेव मतद्वयस्य; न च पुरुषनानात्वं सांख्यसम्मतं वेदान्तस्य तु ब्रह्मण एकत्वमिति महद् वैषम्यम् इति वाच्यम् । एकशब्दस्य एकजातीयार्थकतया वैषम्यपरीहारात्, जीवब्रह्मणोरैक्यमप्येकजातीयत्वेन, 'तदेवौपधम्' 'स

एवायं गकारः' इत्यादौ व्यक्तिभेदस्थलेऽपि तथा प्रयोगादितीमं वादं निरसितुमधिकरणान्तरमाह—

( प्रकृत्यधिकरणम्—७ । )

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । १।४।२३॥

या खलु शक्तिरस्मत्सिद्धान्ते ब्रह्मेति परमात्मेति वा परमेश्वर इति वा परमेश्वरीति वा संज्ञायते सा न केवलं पुरुषः, किन्तर्हि ? 'प्रकृतिश्च'=प्रकृतिरपि—अनुपादानकत्वे सत्युपादानभूतापि, भवतीति शेषः। कुतः ? 'प्रतिज्ञादृष्टान्तानुपरोधात्'=प्रतिज्ञा च दृष्टान्तश्च तयोरनुपरोधः व्याघाताभावः तस्मात्। एकविज्ञानेन सर्व्वविज्ञानं छान्दोग्ये प्रतिज्ञातम्, यदि ब्रह्मणः प्रकृतित्वं न स्यादियं प्रतिज्ञा व्याहन्येत, सांख्योक्तपुरुषवत्तस्य चिन्मात्रत्वे तस्य निर्व्विकारतया प्रकृतित्वायोगात् तद्विज्ञानेन सर्व्वविज्ञानासम्भवात्। ननु 'त्रिभुवनज्ञानं सूर्य्ये संयमात्' इति योगसूत्रादप्रकृतिभूते सूर्य्ये संयमादपि त्रिभुवनज्ञानवदप्रकृतिभूतेऽप्यात्मनि विज्ञाते तद्बलात् सर्व्वविज्ञानस्यानुपपत्त्यभाव इत्याशङ्क्याह—दृष्टान्तेति। दृष्टान्तः= यथा 'सोम्यैकेन मृत्पिण्डेन सर्व्वं मृन्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति, मृद्विज्ञानात् सर्व्वमृन्मयविज्ञानवद् यद्विज्ञानेन सर्व्वविज्ञानम्, तथा खलु मृन्मयस्य मृदेव सर्व्वस्य प्रकृत्या भाव्यम्, अन्यथा दृष्टान्तो व्याहन्येत, तस्मात् पुरुषप्रकृत्युभयरूपत्वमेकस्याः

शक्तेरित्याशयः। ननु पुनरुक्तमिदं समन्वयाधिकरणस्येति चेन्न, विचारार्हश्रुतिप्रयोजनयोर्भेदेन पौनरुक्त्याभावात्। तत्र हि 'यो ब्रह्माणं विदधाति पूर्व्वम्' इत्यत्र यत्पदार्थः किं चिद्रूपः किमचिद्रूपः किं वा चिदचिदुभयरूपः? इत्यादिसंशयोत्थापितपूर्व्वपक्षनिरासेन ब्रह्मलक्षणनिरूपणं प्रयोजनमासीत्, अत्र तु 'ब्रह्मविदाप्नोति परम्' इति श्रुतिस्थब्रह्मपदं चिन्मात्रपरं चिदचिदुभयपरं वेति संशयोत्थापितपूर्व्वपक्षनिरासेन चिदचिदुभयात्मकत्वप्रतिपादनात् सांख्यमतनिरासः प्रयोजनमिति भेदः ।१।४।२३।

नन्वेवं कर्त्तृत्वमनुपपन्नम्, मृद्वा कपालं वा घटप्रकृतिः कर्त्ता च कुलाल इति हि भेदो दृश्यते लोके; इत्याशङ्कां निरसितुं कर्त्तुः प्रकृतेश्चान्यत् कालादिकमपि निमित्तकारणतयाऽभ्युपगम्यते तत्र च सिद्धान्तमुपदर्शयितुं सूत्रयति—

## अभिध्योपदेशाच्च ।१।४।२४।।

'अभिध्योपदेशः' = अभि उभयतः पूर्व्वमुत्तरञ्च ध्यायन्ति ये ते कर्त्तरि कप्रत्ययात् अभिध्याः, तेषामुपदेशः—तत्सम्बन्धो मन्त्रवर्णः, तस्मात्; ब्रह्मणः कर्त्तृत्वं प्रकृतित्वं चकारात् कारणान्तरत्वञ्च सिध्यतीति शेषः। स च यथा 'ब्रह्मवादिनो वदन्ति' इत्युपक्रम्य 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्' इति; अत्र ध्यानस्य पूर्व्वप्रकार उक्तः, 'ते ध्यानयोगानुगता अपश्यन्

देवात्मशक्तिं स्वगुणैर्निगूढाम् । यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः' इति च अयमत्रोत्तरः प्रकारः । सिद्धान्तश्चायमेव; तथा च भेददर्शिभिरभ्युपगतेषु पृथक्कारणेषु एका ब्रह्मरूपा शक्तिरेवानुगमयन्ती भवति, या हि एककार्य्यानुकूला चिदचिदुभयपर्य्याप्ता सत्तेति प्रागुक्तम्, तेन रूपेण ब्रह्मणः कार्य्यसामान्ये प्रकृतित्वं कर्त्तृत्वं तदतिरिक्तकारणत्वञ्चेति । भूतानीति प्रकृतित्वं पुरुष इति कर्त्तृत्वं कालादिकञ्चेति यथासम्भवं निमित्तत्वं ब्रह्मतत्त्वानभिज्ञप्रसिद्ध्यनुसारेण ख्यातपूर्व्वम् उत्तरत्रैकस्मिन् ब्रह्मण्येव संस्थापितम् इति भावः ।१।४।२४।

ननु सर्वकार्य्यप्रकृतित्वमेकस्मिन् ब्रह्मणीत्ययुक्तम्, कार्य्याणां मिथो वैलक्षण्यादेकप्रकृतिकत्वे सर्वेषामैकरूप्यप्रसङ्गात्, इत्यतः सूत्रयति—

## साक्षाच्चोभयाम्नानात् ।१।४।२५॥

'साक्षात्'=प्रत्यक्षश्रुत्या, 'उभयस्य'=परस्परविरुद्धरूपद्वयस्य, 'आम्नानात्'=अभ्यासेन ब्रह्मप्रकृतिकत्वेन ब्रह्माभिन्नतया कथनात्, तथा च श्रूयते 'सच्च त्यच्चाभवत्, निरुक्तञ्चानिरुक्तञ्च, निलयनञ्चानिलयनञ्च, विज्ञानञ्चाविज्ञानञ्च, सत्यञ्चानृतञ्च', इति (तै० २।६) यथा हि वह्निजलयोः परस्परविरुद्धयोरपि द्रव्यत्वेनाभेदस्तद्वत् । तस्मिन्नेकत्र कारणतानियामकयोः सकलकार्य्यनिरूपितान्वयव्यतिरेकविशेषयोः समावेशादिति तात्पर्य्यम् ।१।४।२५।

ननु द्रव्यस्य नानास्वरूपस्य वह्नित्वेन च जलत्वेन च सामा- नाधिकरण्यप्रतीतिरबाधितैव युज्यते, ब्रह्मणस्त्वेकरूपस्य नाना- कार्यप्रकृतित्वेन नानाभावः कुतो न तत्स्वरूपबाधक इत्याश- ङ्कायामाह—

## आत्मकृतेः परिणामात् ।१।४।२६।।

'आत्मकृतेः'=आत्मकृतिरूपात् आत्मकृतिविशेषजन्याद्वा 'परिणामात्'=परिणामविशेषात् एकस्यैव नानाभावसिद्धेरिति शेषः। यथैकमेव क्षीरं मिथो विरुद्धरूपरसानां किलाटदध्या- दीनां प्रकृतिः यथा वा मृदेव घटशरावकाचहीरकादीनां मिथो विरुद्धरूपाणां प्रकृतिर्भवति तद्वत्, इत्याशयः। एतेनापरि- णामिनश्चिन्मात्रस्य ब्रह्मत्वं निराकृतं वेदितव्यम् ।१।४।२६।

परिणामे प्रमाणान्तरं दर्शयितुं सूत्रयति—

## योनिश्च हि गीयते ।१।४।२७।।

'हि'=यतः, 'योनिः'=योनिशब्दः, 'गीयते' पठ्यते। चकारो विचारसमाप्तिद्योतकः। न ह्यपरिणामिनी योनिर्भवति प्रसिद्धं हि लोके 'पृथिवी योनिरोषधिवनस्पतीनाम्', न ह्येवं रज्जुर्योनिः सर्पस्येति। योनिशब्दपाठश्च 'पुरुषं ब्रह्मयोनिम्' (३।१।३) 'तद्भूतयोनिं परिपश्यन्ति धीराः' (मुण्ड० १) इत्येवमादौ। तस्माद् ब्रह्मणि अचिदवच्छेदेन परिणामः, चिदवच्छेदेनापरिणामित्वेऽपि चिदचिदुभयत्वसामानाधिकर-

न्येन परिणामित्वं कर्त्तृत्वं कारणान्तरत्वं च नानुपपन्न-मिति भावः ।१।४।२७।

उपसंहरति—

( सर्वव्याख्यानाधिकरणम्—८ । )

## एतेन सर्व्वे व्याख्याता व्याख्याताः ।१।४।२८।।

सर्वाः श्रुतयो ब्रह्मनिरूपणपरा नवेति संशयः, न ब्रह्मनिरू-पणपराः, कर्म्मणोऽपि निरूपणादितिपूर्वपक्षे,—उत्तरम्—सर्वे व्याख्याता इति । सर्वमेव श्रुतिविहितं ब्रह्मनिरूपणान्तर्गत-मेव । तथाहि—

'एतेन'='जन्माद्यस्य यतः' इत्यारभ्य 'योनिश्च हि गीयते' इत्यन्तेन सूत्रजातेन, 'सर्व्वे'=निरूपणघटकप्रतिपत्तिविषयाः लक्षणस्वरूपप्रमाणफलावच्छेदाख्याश्चत्वार एव, 'व्याख्याताः'= विशेषेण आख्याताः, 'व्याख्याताः' इत्यस्य द्विरावृत्तिरध्याय-समाप्तिसूचिका । तत्र 'जन्माद्यस्य' इति लक्षणम्, 'समन्वयात्' इति स्वरूपम्, 'ईक्षतेर्नाशब्दम्' इति प्रमाणम्, स्वाप्ययाधिकरण-मारभ्य फलावच्छेदः । स च फलानां मुख्यगौणानां भोगस्वर्गमोक्षतदुपायभूतोपासनानां अवच्छेदो भेदः, स चा-धिकारिभेदप्रयुक्तः । मोक्षस्य फलत्वं न्यायमते समवायस्य व्यापारत्ववत् स्वैमं ज्ञेयम् । तेन मोक्षस्य नित्यत्वेऽपि न तस्यासंग्रहः । शास्त्रतो गुरुवचनाद्वा ब्रह्म प्रतिपद्यमानानां केषाञ्चित् सकामाधिकारिणां भोगश्च स्वर्गश्च, केषाञ्चित्

विषयकामनारहितानामुत्तमानां तेनैव साधनेन तत्त्वज्ञानं फलं भवति ततश्च मोक्षः । उत्तमाधिकारिणान्तु योगिनां श्रवणादिनिदिध्यासनान्तेन उपासनविशेषेण प्रतिबन्धके तिरोहिते योऽयं चरमब्रह्मसाक्षात्कारः, तेन निवर्त्तिते संसारहेतौ मोहे भेषजादिभिरान्ध्यापगमे सूर्य्यस्येवावस्थितस्यैवाविहितस्वरूपस्यात्मलक्षणब्रह्मणः प्रकाशो मोक्ष इत्युच्यते । स च निरतिशयानन्दो ब्रह्मणो नातिरिच्यते । 'तन्निष्ठस्य मोक्षोपदेशात्' इत्यनेन तादृशो मोक्ष उक्तः । साकारब्रह्मोपासनमपि ब्रह्मज्ञानफलम् परमिदं ब्रह्मज्ञानं न चरमब्रह्मसाक्षात्कारलक्षणम्, किन्तु श्रवणमनन-निदिध्यासनानामन्यतमं ततश्चोपासनम्, ततः शक्तेः कृपालाभः, ततश्च मोक्षप्रकाशकतत्त्वज्ञानं वा स्वर्गो वा भोगो वेति फलावच्छेदसंग्रहः । एतेषामुपपत्तिबाधकनिरासश्च 'व्याख्याताः' इत्यनेन ज्ञापितौ । इदमेव विशेषाख्यानस्य तात्पर्य्यम् । तथाच सर्वाः श्रुतयो ब्रह्मनिरूपणपरा इत्यध्यायार्थः । व्याख्याता इत्यन्तिमपदद्विरुक्तिरध्यायसमाप्त्यर्था, तथैव शिष्टाचारात् । व्याख्याता इत्युक्त्या भगवतो बादरायणस्य ब्रह्मजिज्ञासुं शिष्यं प्रति दयमानस्य किं च भूयो ज्ञातव्यमस्तीतीङ्गितं सूचितम् । अग्रिमाध्यायप्रथमप्रश्नोत्थितिबीजमिदं वचनमिति हृदयम् ।१।४।२८।

## शक्तिभाष्योक्ततत्त्वसंक्षेपः ।

निस्या विलक्षणा सत्ता सा शक्तिर्ब्रह्म चोच्यते ।
चिदचिद्रूपपर्य्यासा न तु सा भिद्यते ततः ॥

तन्मूलं हि जगत् सर्व्वं शिवशक्त्यन्वयाभिधा ।
सोच्यते प्रतिबोधाय या वाङ्मनसगा न हि ॥
एकैव सा ज्ञानबलक्रियारूपा सनातनी ।
चिन्मात्रसत्ताऽचिन्मात्रसत्ता च व्याप्यते तयो ॥
पृथग्भूताप्यभिन्नास्ति नीरक्षीरयुतिर्यथा ।
चिन्मात्रकोटी कूटस्थं चैतन्यं केवलः शिवः ॥
देवादिस्थावरान्तेषु जीवेष्वन्यत् प्रकीर्त्तितम् ।
बिम्बं कूटस्थचैतन्यं प्रतिबिम्बं तथेतरत् ॥
अचिन्मात्रदिशि ख्याता मूलप्रकृतिरीश्वरी ।
शुद्धविद्या च माया च तद्भेदः परिकीर्तितः ॥
महत्तत्वादिभूतान्तसर्गः सांख्यनयोदितः ।
चिन्मात्रसत्ता या प्रोक्ता या चाचिन्मात्रगोचरा ॥
सत्ता तद्द्वयमेवैतन्मूलशक्तेर्न भिद्यते ।
मूलशक्तिर्निराकारा पूर्णानन्दमयी शिवा ॥
उपासकेषु कृपया साकारा सापि वर्त्तते ।
उमा दुर्गादिरूपेण मातृभावादुपास्यते ॥
उपासकानां श्रद्धादिभावात् तद्भेद इष्यते ।
इत्येवमस्मत्सिद्धान्ते ज्ञायतां तत्वसंग्रहः ॥

इति प्रथमे निरूपणाख्याये स्वरूपपरीक्षायां नाम चतुर्थः पादः ।

समाप्तश्चायमुत्तरमीमांसाशक्तिभाष्ये निरूपणाख्यः प्रथमोऽध्यायः ॥

---